यथा—

सुन्दरि सुन्दरिपौ नतिशालिनि किं कुरुषे
भामिनि मानिनि काममिदं हृदयं परुषे ।
हरिणि हारिणि ते हृदये निहितो दयितो
भाविनि भावि निवासि मनोऽस्य चिराय यतः॥ १७८ ॥

इति नीलम् ।

तूर्यतालपक्षिराजमेरुहारनायकेन
चामरध्वजेन चापि वर्णिता सुवर्णकेन ।
वर्णितातिसुन्दरेण पन्नगेन्द्रपिङ्गलेन
चञ्चला चकोरचारुलोचने सुमङ्गलेन ॥ १७९ ॥

यथा—

आलि याहि मञ्जुकुञ्जगुञ्जितालिलालितेन
भास्करात्मजाविराजिरम्यतीरकाननेन ।
शोभिते स्थले स्थितेन संगता यदूत्तमेन
माधवेन भाविनी तडिल्लतेव नीरदेन ॥ १८० ॥

इति चञ्चला ।

आदौ विद्युन्मालापादं दत्त्वा कर्णद्वन्द्वं हारं
ताटङ्कद्वन्द्वं गुर्वन्तं तद्ब्रह्माख्यं वृत्तं सारम् ।
नागाधीशेनोक्तं चैतत्सर्वस्वान्तानन्दाधारं
कृत्वा धीरः संप्राप्नोत्याकल्पं कीर्तिस्तम्भं सारम् ॥ १८१ ॥

यथा—

राजद्भालः स्फूर्जन्नेत्रप्रोद्यद्वह्निज्वालाजालैः
स्व····त्यम्भोवीचीनीरासारस्निग्धचूडाचन्द्रः ।
माद्यद्गौरीवक्त्राम्भोजस्वैरस्मेरक्रीडाशीतः
श्रेयो देयान्नागश्रेणीभूपामीपश्चन्द्रापीडः ॥ १८२ ॥

इति ब्रह्मवृत्तम् ।

१. इदं सोदाहरणं ब्रह्मवृत्तलक्षणं केवलं घ-पुस्तक एवोपलभ्यते.

अथ सप्तदशाक्षरं च्छन्दः—

पयोधरयुता स्फुरत्कनकयुग्मताटङ्किनी
सुवर्णरुचिकङ्कणा ललितभाववन्नूपुरा ।
सुगन्धरुचिरा लसच्छ्रवणरूपवत्कुण्डला
भुजङ्गपतिवर्णिता हरति हन्त पृथ्वी मनः ॥ १८३ ॥

यथा—

क्षताधरतटी घनश्वसितमङ्गरागव्ययो
दृशोरपि च शोणिमा भवति कारणादन्यतः ।
इदं तव परप्रियानिभृतसंगमव्यञ्जकं
मुखे यदिदमञ्जनं रहसि चार्धचन्द्रं गले ॥ १८४ ॥

इति पृथ्वी

द्विजवरगणान्वितो गजपतिश्रितस्तूर्यवा-
न्करतलपरिस्फुरत्कनककङ्कणेनान्वितः ।
सुरपतिगुरुश्रिया परिगतः समन्तात्सखे
जयति भुवि वृत्तभूपतिरैवर्णमालाधरः ॥ १८५ ॥

यथा—

क्वचिदपि वयस्यया सह विनोदमातन्वती
कतिपयकथारसैर्नयति वासरीयां रुजम् ।
सुभग तव कामिनी समधिगम्य सा यामिनी-
मनुभवति भाविनीं मदनवेदनामन्ततः ॥ १८६ ॥

इति मालाधरः ।

ध्वजः कर्णो हारौ द्विजवरगणस्थौ रसयुतः
समुद्रो रत्नं च प्रभवति यदा सप्तदशभिः ।
भुजङ्गेन्द्रोद्दिष्टा विबुधहृदयाह्लादजननी
रसैः रुद्रैर्यस्यां विरतिरिह सैषा शिखरिणी ॥ १८७ ॥

१. 'सुगन्धि' ग; 'सुवर्ण' घ. २. 'नरपति' घ. ३. 'रत्नं तु' घ. ४. 'स्तोमरयुतः' घ.
५. 'सरस' घ. ६ 'भवतिविरतिः सा' घ.

यथा—

निविष्टायाः कोपाद्गुरुसदसि पङ्केरुहदृशः
पदोपान्ते छायामुपनयति मूर्ध्नः प्रणयिनि।
तया चक्षुर्लीलाकमलरजसा दूषितमिति
द्रुतं मुक्ता मुक्ताफलपरिणता बाष्पकणिकाः॥ १८८॥

इति शिखरिणी

मन्दाक्रान्ता हरति हृदयं कर्णताटङ्कयुग्मा
प्रोद्यद्भावा करतललसत्कंकणा शङ्खयुक्ता।
हारोत्कृष्टा ललितवलया रावबन्नूपुरा या
विभ्राजन्ती सकलहृदयाह्लादिनी कामिनीव॥ १८९॥

यथा—

कर्णाभ्यर्णे हितमवहिता वर्णयन्तश्चिरेण
द्रागस्यन्तो हृदि कलुषतामानने शोणिमानम्।
यान्तो भूमिं नयनपयसां बिन्दवो मानवत्याः
पादाम्भोजप्रणतमरुना कान्तमुत्थापयन्ति॥ १९०॥

इति मन्दाक्रान्ता।

द्विजवरमुखी भास्वद्रूपा सकुण्डलकर्णका
ललितवलया हारोत्कृष्टा पयोधरभूषिता।
कनकरसनारावैर्युक्ता लसद्रवनूपुरा
हरति हरिणी केषां चित्तं न योषिदिवाधुना॥ १९१॥

यथा—

सुरभिरजनी याता भूयः कृशीभविता शशी
परभृतयुवा मूको भावी विरंस्यति पञ्चमः।
कुसुमविशिखः संहर्ता स्वं धनुः पतिरेष्यति
प्रियसखि परावृत्तं न स्यादृतं मम जीवितम्॥ १९२॥

इति हरिणी।

---

१. 'नूपुरान्वी संराजन्ती' घ. २. 'लसत्रवनूपुरा' घ.

अथाष्टादशाक्षरच्छन्दः—

आदौ कृत्वा कर्णं कुण्डलयुक्तं हारयुगं दत्त्वाथो
कुर्यात्ताटङ्कं पादं कुरु सन्मञ्जीरयुगाभ्यां युक्तम् ।
कृत्वा तातं कुन्तीपुत्रसमेतं वै गुरुयुग्मं दत्त्वा
**मञ्जीरा** सा नागाधीशनिसृष्टा राजति सैषा वक्त्रे ॥ १९३ ॥

यथा—

प्रौढध्वान्ते गर्जद्वारिदधाराधारिणि काले गत्वा
त्यक्त्वा प्राणानग्रे कौलसमाचारानपि हित्वा यान्ती ।
कृत्वा सारङ्गाक्षीसाहसमुच्चैः केलिनिकुञ्जं शून्यं
दृष्ट्वा प्राणत्राणं भावि कथं वा नाथ वद प्रेयस्याः ॥ १९४ ॥

इति मञ्जीरा ।

हारयुक्तसुवर्णकुण्डलपाणिशङ्खविराजिता
पादनूपुरसंगता सुपयोधरद्वयभूषिता ।
शोभिता वलयेन पन्नगराजपिङ्गलवर्णिता
**चर्चरी** तरुणीव चेतसि चाकसीति सुसंगता ॥ १९५ ॥

यथा—

कोकिलाकलकूजितं न शृणोषि संप्रति सादरं
मन्यसे तिमिरापहारि सुधाकरं न सुधाकरम् ।
दूरमुज्झसि भूषणं विकलासि चन्दनमारुते
कस्य पुण्यफलेन सुन्दरि मन्दिरं न सुखायते ॥ १९६ ॥

इति चर्चरी ।

ध्वजं चामरं गन्धकर्णौ रसः कुण्डलं तोमरं च
तथा तालताटङ्कतूर्याणि शेषे गुरुद्वन्द्वमत्र ।

---

१. 'गुरुम' घ. २. 'युतं' घ. ३. 'हृत्वा' घ. ४. 'त्यक्त्वा' घ. ५. 'कथ वा नो वदत प्रेयस्याः' घ. ६. 'यद्भूष' घ. ७. 'पिङ्गलपन्नगाधिप' घ. ८. 'सुन्दरि' घ. ९. 'मधसि' घ. १०. 'मन्दिरे न सुखायसे' घ.

तदा क्रीडया चिह्नितं चन्द्रमेतद्भुजंगाधिराजः
कविश्रेणिविस्मापकं सर्वलोकप्रियं संजगाद ॥ १९७ ॥

यथा—

भ्रमन्ती धनुर्मुक्तनाराचधारानिरुद्धे समस्ते
नभःप्राङ्गणे पक्षिवाय्वोः प्रयाते निरन्ते प्रशस्ते ।
तथा चण्डगाण्डीवबाणावलीनीचरक्षाविलक्षो
बभूवाङ्गराजो यथा न स्थितोऽसौ विपक्षस्वपक्षः ॥ १९८ ॥

इति क्रीडाचन्द्रः

अथैकोनविंशाक्षरच्छन्दः—

कर्णः कुण्डलसंगतः करतलं चामीकरेणान्वितं
पादान्तो रत्ननूपुरेण कलितो हारौ प्रसूनोज्ज्वलौ ।
गुर्वानन्दयुतो गुरुर्यदि भवेत्तत्रूनविंशाक्षरं
नागाधीश्वरपिङ्गलेन भणितं शार्दूलविक्रीडितम् ॥ १९९

यथा—

सौमित्रे किमु मृग्यते प्रतिलताकुञ्जं कुरङ्गेक्षणा
हन्तैतद्विपिने मनागपि न वा नेत्रातिथि[1]र्मैथिली ।
एणी निस्त्रपमीक्षते मधुकरश्रेणी समुज्जृम्भते
निःशङ्कं चमरी चरत्यपि निरातङ्कं पिकी गायति ॥ २००

इति शार्दूलविक्रीडितम्

द्विजवरगणयुगमुपधाय परिकलय कर-
मथ नगणयुगलमिह गन्धयुगमनु विहर[2] ।
फणिनृपतिभणितमिति चन्द्रमिदमिति शृणुत
सकलकविकुलहृदयमोदकरमवतनुत ॥ २०१ ॥

यथा—

अनुपहतकुसुमरसतुल्यमिदमधरदल-
ममृतमयवचनमिदमालि विफलयसि चल ।

---

१. 'भावाविभि' घ. २. 'विरह' ग; 'विरर' घ.

यदपि यदुरमणपदमीशमुनिहृदि लुठति
तदपि तव रतिवलितमेत्य वनतटमटति ॥ २०२ ॥

इति चन्द्रम् ।

द्विजवरगणतृ(त्रि?)तयमिह हि नगणयुगलकं
विमलवलयमपि च कलय सकलजनसुखम् ।
फणिपतिवरभणितममलधवलमिह हितं
विमलकविकुलहृदि कलितमिति भुवि वलितम् ॥ २०३ ॥

यथा—

उपगत इह सुरभिसमय इति सुमुखि वदे
निधुवनमधिसह पिब मधु जहि रुपमपदे ।
कमलनयनमनुसर सखि तव रभसपरं
प्रियतमगृहगमनमुचितमनुचितमपरम् ॥ २०४ ॥

इति धवलम् ।

कुरु पाणि कङ्कणयुग्मालंकृतमग्रे रत्नं हारं च
चरणं सन्नूपुरसंयुक्तं कुरु कर्णे भ्राजत्ताटङ्कम् ।
रसनामायोजय मञ्जीरद्वयमेवं शंभुं सद्वृत्तं
भुवि कान्तं गौरि चिरं संभावय तन्नागाधीशेनोक्तम् ॥ २०५ ॥

यथा—

जय मायामानवमूर्ते दानववंशध्वंसव्यापारी
बलमायद्रावणहत्याकारण लङ्कालक्ष्मीसंहारी ।
कृतकंसध्वंसनकेर्माशंसन गोगोपीगोपानन्दी
बलिलक्ष्मीनाशन लीलावामन दैत्यश्रेणीनिष्कन्दी ॥ २०६ ॥

इति शंभुः ।

अथ विंशत्यक्षरच्छन्दः—

वरपाणिशोभिसुवर्णकङ्कणरत्नरज्जुविभूषिना
सुपयोधरा पदसङ्गिनूपुररूपकुण्डलमण्डिना ।

---

१. 'राज' घ. २. 'धर्मा' ख. ३. 'शासन' घ.

फणिराजपिङ्गलवर्णिता कविसार्थमानसहारिका
वरकामिनीव मनोमुदे नहि कस्य सा खलु **गीतिका** ॥ २०७ ॥

यथा—

अलमीशपावकपाकशासनवारिजासनसेवया
गमितं जनुर्जनकात्मजापतिरप्यसेव्यत नो मया ।
करुणापयोनिधिरेक एव सरोजपत्रविलोचनः
स परं करिष्यति दुःखमोर्घमशेपदुर्गतिमोचनः ॥ २०८ ॥

इति गीतिका ।

तालचामरध्वजं पयोधरं च कुण्डलं शरं विधाय
नूपुरं च नायकं सपक्षिराजगन्धचामरं निधाय ।
रूपमन्त्यगं विधेहि वर्णिता च पन्नगेन्द्रपिङ्गलेन
**गण्डका** कवीन्द्रमण्डलीविनोदकारिणी सुमङ्गलेन ॥ २०९ ॥

यथा—

दृष्टमस्ति वासुदेव विश्वरूपमेतदेव शेषकं तु
वाजिरत्नभृत्यदारसूनुगेहवित्तमादिव(म)न्नवं तु ।
त्वत्पदाब्जभक्तिरस्तु चित्तसीम्नि वस्तुतस्तु सर्वदैव
शेपकालतुसकालदूतभीतिनाशिनीह हन्त सैव ॥ २१० ॥

इति गण्डका

अथैकविंशत्यक्षरच्छन्दः—

कर्णे ताटङ्कयुक्तं वलयमपि सुवर्णं च मञ्जीरयुग्मं
पुष्पं गन्धं वहन्ती द्विजगणरुचिरा नूपुरद्वन्द्वयुक्ता ।
शङ्खं हारं दधाना सुललितरसना रूपवत्कुण्डलाभ्यां
मुग्धा केषां न चित्तं तरलयति बलात्स्रग्धरा कामिनीव ॥२११॥

यथा—

अन्त्रप्रोतास्थिमालावलयितविलसद्बाहुदण्डप्रचण्डा
वेगव्यालोलमुण्डावलिकलितरणत्कारकण्ठोपकण्ठाः ।

१. 'हिता' घ. २. 'लि' घ. ३. 'दाम' ख-ग. ४. 'नाश' ख; 'शेष' ग.
५. 'त्रणिवेद' घ. ६. 'मेतदेव नास्ति शेष' ग. ७. [illegible]

कुर्वन्त्यो[1] गर्वमत्युद्दलगहनवलद्वैरध्वानमुच्चै-

रुत्कृत्तैरुत्तमाङ्गैर्विदधति च शिरःकन्दुकक्रीडनानि[2] ॥ २१२ ॥

इति स्रग्धरा ।

चामररत्नरज्जुवरपरिगतविप्रगणाहितशोभः

पाणिविराजिपुष्पयुगविरचितकङ्कणसंगतगन्धः ।

चारुसुवर्णकुण्डलयुगलकृतरोचिरलंकृतवर्णः[3]

पिङ्गलपन्नगेश इति निगदति राजति वृत्तनरेन्द्रः ॥ २१३ ॥

यथा—

पङ्कजकोशपानपरमधुकरगीतमनोज्ञतडागः

पञ्चमनादवादपरपरभृतकाननसत्परभागः ।

वल्लभविप्रयुक्तकुलवरतनुजीवनदानदुरन्तः

किं करवाणि वक्षि मम सहचरि संनिधिमेति वसन्तः ॥ २१४ ॥

इति नरेन्द्रः ।

अथ द्वाविंशत्यक्षरच्छन्दः—

यस्यामष्टौ पूर्वे दीर्घास्तदनु कमलमुखि दिनकरसंख्या

ह्रस्वा वर्णाः पीनोत्तुङ्गस्तनभरविनमितसुभगशरीरे ।

दीर्घावन्त्यौ वर्णौ[4] मुग्धे यतिरपि यदि वसुरस[5]....कैः स्या-

द्द्वाविंशत्या वर्णैः पूर्णा प्रभवति कुसुममृदुलतरहंसी ॥ २१५ ॥

यथा—

श्रीकृष्णेन क्रीडन्तीनां क्वचिदपि वनभुवि मनसिजभाजां

गोपालीनां चन्द्रज्योत्स्नाविशदरजनिगुरुजनितरतीनाम्[6] ।

दीर्घभ्रश्यत्पत्रालीनामुपचितरभसविमलतनुभासां[7]

रासक्रीडायासध्वंसी मुदमुपनयति मलयगिरिवातः ॥ २१६ ॥

इति हंसी ।

---

१. 'कुर्वन्ती' क; 'कुर्वन्तो' ख. २. 'स्तकृष्टै' ग. ३. 'क्रीडितानि' ग. ४. 'चारुसुन्दरसुवर्णकुण्डल' ग. ५. 'योग्य' ग. ६. 'लीलालोले यतिरिह विरमति कुटगिरिपट्कैः' ख-ग. ७. 'रजनिजनितरतरतीनां' घ. ८. 'घर्मभ्रश्य' घ.

अथ त्रयोविंशत्यक्षरच्छन्दः—

करसङ्गिसुवर्णद्वयवलया ताटङ्कमनोहरशङ्खधरा
कुसुमत्रयराजच्छ्रवणविलोलत्कुण्डलमण्डितरत्नवरा ।
भुजसंगतकेयूरजसुविलासा पिङ्गलनागसमालपिता
किल **सुन्दरिका** सा भवति तदा पद्मावतिका कविराजहिता ॥ २१७ ॥

यथा—

शरदिन्दुसमानं व्यपगतमानं गायति दिक्षु तवैव यशः
स्वरसामुनिदेवी विगलितनीवी कामकलाविकला बहुशः ।
पृथुवेपथुयुक्ता स्वगृहवियुक्ता स्वेदकणावलिमुग्धमुखी
धरणीरमणेन्दो विकसदमन्दोदारसमा [1]शरदिन्दुमुखी ॥ २१८ ॥

इति सुन्दरी ।

अथ चतुर्विंशत्यक्षरच्छन्दः—

विनिधाय करं कुरु रत्नमनोहरबाहुयुगं [2]कुरु रत्नधरं
सगणं [3]च तत: कुरु पाणितलं वरपुष्पयुगं विनिधाय गुरुम् ।
इति **दुर्मिलका** फणिनायकसंरचिता किल वर्णविलासपरा
चतुराश्रितविंशतिवर्णकृता कविता सुकृताश्रयशिल्पधरा ॥ २१९ ॥

यथा—

कति सन्ति न गोपकुले ललिताः स्मरतापहताश्च विहाय च ता
रतिकेलिकलारसलालसमानसमागतमुज्झितमानरसम् ।
वनमालिनमालि नमस्य नमस्य नमस्यमुदस्य चिरस्य वृथा
भविता परितापवती भवती युवतीजनसंसदि हासकथा ॥ २२० ॥

इति दुर्मिला ।

पादयुगं कुरु नूपुरसंयुतमत्र करं वररत्नमनोहर-
वज्रयुगं कुसुमद्वयसंगतकुण्डलगन्धयुगं समुपाहर ।
पण्डितमण्डलिकाहृतमानसकल्पितसज्जनमौलिरसालय-
पिङ्गलपन्नगराजनिवेदितवृत्तकिरीटमिदं परिभावय ॥ २२१ ॥

---

१. 'सरस्वतिमुखी' ग. २. 'वर' घ. ३. 'कुरु पाणितलं वरपुष्पयुगं विनिधाय गुरु मकरं' घ.

यथा—

मल्लिलते मलिनासि किमित्यलिना रहिता भवती बत यद्यपि
सा पुनरेति शरद्रजनी तव या तनुते धवलानि जगन्त्यपि ।
षट्पदकोटिविघट्टितकुड्मलकोटिविनिर्गतसौरभसंपदि
न त्वयि कोऽपि विधास्यति सादरमन्तरमुत्तरनागरसंसदि ॥ २२२ ॥

इति किरीटम् ।

अथ पञ्चविंशत्यक्षरच्छन्दः—

कर्णद्विजवरगणतृ(त्रि?)तयनगणमिह रचय ललितमिति कुसुमगणं
नारीगणनगणकलितशरकुसुमसुकनककुसुमवरकृतरसनम् ।
नागाधिपनिगदितमिति च परिमुषितसकलकविनृकुलमतिरुचिरं
शार्दूरममलमिह कलय कमलमुखि मुषितविबुधजनहृदयवरम् ॥२२३॥

यथा—

गोवर्धनगिरिधरमुपचितदितिसुतपरमहृदयमदशमनकरं
व्यर्थीकृतजलधरगुरुवरष(र्ष?)णभरगतभयनिजकुलदुरितहरम् ।
नन्दालयनिवसनकृतवनविलसनविहितविविधरसरभसपरं
संवीतवसनधरमरुणकरचरणमनुसर सरसिजनयनधरम् ॥ २२४ ॥

इति शार्दूरम् ।

मात्रावृत्तमिह प्रोक्तं चत्वारिंशत्त्रयाधिका ।
त्रयोदशाधिकशतं वर्णवृत्तमिहोदितम् ॥

इति मैथिलदीर्घघोषकुलोद्भूतदामोदरमिश्रविरचितवाणीभूषणं समाप्तम् ।

---

१. 'मयि' घ. २. 'त्रयाधिकम्' क-ख; 'च्चताधिकम्' ग.

KÂVYAMÂLÂ, 41.



# THE PRÂKṚITA-PIÑGALA-SÛTRAS

WITH THE COMMENTARY

OF

## LAKSHMÎNÂTHA BHAṬṬA.

EDITED BY

PAṆDIT S'IVADATTA

Head Professor and Superintendent, Sanskṛit Department, Oriental College, Lahore.

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JAVAJI DADAJI'S "NIRṆAYA-SAGARA" PRESS

BOMBAY.

1894.

*Price 1¾ Rupee*

काव्यमाला. ४१.

# प्राकृतपिङ्गलसूत्राणि ।

लक्ष्मीनाथभट्टविरचितया व्याख्ययानुगतानि ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशिनाथ-
शर्मणा च संशोधितानि ।

तानि च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतानि ।

१८९४



मूल्यं पादोनं रूप्यकद्वयम् ।

# भूमिका।

प्राकृतच्छन्दोलक्षणसूत्रकर्तापि स एव **पिङ्गलः**, येन संस्कृतच्छन्दोलक्षणसूत्राणि निर्मितानि. यतो वैदिकैस्तदादौ पठ्यमाने

'मयरसतजभनलगसमित भ्रमति वाङ्मयं जगति यस्य।
स जयति पिङ्गलनागः शिवप्रसादाद्विशुद्धमतिः॥'

इति श्लोके सर्वोत्कर्षाश्रयत्वेन वर्णितस्य पिङ्गलनागस्यैवानापि तत्र तत्र

'सप्पाराआ सुद्धाकाआ जम्पे पिङ्गल'
(सर्पराजः शुद्धकायो जल्पति पिङ्गलः।)
'इअ जम्पइ कइराआ पिङ्गलणामप्पसिद्धफणिन्दा'
(इति जल्पति कविराजः पिङ्गलनामप्रसिद्धफणीन्द्रः।)

इति छन्दोलक्षणसूत्रेषु वर्णनात्, एवं च तस्य कालनिर्णयोऽनावश्यकः. उदाहरणानि च केनचित्कविना नानाकविकृतानि **हम्मीर-कुमारपालपूर्वपुरुषकर्णराजादिवर्णनवृत्तानि** संगृह्य योजितानि, इति साम्प्रदायिकः पन्थाः.

आधुनिकास्तु—'तत्र तत्र 'जम्पे पिङ्गल' इत्यादिदर्शनात्सूत्राण्युदाहरणसंगृहीतृपिङ्गलेतरतटस्थकर्तृकाण्येव भवेयुरिति हम्मीरवर्णनात्मकोदाहरणानां सत्त्वादनुमीयते—**'हम्मीर**राज्यकालचतुर्दशशतकतो न प्राचीनानि सूत्राणि' इति' इति वदन्ति.

अत्र च ग्रन्थे न सेतुबन्धवच्छुद्धं प्राकृतम्, किंतु प्रायो बन्द्यादिरचितदेशीशब्दमिश्रमेव.

अस्य च ग्रन्थस्य द्वे टीके समुपलब्धे तत्र—एका **रविकर**विरचिता **पिङ्गलसारविकाशिनी अलवर**राजकीयपण्डितवरश्रीयुत**रामचन्द्र**शर्मभिः प्रहिता. तत्र च समाप्तावेव वंशपरम्परा श्रूयते—

'आसीच्छ्री**शूलपाणि**र्भुवि विविधगुणग्रामविश्राममूमि-
स्तत्पुत्रो भूमिदेवाम्बुजवनतरणिर्मिश्र**रत्नाकरो**ऽभूत्।
तस्मादासीमभूमीवलयसुविदितानन्तकीर्तिप्रतानः
पुत्रः साक्षात्पुरारिर्गुणगणसहितो **दोहविः** पण्डितोऽभूत्॥
**चण्डेश**स्तस्य पुत्रोऽभवदतिमहितो मिश्र**भीमेश्वरो**ऽभू-
त्तत्सूनुः सूरिसंसद्गणितगुणगणः सुमतिष्ठोऽतिनिष्ठः।
जातस्तस्मात्पवित्रो **हरिहर**सुकविः साधु साधारण य-
द्वित्त नित्योपकाराहितमतिरुचितः श्री**रवि**स्तत्सुतोऽस्ति॥'

अनेन च रविकरेण **वृत्तरत्नावल्यपि** रचितेति **जर्मन-ओरिएण्टल-सोसाइटी**-मुद्रापितग्रन्थग्रन्थकारनामसंग्रहपुस्तकतोऽवसीयते.

द्वितीया त्वियं **लक्ष्मीनाथ**विरचिता मुद्रितैव. अस्याश्च पुस्तकं जयपुरराजकीयविद्यालयलब्धाभिख्यवरपदलच्छी**राम**साधुभिर्दत्तम्. इति पुस्तकप्रेषयितॄणां महान्तमुपकारं मन्यामहे इति शम्.

---

# अनुक्रमणिका ।


| विषयः | पृष्ठे |
|---|---|
| मङ्गलाचरणम् ... ... ... | १ |
| गुरुलघुव्यवस्था ... ... ... | २ |
| तदुदाहरणम् ... ... ... | ३ |
| तदपवादः ... ... ... ... | ३ |
| अपवादान्तरमुदाहरणं च ... ... | ४ |
| रेफहकारयुक्तोदाहरणम् ... ... | ४ |
| विकल्पान्तरमुदाहरण च ... ... | ५ |
| छन्दोग्रन्थस्योपादेयत्वदर्शनम् ... | ५ |
| छन्दोभङ्गेन श्रवणदुःखेत्यादि ... | ६ |
| गणव्यवस्था ... ... ... | ६ |
| तेषां ससंख्यो भेदः... ... ... | ७ |
| मात्राप्रस्तारः ... ... ... | ७ |
| षट्कलप्रस्तारे त्रयोदशगणनामानि | ७ |
| पञ्चकलप्रस्तारेऽष्टगणनामानि ... | ८ |
| चतुष्कलप्रस्तारे पञ्चगणनामानि ... | ८ |
| त्रिकलप्रस्तारे गणत्रितयानां नामानि | ८ |
| गुर्वादित्रिकलस्य नामानि ... ... | ९ |
| द्विकलप्रस्तारे गणद्वयनामानि ... | ९ |
| क्रमतश्चतुष्कलनामानि ... ... | ९ |
| चतुर्मात्रिकाणां नामानि ... ... | १० |
| अन्तगुरोश्चतुष्कलस्य नामानि .. | १० |
| मध्यगुरोर्नामानि ... ... ... | १० |
| आदिगुरोर्नामानि ... ... ... | १० |
| चतुर्लघोर्नामानि ... ... ... | ११ |
| पञ्चमात्रस्यादिलघोर्नामानि ... | ११ |
| मध्यलघोः पञ्चमात्रस्य नामानि ... | ११ |
| पञ्चकलस्य सामान्यनामानि ... | ११ |
| चतुष्कलस्य साधारणसंज्ञा... ... | १२ |
| सामान्यतो गुरुनामानि ... ... | १२ |
| तथैव लघुनामानि ... ... ... | १२ |
| वर्णवृत्तनामानि ... ... ... | १२ |
| गणदेवतादर्शनम् ... ... ... | १३ |
| गणानां मित्रामित्रादिकम् ... ... | १३ |
| तेषां फलानि ... ... ... | १३ |
| गणद्वयविचारः ... ... ... | १४ |
| मात्राणामुद्देशः ... ... ... | १६ |
| क्रमप्राप्तो वर्णोद्देशः ... ... | १७ |
| वर्णानां नष्टविचारः... ... ... | १८ |
| वर्णमेरुविचारः ... ... ... | १८ |
| वर्णपताकाविचारः... ... ... | १९ |
| मात्रामेरुः ... ... ... ... | २० |
| मात्रापताका ... ... ... | २१ |
| पद्यवृत्तस्यगुरुलघुज्ञानप्रकारः ... | २२ |
| वर्णमर्कटी ... ... ... ... | २२ |
| मात्रामर्कटी ... ... ... | २३ |
| समस्तवर्णप्रस्तारपिण्डीभूतसंख्या ... | २७ |
| उद्देशक्रमेण कलागणना ... ... | २७ |
| गाहूछन्दः ... ... ... ... | २८ |
| तदुदाहरणम् ... ... ... | २८ |
| गाथाछन्दः... ... ... ... | २८ |
| तदुदाहरणम् ... ... ... | २८ |
| गाथायां गणनियमः ... ... | २९ |
| सर्वगाथासु सामान्यलक्षणम् ... | २९ |
| गाथायाः सप्तविंशतिभेदेषु लक्ष्मीनाख्याया ... ... ... ... | २९ |
| तत्प्रशंसापुरःसरो भेदानयनप्रकारः... | ३० |
| लक्ष्मीनाम्न्या गाथाया नामानि ... | ३० |
| गाथापाठप्रकारः ... ... ... | ३१ |

| विषयः | पृष्ठे |
|---|---|
| गणभेदेन गाथायाः सावस्थाभेदो दोषः | ३१ |
| गाथाया लघुसंख्याभेदेन वर्णभेदः ... | ३१ |
| विषमस्थानदत्तजगणाया गाथाया दोषः | ३२ |
| विगाथाछन्दः ... ... ... | ३२ |
| तदुदाहरणम् ... ... ... | ३२ |
| उद्गाथाछन्दः ... ... ... | ३३ |
| तदुदाहरणम् ... ... ... | ३३ |
| गाहिनीसिंहिन्यौ ... ... ... | ३३ |
| तदुदाहरणे ... ... ... ... | ३४ |
| स्कन्धकं छन्दः ... ... ... | ३४ |
| तदुदाहरणम् ... ... ... | ३५ |
| तस्यैवाष्टाविंशतिभेदाः ... ... | ३५ |
| अष्टाविंशतिभेदानयनप्रकारः ... | ३६ |
| आद्यस्य नन्दस्योदाहरणम्... ... | ३६ |
| द्विपथाछन्दः ... ... ... | ३७ |
| तदुदाहरणम् ... ... ... | ३७ |
| द्विपथायास्त्रयोविंशतिभेदाः ... | ३७ |
| त्रयोविंशतिभेदानयनप्रकारः ... | ३८ |
| प्रथमं भ्रमरस्योदाहरणम् ... ... | ३८ |
| द्विपथाया वर्णभेदः ... ... ... | ३९ |
| विषमचरणस्थजगणाया दोषनिरूपणम् | ३९ |
| द्विपथायां गणनियमः ... ... | ३९ |
| रसिकाछन्दः ... ... ... | ४० |
| तदुदाहरणम् ... ... ... | ४० |
| अस्योकच्छेति नामान्तरम्.. ... | ४१ |
| तस्याष्टौ भेदाः ... ... | ४१ |
| अष्टभेदानयनप्रकारः ... ... | ४१ |
| रोलाछन्दः ... ... ... | ४२ |
| तदुदाहरणम् ... ... ... | ४२ |
| तस्य त्रयोदशभेदाः ... ... | ४३ |
| गन्धाछन्दः ... ... ... | ४४ |
| तस्यैव पुनः स्पष्टीकरणं च ... | ४४ |
| तदुदाहरणम् ... ... ... | ४५ |
| चतुष्पदीछन्दः ... ... ... | ४५ |
| तदुदाहरणम् ... ... ... | ४६ |
| घत्ताछन्दः... ... ... ... | ४६ |
| तस्यैव लक्षणान्तरम् ... ... | ४७ |
| तदुदाहरणम् ... ... ... | ४७ |
| त्रिभेदेन घत्तानन्दः... ... ... | ४७ |
| तस्य गणनियमः ... ... ... | ४८ |
| तदुदाहरणम् ... ... ... | ४८ |
| षट्पदछन्दः ... ... ... | ४८ |
| तदुदाहरणम् ... ... ... | ४९ |
| तस्य प्रकारान्तरेण लक्षणम् ... | ५० |
| काव्यमात्रालक्षणम् ... ... | ५१ |
| शक्रनामकं छन्दः ... ... ... | ५२ |
| तदुदाहरणम् ... ... ... | ५२ |
| शक्रछन्दसो भेदाः... ... ... | ५३ |
| तेषां नामानि ... ... ... | ५३ |
| पुनः संख्या ... ... ... | ५४ |
| षट्पददोषः... ... ... ... | ५५ |
| तस्यैवैकसप्ततिभेदाः ... ... | ५५ |
| उल्लाललक्षणम् ... ... ... | ५६ |
| तदुदाहरणम् ... ... ... | ५६ |
| तस्यैकसप्ततिभेदानयनम् ... ... | ५७ |
| तेषामुदाहरणम् ... ... ... | ५८ |
| षट्पदछन्दसो नामसंख्यानयनप्रकारः | ६० |
| पज्झटिकाछन्दः ... ... ... | ६० |
| तदुदाहरणम् ... ... ... | ६० |
| अडिल्लाछन्दः ... ... ... | ६१ |
| तस्योदाहरणम् ... ... ... | ६२ |
| पादाकुलकं छन्दः ... ... ... | ६२ |
| तदुदाहरणम् ... ... ... | ६३ |
| चउबोलाछन्दः ... ... ... | ६३ |
| अस्योदाहरणम् ... ... ... | ६४ |
| रड्डाछन्दः ... ... ... ... | ६४ |

| विषयः | पृष्ठे |
|---|---|
| तस्या गणनियमः ... ... ... | ६५ |
| तस्योदाहरणम् ... ... ... | ६६ |
| तस्य छन्दसः सप्त भेदास्तल्लक्षणानि च | ६७ |
| पद्मावतीछन्दः ... ... ... | ६९ |
| तदुदाहरणम् ... ... ... | ६९ |
| कुण्डलिकाछन्दः ... ... ... | ७० |
| तदुदाहरणम् ... ... ... | ७१ |
| उद्दवणिकास्पष्टीकरणम् ... ... | ७२ |
| गगनाङ्गन छन्दः ... ... ... | ७२ |
| तदुद्दवणिकायाः स्पष्टीकरणम् .. | ७३ |
| गगनाङ्गनोदाहरणम् ... ... | ७३ |
| द्विपदीछन्दः ... .. ... | ७४ |
| तदुद्दवणिकास्पष्टीकरणम् ... ... | ७४ |
| तदुदाहरणम् ... ... ... | ७५ |
| झुल्लणाछन्दः ... ... ... | ७५ |
| तदुदाहरणम् ... ... ... | ७५ |
| खञ्जाछन्दः... ... ... ... | ७६ |
| तदुदाहरणम् ... ... ... | ७७ |
| शिखाछन्दः ... ... ... | ७७ |
| तल्लक्षणान्तरम् ... ... ... | ७८ |
| तदुदाहरणम् ... ... ... | ७८ |
| मालाछन्दः ... ... ... | ७९ |
| तल्लक्षणान्तरम् ... ... ... | ७९ |
| तदुदाहरणम् ... ... ... | ७९ |
| चुलिआलाछन्दः ... ... ... | ८० |
| तल्लक्षणान्तरम् ... ... ... | ८० |
| तदुदाहरणम् ... ... ... | ८० |
| सोरठाछन्दः ... ... ... | ८१ |
| तदुदाहरणम् ... ... ... | ८१ |
| हाकलिछन्दः ... ... ... | ८१ |
| तदक्षरनियमः ... ... ... | ८२ |
| तदुदाहरणम् ... ... ... | ८२ |
| मधुभारच्छन्दः ... ... ... | ८२ |
| तदुदाहरणम् ... ... ... | ८२ |
| आभीरच्छन्दः ... ... ... | ८३ |
| तदुदाहरणम् ... ... ... | ८३ |
| दण्डकलाछन्दः ... ... ... | ८३ |
| तदुदाहरणम् ... ... ... | ८४ |
| दीपकछन्दः ... ... ... | ८४ |
| तस्योदाहरणम् ... ... ... | ८५ |
| सिंहावलोकच्छन्दः ... ... | ८५ |
| पुनरुद्दवणिकास्पष्टीकरणम् ... ... | ८५ |
| तदुदाहरणम् ... ... ... | ८६ |
| प्लवंगमच्छन्दः ... ... ... | ८६ |
| विशदीकृत्य पुनर्लक्षणम् ... ... | ८७ |
| तदुदाहरणम् ... ... ... | ८७ |
| लीलावतीछन्दः ... ... ... | ८८ |
| तदुदाहरणम् ... ... ... | ८८ |
| हरिगीताछन्दः ... ... ... | ८९ |
| तदुदाहरणम् ... ... ... | ९० |
| त्रिभङ्गीछन्दः ... ... ... | ९० |
| तस्योदाहरणम् ... .. ... | ९१ |
| दुर्मिलाछन्दः ... ... ... | ९२ |
| तदुदाहरणम् ... ... ... | ९३ |
| हीरच्छन्दः ... ... ... | ९३ |
| तदुदाहरणम् ... ... ... | ९४ |
| जनहरणछन्दः ... ... ... | ९५ |
| तदुदाहरणम् ... ... ... | ९६ |
| मदनगृहच्छन्दः ... ... ... | ९७ |
| तल्लक्षणान्तरम् ... ... ... | ९८ |
| पुनर्लक्षणान्तरम् ... ... ... | ९९ |
| तदुदाहरणम् ... ... ... | ९९ |
| मरहट्ठाछन्दः ... ... ... | १०० |
| तदुदाहरणम् ... ... ... | १०१ |

| विषयः | पृष्ठे | विषयः | पृष्ठे |
|---|---|---|---|
| तदुदाहरणम् ... ... ... | १२० | चम्पकमालाछन्दः ... ... ... | १३१ |
| विद्युन्मालाछन्दः ... ... ... | १२१ | तदुदाहरणम् ... ... ... | १३२ |
| तदुदाहरणम् ... ... ... | १२१ | सारवतीछन्दः ... ... ... | १३२ |
| प्रमाणिकाछन्दः ... ... ... | १२२ | तदुदाहरणम् ... ... ... | १३२ |
| तदुदाहरणम् ... ... ... | १२२ | सुषमाछन्दः ... ... ... | १३३ |
| मल्लिकाछन्दः ... ... ... | १२२ | तदुदाहरणम् ... ... ... | १३३ |
| तदुदाहरणम् ... ... .. | १२३ | अमृतगतिच्छन्दः ... ... ... | १३४ |
| तुङ्गाछन्दः ... ... ... | १२३ | तदुदाहरणम् ... ... ... | १३४ |
| तदुदाहरणम् ... ... ... | १२३ | बन्धुच्छन्दः ... ... ... | १३४ |
| कमलछन्दः ... ... ... | १२४ | तदुदाहरणम् ... ... ... | १३५ |
| तदुदाहरणम् .. ... ... | १२४ | सुमुखीछन्दः ... ... ... | १३५ |
| माणवकक्रीडितकं छन्दः ... ... | १२४ | तदुदाहरणम् ... ... ... | १३५ |
| तदुदाहरणम् ... ... ... | १२४ | दोधकच्छन्दः ... ... ... | १३६ |
| अनुष्टुप्छन्दः ... ... ... | १२५ | तदुदाहरणम् ... ... ... | १३६ |
| तदुदाहरणम् ... ... ... | १२५ | शालिनीछन्दः ... ... ... | १३६ |
| षड्विंशतिवृत्तानां नामानि... ... | १२५ | तदुदाहरणम् ... ... ... | १३७ |
| महालक्ष्मीछन्दः ... ... ... | १२६ | दमनकच्छन्दः ... ... ... | १३७ |
| तदुदाहरणम् ... ... ... | १२६ | तदुदाहरणम् ... ... ... | १३८ |
| सारङ्गिकाछन्दः ... ... ... | १२६ | सेनिकाछन्दः ... ... ... | १३८ |
| तदुदाहरणम् ... ... ... | १२७ | तदुदाहरणम् ... ... ... | १३९ |
| पाइत्ताछन्दः ... ... ... | १२७ | मालतीछन्दः ... ... ... | १३९ |
| तदुदाहरणम् ... ... ... | १२७ | तदुदाहरणम् ... ... ... | १३९ |
| कमलच्छन्दः ... ... ... | १२८ | इन्द्रवज्राछन्दः ... ... ... | १४० |
| तदुदाहरणम् ... ... ... | १२८ | तदुदाहरणम् ... ... ... | १४० |
| बिम्बच्छन्दः ... ... ... | १२८ | उपेन्द्रवज्राछन्दः ... ... ... | १४१ |
| तदुदाहरणम् ... ... ... | १२९ | तदुदाहरणम् ... ... ... | १४१ |
| तोमरच्छन्दः ... ... .. | १२९ | उपजातिछन्दः ... ... ... | १४१ |
| तदुदाहरणम् ... ... ... | १२९ | तच्चतुर्दशभेदानयनप्रकारः ... ... | १४२ |
| रूपामालीछन्दः ... ... ... | १३० | तदुदाहरणम् .. ... ... | १४२ |
| तदुदाहरणम् ... ... ... | १३० | चतुर्दशाना भेदाना नामानि ... | १४२ |
| संयुताछन्दः ... ... ... | १३० | रथोद्धताछन्दः ... ... ... | १४३ |
| तदुदाहरणम् ... ... ... | १३१ | तदुदाहरणम् ... ... ... | १४४ |

| विषयः | पृष्ठे |
|---|---|
| तस्यैवोदाहरणान्तरम् ... ... | १४४ |
| स्वागताछन्दः ... ... ... | १४४ |
| तदुदाहरणम् ... ... ... | १४४ |
| तस्यैवोदाहरणान्तरम् ... ... | १४४ |
| अनुकूलाछन्दः ... ... ... | १४४ |
| तदुदाहरणम् ... ... ... | १४४ |
| भ्रमरविलसितच्छन्दः ... ... | १४४ |
| तदुदाहरणम् ... ... ... | १४५ |
| मोटनकच्छन्दः ... ... ... | १४५ |
| तदुदाहरणम् ... ... ... | १४५ |
| विद्याधरच्छन्दः ... ... ... | १४५ |
| तदुदाहरणम् ... ... ... | १४५ |
| भुजङ्गप्रयातच्छन्दः ... ... | १४६ |
| तस्यैव प्रकारान्तरेण व्यक्तीकरणम् | १४६ |
| तदुदाहरणम् ... ... ... | १४७ |
| लक्ष्मीधरच्छन्दः ... ... ... | १४७ |
| तदुदाहरणम् ... ... ... | १४७ |
| तोटकच्छन्दः ... ... ... | १४८ |
| तदुदाहरणम् ... ... ... | १४८ |
| सारङ्गच्छन्दः ... ... ... | १४९ |
| तदुदाहरणम् ... ... ... | १४९ |
| मौक्तिकदामच्छन्दः ... ... | १४९ |
| तदुदाहरणम् ... ... ... | १५० |
| मोदकच्छन्दः ... ... ... | १५० |
| तदुदाहरणम् ... ... ... | १५१ |
| तरलनयनीछन्दः ... ... ... | १५१ |
| तदुदाहरणम् ... ... ... | १५१ |
| सुन्दरीच्छन्दः ... ... ... | १५२ |
| तदुदाहरणम् ... ... ... | १५२ |
| प्रमिताक्षरच्छन्दः ... ... ... | १५२ |
| तदुदाहरणम् ... ... ... | १५३ |
| तस्यैवोदाहरणान्तरम् ... ... | १५३ |
| द्रुतविलम्बितं छन्दः ... ... | १५३ |
| तदुदाहरणम् ... ... ... | १५३ |
| तस्यैवोदाहरणान्तरम् ... ... | १५३ |
| चन्द्रवर्त्मच्छन्दः ... ... ... | १५३ |
| तदुदाहरणम् ... ... ... | १५३ |
| वंशस्थविलं छन्दः ... ... ... | १५४ |
| तदुदाहरणम् ... ... ... | १५४ |
| इन्द्रवंशाछन्दः ... ... ... | १५४ |
| तदुदाहरणम् ... ... ... | १५४ |
| वैश्वदेवीछन्दः ... ... ... | १५४ |
| तदुदाहरणम् ... ... ... | १५४ |
| मन्दाकिनीछन्दः ... ... ... | १५४ |
| तदुदाहरणम् ... ... ... | १५४ |
| कुसुमविचित्राछन्दः ... ... | १५५ |
| तदुदाहरणम् ... ... ... | १५५ |
| तामरसच्छन्दः ... ... ... | १५५ |
| तदुदाहरणम् ... ... ... | १५५ |
| मालतीछन्दः ... ... ... | १५५ |
| तदुदाहरणम् ... ... ... | १५५ |
| मणिमालाछन्दः ... ... ... | १५५ |
| तदुदाहरणम् ... ... ... | १५६ |
| जलधरमालाछन्दः ... ... | १५६ |
| तदुदाहरणम् ... ... ... | १५६ |
| मायाछन्दः ... ... ... | १५६ |
| तदुदाहरणम् ... ... ... | १५७ |
| तारकच्छन्दः ... ... ... | १५७ |
| तदुदाहरणम् ... ... ... | १५८ |
| कन्दच्छन्दः ... ... ... | १५८ |
| तदुदाहरणम् ... ... ... | १५९ |
| पङ्क्तावलीछन्दः ... ... ... | १५९ |
| तदुदाहरणम् ... ... ... | १६० |
| मृगेन्द्रमुखं छन्दः ... ... ... | १६० |

| विषयः | पृष्ठे |
|---|---|
| तदुदाहरणम् | १६१ |
| प्रहर्षिणीछन्दः | १६१ |
| तदुदाहरणम् | १६१ |
| रुचिराछन्दः | १६१ |
| तदुदाहरणम् | १६१ |
| चण्डीछन्दः | १६२ |
| तदुदाहरणम् | १६२ |
| मञ्जुभाषिणीछन्दः | १६२ |
| तदुदाहरणम् | १६२ |
| चन्द्रिकाछन्दः | १६२ |
| तदुदाहरणम् | १६२ |
| तस्यैवोदाहरणान्तरम् | १६२ |
| कलहंसच्छन्दः | १६३ |
| तदुदाहरणम् | १६३ |
| प्रबोधिताछन्दः | १६३ |
| तदुदाहरणम् | १६३ |
| वसन्ततिलकाछन्दः | १६३ |
| तदुदाहरणम् | १६४ |
| चक्रपदच्छन्दः | १६४ |
| तदुदाहरणम् | १६५ |
| वासन्तीछन्दः | १६६ |
| तदुदाहरणम् | १६६ |
| असंबाधाछन्दः | १६६ |
| तदुदाहरणम् | १६६ |
| अपराजिताछन्दः | १६६ |
| तदुदाहरणम् | १६६ |
| प्रहरणकलिकाछन्दः | १६७ |
| तदुदाहरणम् | १६७ |
| लोलाछन्दः | १६७ |
| तदुदाहरणम् | १६७ |
| नान्दीमुखीछन्दः | १६७ |
| तदुदाहरणम् | १६७ |

| विषयः | पृष्ठे |
|---|---|
| भ्रमरावलीछन्दः | १६८ |
| तदुदाहरणम् | १६८ |
| सारङ्गिकाछन्दः | १६९ |
| तदुदाहरणम् | १६९ |
| चामरच्छन्दः | १७० |
| तदुदाहरणम् | १७१ |
| निशिपालच्छन्दः | १७१ |
| तदुदाहरणम् | १७२ |
| मनोहंसच्छन्दः | १७३ |
| तदुदाहरणम् | १७३ |
| मालिनीछन्दः | १७४ |
| तदुदाहरणम् | १७४ |
| शरभच्छन्दः | १७५ |
| तदुदाहरणम् | १७५ |
| विपिनतिलकं छन्दः | १७६ |
| तदुदाहरणम् | १७६ |
| चन्द्रलेखाछन्दः | १७७ |
| तदुदाहरणम् | १७७ |
| चित्रं छन्दः | १७७ |
| तदुदाहरणम् | १७७ |
| नाराचछन्दः | १७७ |
| तदुदाहरणम् | १७८ |
| नीलच्छन्दः | १७९ |
| तदुदाहरणम् | १८० |
| चञ्चलाछन्दः | १८० |
| तदुदाहरणम् | १८१ |
| ब्रह्मरूपकं छन्दः | १८२ |
| तदुदाहरणम् | १८२ |
| ऋषभगजविलसितं छन्दः | १८३ |
| तदुदाहरणम् | १८३ |
| चकिताछन्दः | १८३ |
| तदुदाहरणम् | १८४ |

| विषय | पृष्ठे | विषय | पृष्ठे |
|---|---|---|---|
| तदुदाहरणम् ... ... ... | २०६ | तदुदाहरणम् ... . | २२१ |
| पुष्पदामच्छन्दः ... .. | २०६ | क्रौञ्चपदाछन्दः . ... .. | २२१ |
| तदुदाहरणम् ... .. | २०६ | तदुदाहरणम् ... .. . | २२१ |
| गीताच्छन्द . ... | २०७ | भुजङ्गविजृम्भितछन्दः ... | २२२ |
| तदुदाहरणम् ... . ... | २०७ | तदुदाहरणम् .. ... | २२२ |
| गण्डलाच्छन्द ... .. | २०८ | त्रिभङ्गीछन्दः ... ... ... | २२२ |
| तदुदाहरणम् .. ... | २०९ | तदुदाहरणम् ... | २२३ |
| शोभाछन्द .. | २०९ | शार्दूलछन्द ... .. ... | २२५ |
| तदुदाहरणम् ... | २१० | तदुदाहरणम् ... ... ... | २२५ |
| सुवदनाछन्दः . | २१० | सवैयाछन्द .. | २२६ |
| तदुदाहरणम् | २१० | चण्डवृष्टिप्रपातदण्डकः . | २२७ |
| स्रग्धराछन्द | २१० | तदुदाहरणम् ... ... | २२८ |
| तदुदाहरणम् ... | २११ | अर्णदण्डक .. . | २२९ |
| नरेन्द्रछन्द ... ... | २१२ | प्रचितकदण्डक ... ... | २२९ |
| तदुदाहरणम् . | २१२ | तदुदाहरणम् ... ... | २२९ |
| सरसीछन्द .. ... | २१३ | अशोकपुष्पमञ्जरीदण्डकः | २२९ |
| तदुदाहरणम् . ... | २१३ | तदुदाहरणम् ... . | २३० |
| हंसीछन्द | २१३ | कुसुमस्तवकदण्डक | २३० |
| तदुदाहरणम् | २१४ | तदुदाहरणम् . | २३० |
| मदिराछन्द ... | २१५ | मत्तमातङ्गलीलाकरदण्डक ... | २३० |
| तदुदाहरणम् ... .. | २१५ | तदुदाहरणम् ... ... | २३० |
| सुन्दरीछन्द .. | २१५ | अनङ्गशेखरदण्डक | २३१ |
| तदुदाहरणम् | २१६ | तदुदाहरणम् ... | २३१ |
| अद्रितनयाछन्द .. . | २१७ | पुष्पिताग्राछन्दः .. .. | २३१ |
| तदुदाहरणम् | २१७ | तदुदाहरणम् .. | २३२ |
| मत्तागयन्दछन्द ... . | २१७ | उपचित्र छन्द ... | २३२ |
| तदुदाहरणम् ... | २१७ | तदुदाहरणम् . | २३२ |
| दुर्मिलाछन्द | २१८ | वेगवतीछन्द .. ... | २३२ |
| तदुदाहरणम् . | २१९ | तदुदाहरणम् . . | २३२ |
| किरीटछन्द ... . | २१९ | हरिणप्लुताछन्द . | २३३ |
| तदुदाहरणम् ... . | २२० | तदुदाहरणम् | २३३ |
| तन्वीछन्द ... | २२१ | अपरवक्त्र छन्द ... | २३३ |

| विषयः | पृष्ठे | विषयः | पृष्ठे |
|---|---|---|---|
| तदुदाहरणम् ... ... ... | २३३ | तदुदाहरणम् ... ... ... | २३६ |
| सुन्दरीछन्दः ... ... ... | २३३ | वक्त्रं छन्दः ... ... ... | २३६ |
| तदुदाहरणम् ... ... ... | २३४ | तदुदाहरणम् ... ... ... | २३६ |
| उद्गताछन्दः ... ... ... | २३४ | पथ्यावक्त्रम् ... ... ... | २३६ |
| तदुदाहरणम् ... ... ... | २३४ | तदुदाहरणम् ... ... ... | २३६ |
| तस्यैव लक्षणान्तरम् ... ... | २३४ | गद्यानि ... ... ... | २३७ |
| तदुदाहरणम् ... ... ... | २३५ | चूर्णकम् ... ... ... | २३७ |
| सौरभकच्छन्दः ... ... ... | २३५ | उत्कलिकाप्रायम् ... ... ... | २३७ |
| तदुदाहरणम् ... ... ... | २३५ | ग्रन्थसमाप्तिः ... ... ... | २३८ |
| ललितं छन्दः ... ... ... | २३५ | | |




# काव्यमाला ।

## प्राकृतपिङ्गलसूत्रम् ।

श्रीलक्ष्मीनाथभट्टविरचितपिङ्गलप्रदीपसमाख्यया व्याख्ययानुगतम् ।

### प्रथम परिच्छेद ।

गोपीपीनपयोधरद्वयमिलच्चेलाञ्चलाकर्षण-
  क्ष्वेलिव्यापृतचारुचञ्चलकराम्भोज भजत्ताननै ।
द्राक्षामञ्जुलमाधुरीपरिणमद्वाग्विभ्रम तन्मना-
  गद्वैत समुपास्महे यदुकुलालम्ब विचित्र मह ॥
लम्बोदरमवलम्बे स्तम्बेरमवदनमेकदन्तवरम् ।
अन्वेक्षितमुखकमल य वेदो नापि तत्वतो वेद ॥
गङ्गाशीतपयोमयादिव मिलद्भालाक्षिकीलादिव
  व्यालक्ष्वेलजफूत्कृतादिव सदा लक्ष्म्यापवादादिव ।
स्त्रीशापादिव कण्ठकालिमकुहूसानिध्ययोगादिव
  श्रीकण्ठस्य कृश करोतु कुशल शीतद्युति श्रीमताम् ॥
विहितदया मन्देष्वपि दत्त्वानन्देन वाङ्मय देहम् ।
शब्देऽर्थे सदेहव्ययाय वन्दे चिर गिर देवीम् ॥
भट्टश्रीरामचन्द्र कविविबुधकुले लब्धदेह श्रुतो य
  श्रीमान्नारायणाख्य कविमुकुटमणिस्तत्तनूजोऽजनिष्ट ।
तत्पुत्रो रामभट्ट सकलकविकुलख्यातकीर्तिस्तदीयो
  लक्ष्मीनाथस्तनूजो रचयति रुचिर पिङ्गलार्थप्रदीपम् ॥
श्रीरामभट्टतनयो लक्ष्मीनाथ समुल्लसत्प्रतिभ ।
प्राय पिङ्गलसूत्रे तनुते भाष्य विशालमति ॥
जलौकसा तुल्यतमे खले किं रम्येऽपि दोषग्रहणस्वभावे ।
सता परानन्दनमन्दिराणा चमत्कृतिं मत्कृतिरातनोतु ॥
यत्र सूर्येण सभिन नापि रत्नेन भास्वता ।
तत्पिङ्गलप्रदीपेन नाश्यतामान्तरं तम ॥
यद्यस्ति कौतुक वश्छन्द सदर्भविज्ञाने ।
सन्त पिङ्गलदीप लक्ष्मीनाथेन दीपित पठत ॥

किं च मत्कृतिरियं चमत्कृतिं चेन्न चेतसि सतां विधास्यति ।
भारती मजतु भारतीमया लज्जया परमसौ रसातलम् ॥

ग्रन्थारम्भे ग्रन्थकृदभिमतसिद्धये छन्द शास्त्राधिष्ठातृपिङ्गलनागानुस्मरणलक्षणं मङ्गलमाचरति—

जो विविहमत्तसाअरपारं पत्तो विविमलमइहेलम् ।
पंढमभासतरण्डो णाओ सो पिङ्गलो जअइ ॥ १ ॥

[यो विविधमात्रासागरपारं प्राप्तो विविमलमतिहेलम् ।
प्रथमभाषातरण्डो ज्ञातः स पीङ्गलो जयति ॥]

गरुडवञ्चनारूपगुरुबुद्धिमाहात्म्येन विविमलमतिहेल त्रि पक्षी गरुडस्तस्य विमला या मतिर्बुद्धिस्तस्या हेला अनादरो यस्मिन्कर्मणि एव यथा स्यात्तथा स पिङ्गल शेषनागो जयति । स क । यो ज्ञात । अर्थाद्गरुडन । पिङ्गलनागोऽय ब्राह्मणरूपस्तिष्ठतीति । कीदृश । विविधमात्रारूपसागरपार प्राप्त । यद्वा विविधमात्राभि प्रस्तार कुर्वन्समुद्रपार प्राप्त । पुन कीदृश । प्रथम भाषाया अवहट्ट(अपभ्रंश)भाषायास्तरण्डस्तरणिरित्यर्थ । ‘पादालिन्दी तरण्डो नौ’ इति हारावली । सस्कृते स्वाद्यकविर्वाल्मीकि । प्राकृते शालिवाहन । भाषाकाव्ये पिङ्गल । अत एव प्रथमपदोपादानम् । प्रसिद्ध चैतल्लोके कथानकम्—एकदा शेषनागो ममोपरि कियती भूमिरस्तीति पृथिव्या विस्तार जिज्ञासु पिङ्गलनामा ब्राह्मणो भूत्वा भुवमवातरत् । अनन्तर च गरुड प्रसिद्धवैरत्वात्त जिघत्सुर्दूरादधावत् । तदा पिङ्गलस्तमवादात्—‘अह कविर्मम कौशल पश्य यदेकत्र लिखामि न तदन्यत्रेति । यद्येकाकारमङ्क पश्यसि तदा मा खादिष्यसीति तनानुमत एकाक्षरादिषड्विंशत्यक्षर(पर्यन्त) प्रस्तार कृत्वा समुद्रतीरपर्यन्त गतवान् त वञ्चयित्वा जल प्रविवेश । अथ ‘सायानिक’ पिङ्गल स्याच्छेपनागोऽपि पिङ्गल’ इति कोपमहिम्ना स पिङ्गल पोतवणिग्जयति । स क । यो विशिष्टमतिहल यथा स्यात्तथा विविधया अनेकरूपया मात्रा धनेन वाणिज्य कर्तु सागरपार प्राप्त । कादृश । प्रथममेव भासमानस्तरण्डो नौर्यस्य भाभि कान्तिभिरस्यते क्षिप्यते इति भासस्तादृशस्तरण्डस्तरिर्यस्येति वा । पुन । ज्ञात । अर्थादन्यै पोतवणिग्भिरित्यर्थ । गाथा छन्द । तत्तल्लक्षण तु तत्प्रकरणे ज्ञातव्यमिति न लिख्यत ॥

एवमाचरितमङ्गल सप्रति गुरुलघुविवर्त छन्द शास्त्र मन्वानस्तद्द्वयव्यवस्था कुर्वनाह—

दीहो सजुत्तपरो बिन्दुजुओ पाडिओ अ चरणन्ते ।
स गुरू वङ्क दुमत्तो अण्णो लहु होइ सुद्ध एक्कलो ॥ २ ॥

१ ‘पढम’ इति रविकर’ २ ‘प्राप्तोऽपि विमल’ इति रवि० ३. ‘णाग’ इति रवि०.

[दीर्घः संयुक्तपरो बिन्दुयुतः पातितश्च चरणान्ते ।
स गुरुर्वक्रो द्विमात्रोऽन्यो लघुर्भवति शुद्ध एककलः ॥]

दीर्घः—आ, ई, ऊ, ऋ, ए, ओ, अ । स्वरान्तस्य प्राकृते ओकारादेशस्तेन तद्ग्रहणम् । तथा संयुक्तः परो यस्य एवंविधः पूर्वो वर्णः। प्राकृते एतावन्त एव । अत एवोक्तमभियुक्तैः—'एओअमलपुरओ सआरपुव्वेहि वेवि वण्णाओ । कचतवग्गे अन्ता दह वण्णा पाइवे ण हुअन्ति ॥' अस्यार्थः— ए ओ अ म ल इति पञ्च वर्णानां पुरतः ऐ औ अः य व इति पञ्चैव । सकारस्य पश्चाद्द्वावपि वर्णौ शषौ । कचतवर्गाणामन्त्याश्चयः ङञनाः । संभूय दश वर्णाः प्राकृते न भवन्ति । चरणान्ते पातितो वा गुरुरिति । एवंविधो यो वर्ण. स गुरुर्भवति । अत्र विकल्पार्थे चकारः । किंरूपो गुरुरित्यपेक्षायामुच्यते—वक्रः अनृजुः । सोऽपि कतिमान इत्युच्यते—द्विमात्रो द्विकलः । उक्तं च—'गुरुस्तु द्विकलो ज्ञेयो नागदन्तसमाकृति' इति । अन्यो द्वितीयो लघुर्भवति । कीदृशः। शुद्धोऽवक्रः । एककल एकमात्रः । उक्तं च—'लघुस्तदन्यः शुद्धोऽसावेकमात्रः प्रकीर्तितः' इति । ताभ्यामेव गणपञ्चाभ्यां प्रयोजनमिति । गाथा छन्दः ॥

तानुदाहरणेन दृढीकर्तुमाह—

माई रूए हेओ हिण्णो जिण्णो अ वुड्ढओ देओ ।
संभुं कामन्ती सा गोरी गहिलत्तणं कुणइ ॥
[मातः, रूपैर्हेयो हीनो जीर्णश्च वृद्धो देवः ।
शंभुं कामयमाना सा गौरी ग्रहिलत्वं करोति ॥]

पार्वत्या शभौ वृते विजयादीनामन्योन्य सलापः । मातरय वरो रूपेण हेयस्त्रिनेत्रत्वात् । हीनो जात्यादिना अलक्ष्यजन्मत्वात् । जीर्णश्च रोगादिना कण्ठस्थितविषत्वात् । वृद्धो वयसा । यद्वा अवृद्धोऽसमृद्ध इत्यर्थः । दिगम्बरत्वात् । देवः दीव्यति क्रीडतीति देवः पाक्षि(शि)कः । श्मशानवासक्रीडासक्त एतादृशः । तमपि शभु कामयमानाभिलषमाणा गौरी अहो ग्रहिलत्वमपि(ति)निर्बन्धं करोतीत्युपहासः । अत्र माईत्यादि दीर्घोदाहरणम् । हिण्णो जिण्णो इति सयुक्तपरोदाहरणम् । सभु (इति) सानुस्वारोदाहरणम् । कुणइ इत्यत्र पादान्तलघोर्गुरुत्वोदाहरणमिति । गाथा छन्दः ॥

एव लक्षणेन गुरुलघूनुपलक्ष्य कुत्रचित्तयोरपवादमाह—

कत्थवि संजुत्तपरो वण्णो लहु होइ दंसणेण जहा ।
परिहसइ चित्तधिज्जं तरुणिकडक्खम्मि णिव्वुत्तम् ॥ ३ ॥
[कुत्रापि संयुक्तपरो वर्णो लघुर्भवति दर्शनेन यथा ।
परिस्खलति चित्तधैर्यं तरुणीकटाक्षे निर्वृत्तम् ॥]

---

१. मूलपुस्तके रविकरकृतटीकायां च 'माई' इत्यस्मात्प्राक् 'जहा (यथा)' इत्यधिकमस्ति.

कुत्रचित्स्थले संयुक्तः परो यस्य एवंविधाः पूर्वो वर्णो लघुरेव भवति । दर्शनेन लक्ष्यानुरोधेन यथा । उदाह्रियत इति शेषः । युवतीनेत्रप्रान्ते सपर्मं चित्तधैर्यं परिस्खलति । अत्र ह्र इत्यस्य संयुक्तपरस्यापेक्षया पूर्वस्य रिकारस्य गुरोर्लघुत्वम् । तथात्वे छन्दोमङ्गप्रसङ्गः । गाथा छन्दः ॥

अपवादान्तरमाह—

ईहिकारा बिन्दुजुआ एओ सुद्धा अ वण्णमिलिआ वि लहू ।
रह वञ्जणसंजोए परे असेसं पि सविहासम् ॥ ४ ॥

[इकारहिकारौ बिन्दुयुतौ एऔ शुद्धौ च वर्णमिलितावपि लघू ।
रेफहकारौ व्यञ्जनसंयोगे परे अशेषमपि सविभापम् ॥

इकारहकारौ बिन्दुयुतौ तथा एकारौकारौ च शुद्धौ एकलौ वर्णमिलितौ च तथैव रेफहकारावपि व्यञ्जनेन सह संयुक्ता अपि सर्वे गुरवोऽपि विकल्पेन क्वचिल्लघवो भवन्तीत्यर्थः । सिंहिणी छन्दः ॥

एतदेवोदाहरणेन दृढीकरोति जहा—यथा—

माणिणि माणहिँ काँइँ फल ऐओ जे चरण पडु कन्त ।
सहजे भुअँगम जइ णमइ किं करिए मणिमन्त ॥

[मानिनि मानेन किं फलं ऐयं यदि चरणयोः पतितः कान्तः ।
सहजेन भुजंगमो यदि नमति किं क्रियेते मणिमन्त्रौ ॥]

मानिनि, मानेन किं फलं प्रयोजनं अयं यदि कान्तश्चरणयोः पतितः । तदा त्यजैनं निष्फलं मानमित्यर्थः । यदि स्वभावादेव भुजगमः कामुको नमति तदा स्त्रीभिः प्रियवशीकरणाय मणिमन्त्रौ किं क्रियेते । न किमपीत्यर्थः । अर्थान्तरे च भुजगमः सर्पो यदि स्वभावेनैव नमति शान्तो भवति तदा गारुडोद्गारिमणिमन्त्रौ किं क्रियेते । अपि तु न क्रियेते । प्राकृते तु हि काइ इत्यत्र इकारहिकारौ बिन्दुयुतावपि लघूभवतः । केवलौ एकारौकारौ लघु । जे इत्यत्र जवर्णमिलित एकारोऽपि लघुः । ऐओ यदीत्यर्थे ॥

रहवञ्जणस्स जहा—'रेफहकारव्यञ्जनयुक्तस्य' यथा'—

चेउँ सहज तुहुँ चञ्चला सुन्दरिह्रदहिँ वलन्त ।
पअउ ण घल्लसि खुल्लणा कीलसि उण उह्रसन्त ॥

१. 'इहिआरा' रवि०. २. 'किं करिअए' रवि०. ३. 'मानैः' रवि०. ४. 'एष' रवि०. ५. 'कुरुत.' रवि०. ६. 'एओ जे इति वारेन्द्री भाषा । एष यदीत्यर्थः' रवि०. ७. 'चेइ' रवि०. ८. 'खुल्लणा इति देशी अर्थे वर्तते' इति रवि०. ९. 'क्रीडसि' रवि०.

[चेतः सहजेन त्वं चञ्चलं सुन्दरीह्रदे वल्गत् ।
पदमपि न ददासि अधम क्रीडसि पुनरुल्लसत् ॥]

हे चेत, त्वं स्वभावादेव चञ्चलमसि इदानीं तु सुन्दरीरूपे ह्रदे पतत् (वल्गत्) पदमपि नान्यत्र ददासि। अतस्तव सहजमपि चाञ्चल्यं गतमिति भावः। किं च रे अधम उल्लसत्पुनस्तत्रैव क्रीडसि। नापयासि ततः इति भावः। कस्यांचिदप्राप्यायामासक्तस्य कस्यचिद्वचनम्। अत्र हसयोगपूर्वस्य रि इत्यस्य लघुत्वम्। तथा हसयोगपूर्वस्य उकारस्य लघुत्वम्। गुरुत्वे छन्दोभङ्गः। दोहा छन्दः ॥

पुनरपि विकल्पान्तरमाह—

जइ दीहो विअ वण्णो लहु जीही पढइ सो वि लहू ।
वण्णो वि तुरिअपढिओ दोत्तिण्णि वि एक्क जाणेहु ॥ ५ ॥

[यदि दीर्घमपि वर्णं लघु जिह्वा पठति सोऽपि लघुः ।
वर्णौ (वर्णा वा) अपि त्वरितपठिता द्वौ त्रयो वा एकं जानीत ॥]

यदि दीर्घमपि गुरुमपि वर्णं लघु कृत्वा जिह्वा पठति तदा तं वर्णं लघुं जानीत। किं च वर्णौ त्वरितपठितौ वर्णा वा त्वरितपठिता द्वौ वा त्रयो वा एक एव वर्ण इति जानीत। गाथा छन्दः ॥

उदाहरणमाह। जहा—

अरेरे वाहहि कान्ह णाव छोटि डगमग कुगति ण देहि ।
तइ इथि णदिहिँ सतार देइ जो चाहसि सो लेहि ॥

[अरेरे वाहय कृष्ण नावं सूक्ष्मां डगमग कुगतिं न देहि ।
त्वमस्यां नद्यां संतारं दत्त्वा यदपेक्षसे तद्गृहाण ॥]

अत्र अरे रे इति संबोधनद्वयं त्वरया प्रयुज्यते। वाहय कृष्ण नावं सूक्ष्माम्। डगमगेत्यनुकरणम्। चञ्चलायामेतस्यां नावि जलभरणेन कुगतिं मा देहि। त्वमेवैतस्या नद्या यमुनायां सतारं पारगमनं दत्त्वा आतरत्वेन यदपेक्षसे तदेव गृहाण। मनोभिलषितमालिङ्गनचुम्बनादिसुखमस्मत्तोऽपि गृहीत्वा पारं दर्शयति भीतगल्वीवचनम्। अत्र त्वरितपठने वर्णानामेकत्वम्। तथात्वे छन्दोभङ्गः। दोहा छन्दः ॥

छन्दोग्रन्थस्योपादेयतां दर्शयति—

जेम ण सहइ कणअतुला तिलतुलिअं अद्धअद्धेण ।
तेम ण सहइ सवणतुला अवछन्दं छन्दभङ्गेण ॥ ६ ॥

१ 'जीहा' रवि०. २ 'यदि दीर्घोऽपि वर्णो लघु जिह्वया पठ्यते' रवि०. ३ 'वर्णोऽपि त्वरितपठितो' रवि० ३ 'रेरे' रवि० ४ 'क्षुद्रा' रवि०. ५ 'दु ख' रवि० ६. 'सतार्य यत्प्रार्थयसि' रवि० ७ 'नाविकमुद्दश्य रे इति संबोधनं युक्तम्। प्रथमप्रतीके लघुजिह्वापाठाल्लघुत्वम्। द्वितीयप्रतीके रकारगकारमकाराणां त्वरितपठितानामेकवर्णता' रवि०.

[यथा न सहते कनकतुला तिलतुलितमर्धार्धेन ।
तथा न सहते श्रवणतुला अपच्छन्दस्कं छन्दोभङ्गेन ॥]

अयमर्थः—यथोभयपार्श्वसमाया कनकतुलायास्तिलार्धदानेनापि वैषम्यं भवति तादृशमपि भारं न सहते तथैव श्रवणतुलापि छन्दोभङ्गेनापच्छन्दस्कं कवित्वं न सहते । तादृशं काव्यं तस्या भारायत इत्यर्थः । अत्र जेते इति जिह्वया लघूकृत्य पठनीयौ । गुरुत्वे छन्दोभङ्गः । गाहू छन्दः ॥

न केवलं छन्दोभङ्गेन श्रवणदुःखमपरमप्यनिष्टं भवतीत्याह—

अबुह बुहाणं मज्झे कव्वं जो पढइ लक्खणविहूणम् ।
भूअग्गलग्गखग्गहिं सीसं खुडिअं ण जाणेइ ॥ ७ ॥

[अबुधो बुधानां मध्ये काव्यं यः पठति लक्षणविहीनम् ।
भुजाग्रलग्नखड्गेन शीर्षं खण्डितं न जानाति ॥]

बुधानामधीतच्छन्दःशास्त्राणां मध्ये लक्षणविहीनं काव्यं यः पठति सोऽबुधः । मूर्ख इत्यर्थः । किं च भुजाग्रलग्नखड्गेन खण्डितमपि स्वशीर्षं न जानाति । भुजाग्रमङ्गुलीमेव गमयेत्तेनोदस्तहस्ताङ्गुल्येदमशुद्धं कवित्वमिति यदेखाकरणं तदेव खड्गायत इत्यर्थः । तेन शीर्षं कवित्व(त्व)रूपं खण्डितमिति न जानाति । यद्वा भुजाग्रलग्ना ये खड्गा इव नखाः । एतेन 'छन्दोभङ्गे नखो देयः' इति प्राच्याः । गाथा छन्दः ॥

अथ गुरुलघुज्ञानानन्तरं गणाः सावसरास्तत्र च्छन्दःशास्त्रे मात्राप्रस्तारो वर्णप्रस्तारश्चेति प्रस्तारद्वयं तत्र मात्राप्रस्तारे कलागणनापुरःसरं गणव्यवस्थां कुर्वन्नाह—

टट्ठडढाणह मज्झे गणभेआ होन्ति पञ्च अक्खरओ ।
छ.प.च.त.दा. जहसंखं छप्पञ्चचउत्तिदुक्लासु ॥ ८ ॥

[टठडढाणां मध्ये गणभेदा भवन्ति पञ्चाक्षरतः ।
छ. प. च. त. दा. यथासंख्यं षट्पञ्चचतुस्त्रिद्विकलासु ॥]

अयमर्थः—टठडढणाः पञ्चाक्षराणि षट्पञ्चचतुस्त्रिद्विकलानां यथासंख्यं संज्ञा भवन्तीत्यर्थः । गाथा छन्दः ॥

---

१ 'मध्ये अक्षराणां पञ्चाक्षराणि गणभेदा भवन्ति । के ते । टठडढणाः । त एव यथासंख्यं छ प च त द संज्ञका भवन्ति । कुत्र सकलिता । षट्पञ्चचतुस्त्रिद्विकलासु । तथा च षट्कलष्टगणः स एव छगणः । पञ्चकलष्ठगणः स एव पगणः । चतुष्कलो डगणः स एव चगणः । त्रिकलो ढगणः स एव तगणः । द्विकलो णगणः स एव दगणः ।' रवि०

अथ तेषां ससंख्यं भेदमाह—

टगणो तेरहभेओ भेआ अट्ठाइँ होन्ति ठगणस्स ।

डगणस्स पञ्च भेआ तिअ ढगणे वे वि णगणस्स ॥ ९ ॥

[टगणस्त्रयोदशभेदो भेदा अष्टौ भवन्ति ठगणस्य ।

डगणस्य पञ्च भेदास्त्रयो ढगणे द्वावपि णगणस्य ॥]

टगणः षट्कलस्त्रयोदशभेदः । ठगणः पञ्चकलोऽष्टभेदः । डगणश्चतुष्कलः पञ्चभेदः । ढगणस्त्रिकलस्त्रिभेदः । णगणो द्विकलो द्विभेदः । गाथा छन्दः ॥

मात्राप्रस्तारप्रकारमाह—

पढमगुरुहेट्ठठाणे लहुआ परिठवहु अप्पबुद्धीए ।

सरिसा सरिसा पन्ती उव्वरिआ गुरुलहू देहु ॥ १० ॥

[प्रथमगुरोरधःस्थाने लघुं परिस्थापयतात्मबुद्ध्या ।

सदृशी सदृशी पङ्क्तिरुर्वरिते गुरुलघू दत्त ॥

आत्मबुद्ध्या । अल्पबुद्धय शिष्या वा । सदृशी सदृशी पङ्क्तिः । कर्तव्येति शेषः । उर्वरिते गुरु लघु च दत्त । आदौ सर्वे गुरवो लेख्याः । गुर्वध स्थितकलातः प्राग् लघुना कलापूरण चेद्भवति तदा लघुरेव देयः । नो चेद्गुरु दत्त्वा अपेक्षितश्चेत्तदा लघुर्देयो यावत्कलापूरणम् । वाणीभूषणेऽप्युक्तम्—'प्रथमगुरोरधरे लघु दत्त्वा शेष समानमितरेण । वद्वृत्ते गुरु लघु वा प्रस्तारः सर्वलघु यावत् ॥' अभियुक्तैरप्युक्तम्—'गुरोरधस्तादाद्यस्य लघु न्यस्योर्ध्ववत्पुनः । पश्चादूने गुरु न्यस्येल्लघुं वापेक्षित क्रमात् ॥ यावत्सर्वलघुस्ताव- न्मात्राप्रस्तारके बुधः ।' वर्णवृत्ते तूद्वृत्तस्थले गुरुरेव देय इति नियमः । तदुक्त वृत्तरत्नाकरे—'पादे सर्वगुरावाद्याल्लघु न्यस्य गुरोरधः । यथोपरि तथा शेष भूयः कुर्यादमु विधिम् ॥ ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् । प्रस्तारोऽय समाख्यातश्छन्दोविचितिवेदिभिः ॥' इति । गाथा छन्दः ॥

अथ षट्कलप्रस्तारे त्रयोदशगणानां नामान्याह—

हरससिसूरो सक्को सेसो अहिकमलबम्भकँलिचन्दो ।

धुअधम्मो सालिअरो तेरह भेओ छैमत्ताणम् ॥ ११ ॥

[हरः शशी सूरः शक्रः शेषोऽहिः कमलं ब्रह्मा कँलिश्चन्द्रः ।

ध्रुवो धर्मः शालिकरस्त्रयोदशभेदाः षण्मात्राणाम् ॥]

---

१. 'परिस्थापय' रवि०. २. 'उद्वृत्ते' रवि०. ३. 'देहि' रवि०. ४. 'किणिअन्धो' रवि०. ५. 'मत्ताइ' रवि०. ६. 'शूर.' रवि०. ७. 'किणिबन्ध' इत्येक नाम रविकरमते. ८. 'शाली चरः' इति नामद्वय रविकरमते.

हार: SSS, शशी ।।SS, सूर: ।S।S, शक्र: S।।S, शेष: ।।।।S, अहि: ।SS।, कमलम् S।S।, ब्रह्मा ।।।S।, कलि: SS।।, चन्द्र: ।।S।।, ध्रुव: ।S।।।, धर्म: S।।।।, शालिकर: ।।।।।।, इति त्रयोदशभेदाः षण्मात्राणां टगणस्येति। एषां पर्यायेणापि गणो बोद्धव्यः। लक्ष्ये तथैव दर्शनात्। गाथा छन्दः॥

अथ पञ्चकलप्रस्तारेऽष्टगणानां नामान्याह—

इन्दासण अरु सूरो चाओ हीरो अ सेहरो कुसुमो।
अहिगण पाइक्कगणो पञ्चकले पिङ्गले कहिओ॥ १२॥

[इन्द्रासनमपरः सूरश्चापो हीरश्च शेखरः कुसुमम्।
अहिगणः पापगणः पञ्चकले पिङ्गले कथितः॥]

इन्द्रासनम् पश्चात्सूर: चापः, हीरः चकारः पादपूरणे। शेखरः कुसुमम्, अहिगणः पापगणः लक्ष्ये तथैव दर्शनात्। 'अहिगण पापगणो धुव' इति वा पाठः। तत्र ध्रुव निश्चितम्। एवं पञ्चकलोऽष्टविधछगणस्य भेदः कथितः। प्रस्तारो यथा—।SS, S।S, ।।।S, SS।, ।।S।, ।S।। S।।।, ।।।।।, अत्र पञ्चकलप्रस्तारे आदौ लघु दत्वा प्रस्तारो विधेय.। एवमन्यविषयेष्वपि बोद्धव्यम्। अत एव 'लघुकालम्बेन' इति पश्चाद्वक्ष्यति। गाथा छन्दः॥

अथ चतुष्कलप्रस्तारे पञ्चगणानां नामान्याह—

गुरुजुअ कण्णो गुरुअन्तकरअलो पैअहरम्मि गुरुमज्झे।
आइगुरुव्वसुचरणो विप्पो सव्वेहिँ लहुएहिं॥ १३॥

[गुरुयुगः कर्णो गुर्वन्तः करतलं पयोधरो गुरुमध्यः।
आदिगुरुर्वसुचरणो विप्रः सर्वैर्लघुकैः॥]

म्मीति पादपूरणे। इति डगणभेदाः पञ्च। चतुष्कलप्रस्तारो यथा—SS, ।।S, ।S।,S।।, ।।।।, गाथा छन्द॰॥

अथ त्रिकलप्रस्तारे गणत्रितयाना(यस्य) नामान्याह—

धअचिह्न चिरचिरालअतोमरतुम्बूरुपत्तचुअमाला।
रसवासपवणवलअं लहुआलम्बेण जाणेहु॥ १४॥

[ध्वजश्चिह्नं चिरं चिरालयस्तोमरं तुंम्बरुः पत्रं चूतमाला।
रसो वासः पैवनवलयं लघुकालम्बेन जानीत॥]

लघुकालम्बेन लघ्वादिनिकस्य नामानि जानीत। गाथा छन्दः॥

---

१. 'अहिअणपाइअणो धुव' रवि०. २. 'पओहरम्मि' रवि०. ३. 'तुम्बरुपत्र' रवि०. ४. 'पवनः वलय' रवि०.

सुरवइपटहत्ताला करतालाणन्दछन्देण ।
णिव्वाणं ससमुद्दं तूरं एहप्पमाणेण ॥ १५ ॥

[सुरपतिः पटहस्तालः करताल आनन्दश्छन्दसा ।
निर्वाणं ससमुद्रं तूर्यं एतानि प्रमाणेन ॥]

आनन्दश्छन्दसा सह । छन्द इत्यपि नामेत्यर्थः । ससमुद्रं समुद्रसहितं तूर्यं तूर्यपर्यायेणापि । गुर्वादित्रिकलस्यैतानि नामानि जानीत । गाहू छन्दः ॥

भावारसताण्डवअं णारीअं कुणह भाविणिअम् ।
तिलहुगणस्स कइअरो इअ णामं पिङ्गलो कहइ ॥ १६ ॥

[भावरसताण्डवानां नारीणां कुरुत भामिनीनाम् ।
त्रिलघुगणस्य कविवर इति नाम पिङ्गलः कथयति ॥]

भावस्य यन्नाम रसस्य ताण्डवस्य नारीणां भामिनीनां च यानि नामानि तानि सर्वाणि त्रिलघुगणस्य कुरुतेति कविवरः पिङ्गलः कथयतीति । ढगणस्य प्रस्तारो यथा—।S, S।, ।।।, गाहू छन्दः ॥

अथ द्विकलप्रस्तारे गणद्वयनामान्याह—

णेउररसणाभरणं चामरफणिमुद्धकणअकुण्डलअम् ।
वङ्कं माणसवलअं हारावलि णेण गुरुअस्स ॥ १७ ॥

[नूपुरो रसनाभरणं चामरं फणी मुग्धः कनकं कुण्डलकम् ।
वक्रो मानसं वलयो हार आवलिरनेन गुरुकस्य ॥]

एतेषां पर्यायशब्देनापि गुरोर्नाम जानीहि । गाथा छन्दः ॥

णिअपिअपरमउर्सुपिए विहुहुति समासु कइदिट्ठम् ।
[निजप्रियः परमसुप्रियः द्विलघोरिति समासतः कविदृष्टम् ।]

समासतः संक्षेपतः कविना पिङ्गलेन दृष्टं नामेति शेषः । णगणस्य प्रस्तारो यथा—S, ।।.

अथ लक्ष्यानुसारीणि क्रमतश्चतुष्कलानां नामान्तराण्याह—

अह चौमत्तहणामं फणिराओ पइगणं भणई ॥ १८ ॥
सुरअलअं गुरुजुअलं कण्णसमाणेण रसिअरसलग्गम् ।
मणहरणसुमइलम्बिअलहलहि अइता सुवण्णेण ॥ १९ ॥

१. 'छन्दम्' रवि०. २. 'कुलहभावि' रवि०. ३. 'भावः रसस्ताण्डवं नारी कुलभाविनी एतन्नामपञ्चक' रवि०. ४. 'सुप्पअ' रवि०. ५. 'समासकविदृष्टं समासकविः पिङ्गलः । अल्पाक्षरेण प्रचुरार्थप्रतिपादकत्वात्' रवि०. ६. 'चउमत्तह' रवि०. ७. 'मण' रवि०. ८. 'लहलहिअन्ता' रवि०.

[अत्र(थ) चतुर्मात्रिकाणां नामानि फणिराजः प्रतिगणं भणति ॥
सुरतलता गुरुयुगलं कर्णसमानेन रसिको रसलग्नम् ।
मनोहरणं सुमतिर्लम्बितो लहलहितानां सुवर्णेन ॥]

कर्णसमानेन नाम्ना सह रसिको रसलग्नश्चेति । कर्णसमानेन कुन्तीपुत्रादिपर्यायग्रहणम् । लहलहितानामुत्पन्नप्रायाणां नाम्नाम् । गुरुयुगनामानि सुवर्णेन सह ज्ञेयानीत्यर्थः ॥

अथान्तगुरोश्चतुष्कलस नामान्याह—

करपाणिकमलहत्थं वाहो भुअअण्डपहरणअसणिअम् ।
गअभरणरअणणाणाभुँअभरणं होन्ति सुपसिद्धम् ॥ २० ॥
[करपाणिः कमलं हस्तो बाहुर्भुजदण्डः प्रहरणमशनिः ।
गजाभरणं रत्नं नानाभुजाभरणं भवन्ति सुप्रसिद्धानि ॥]

नानाभुजाभरणं केयूरादि । भवन्ति सुप्रसिद्धानि नामानि गुर्वन्तस्येति । गाथा छन्दः ॥

अथ मध्यगुरोर्नामान्याह—

भुअवइअसणरगअवइवसुहाहिवरज्जुगोवालो ।
उण्णाअकचक्कवईपअहरथणअं णरिन्दाइम् ॥ २१ ॥
[भूपत्यश्वनरगजपतिवसुधाधिपरज्जुगोपालाः ।
उद्गतनायकचक्रवर्तिपयोधरस्तननरेन्द्राः ॥]

भूपतिः । अश्वपतिः । नरपतिः । गजपतिः । वसुधाधिपः । रज्जुः । गोपालः । उंद्गतनायकः । चक्रवर्ती । पयोधरः । स्तनः । नरेन्द्रः । इति नामानि मध्यगुरोश्चतुष्कलस्य । गाहू छन्दः ॥

अथादिगुरोर्नामान्याह—

पअपाअचरणजुअलं अवरु पआसेइ गण्डचलहद्दम् ।
ताअपिआमहदहणं णेउररइजङ्घजुअलेहिँ ॥ २२ ॥
[पदपादचरणयुगलं अन्यत्प्रकाशयति गण्डबलभद्रम् ।
तातपितामहदहनं नूपुररतिजङ्घायुगलेन ॥]

पदम् । पादः । चरणयुगलम् । अवरु अन्यदित्यर्थः । गण्डः । बलभद्रः । तातः । पितामहः । दहनः । नूपुरम् । रतिः । जङ्घायुगलेन सह इति नामानि पिङ्गलः प्रकाशयतीति योज्यम् । गाथा छन्दः ॥

---

१. 'सुरतरु' रवि०. २. 'रसिकमनोलग्न' रवि०. ३. 'भुअअ' रवि०. ४. 'करःपाणिकमल' रवि०. ५. 'भुजाभरणानि' रवि०. ६. 'राजा' रवि०. ७. 'अपरो नायकः' रवि०. ८. 'जुअलेन' रवि०.

अथ चतुर्लघोर्नामान्याह—

पढमं एरिसि विप्पो वीए सरपञ्चजाइसिहरेहिं ।
दिअवरपरमोपाए होइ चउक्केण लहुएण ॥ २३ ॥

[प्रथमं स ऋषिर्विप्रो द्वितीये शरपञ्चजातिशिखरेण ।
द्विजवरपरमोपायः भवति चतुष्केण लघुकेन ॥]

प्रथमं नामेति स ऋषिः । विप्रः । द्वितीयं प्राकृते पूर्वनिपातानियमात्पञ्चशर इति । एकदेशग्रहणाच्छर इत्यपि । लक्ष्येषु तथा दर्शनात् । जातिः शिखरेण सह । द्विजवरः । परम । उपायः । चतुष्कलेन लघुकेन एतानि नामानीत्यर्थः । गाथा छन्दः ॥

अथ पञ्चकलाना कानिचिदुभयवृत्तसाधारणानि नामान्याह—

सुणरिन्दअहिअकुञ्जरुगअवरुदन्ताइ दन्ति अह मेहो ।
एरावइतारावइगअणं झम्पं त लम्पेण ॥ २४ ॥

[सुनरेन्द्राहिककुञ्जरगजवरदन्ता दन्ती अथ मेघः ।
ऐरावतस्तारापतिर्गगनं झम्पस्तथा लॅम्पेन ॥]

सुनरेन्द्रः । अहिकः । कुञ्जरः । गजवरः । दन्तः । दन्ती । अथेत्यानन्तर्ये । मेघः । ऐरावतः । तारापतिः । गगनम् । झम्पः । तथा लॅम्पः । इति पञ्चमात्रस्यादिलघोर्नामानि । गाथा छन्दः ॥

अथ मध्यलघोः पञ्चमात्रस्य नामान्याह—

पक्खिविराडमअन्दहवीणाअहिजक्खअमअजोहलअम् ।
सुप्पण्णपण्णगासणगरुडविआणेहु मज्झलहुए ण ॥ २५ ॥

[पक्षीविराड्मृगेन्द्रवीणाहियक्षामृतजोहलकम् ।
सुपर्णपन्नगाशनगरुडा विजानीत मध्यलघुके ननु ॥

पक्षी । विराट् । मृगेन्द्रः । वीणा । अहिः । यक्षः । अमृतम् । जोहलकम् । सुपर्णः । पन्नगाशनः । गरुडः । मध्यलघुके पञ्चकले रगणापरनामनि इति नामानि विजानीत । ण इति नन्वर्थे । उग्गाहा छन्दः ॥

अथ पञ्चकलस्यैव सामान्यनामान्याह—

बहुविविहपहरणेहिं पञ्चकलओ गणो होइ ।
[बहुविविधप्रहरणैः पञ्चकलको गणो भवति ।]

---

१. 'चरमे पाए' रवि०. २. 'प्रथममीदृशि विप्रः' रवि०. ३. 'चरमे पादे' रवि०. ४. 'तलॅन' रवि०. ५. 'वस्तुनस्तु शेषनागस्य सहस्राननत्वात्पुनरुक्ति ; दोषाय' रवि०.

बहुविविधप्रहरणैरपि तन्नामभिस्तत्पर्यायैरपि पञ्चकलको गणो भवति।

पुनश्चतुष्कलस्यैव साधारणां संज्ञामाह—

गअरहतुरंगपाइक्क एह णामेण जाण चउमत्ता ॥ २६ ॥

[गजरथतुरंगपदातय एतन्नाम्ना जानीहि चतुर्मात्रम् ॥]

गजः। रथः। तुरंगः। पदातिः। एतन्नाम्ना पर्यायेणापि जानीहि चतुर्मात्रम्। विग्गाहा छन्दः॥

अथ सामान्यतो गुरुनामान्याह—

ताडङ्कहारणेउरकेऊरओ होन्ति गुरुभेआ।

[ताटङ्कहारनूपुरकेयूराणि भवन्ति गुरुभेदाः।]

ताटङ्कः। हारः। नूपुरम्। केयूरम्। इति गुरुभेदाः। नामभेदा इत्यर्थः।

तथैव लघुनामान्याह—

सरमेरुदण्डकाहल लहुभेआ होन्ति एताइम् ॥ २७ ॥

[शरमेरुदण्डकाहला लघुभेदा भवन्ति एतावन्तः ॥]

शरः। मेरुदण्डः। काहला। लघुभेदा भवन्ति। गाहू छन्दः॥

अपि च।

सङ्खं फुल्लकहालं रवं असेसेहिं होन्ति कणअलअम्।

रूवं णाणाकुसुमं रसगन्धं सद्दपरमाणम् ॥ २८ ॥

[शङ्खः पुष्पं काहलः रवः अशेषैर्भवति कनकलता।

रूपं नानाकुसुमं रसगन्धशब्दप्रमाणम् ॥]

शङ्खः। पुष्पम्। काहलम्। रवः। अशेषैरेतैः सह कनकलतापि। कनकं लता चेति नामद्वयं वा। रूपम्। नानाकुसुमम्। रसः। गन्धः। शब्दश्चेति लघोः प्रमाणं निश्चयेन नामानि भवन्ति। गाहा छन्दः॥

अथ वर्णवृत्तानां गणानाह—

मो तिगुरू णो तिलहू लहुगुरुआई यभौ ज मज्झगुरू।

मज्झलहू रो सो उण अन्तगुरू तो वि अन्तलहुए ण ॥ २९ ॥

[मस्त्रिगुरुर्नस्त्रिलघुर्लघुगुरुकादी यभौ जो मध्यगुरुः।

मध्यलघू रः सः पुनरन्तगुरुस्तोऽप्यन्तलघुर्ननु ॥]

मो मगणस्त्रिगुरुस्त्रयोऽपि वर्णा गुरवो यत्र। नो नगणस्त्रिलघुः। लघुरादौ यस्य स यगणः। गुरुरादौ यस्यासौ भगणः। मध्ये गुरुर्यस्यासौ जगणः। मध्ये लघुर्यस्यासौ रो रगणः। सगणः पुनरन्ते गुरुर्यस्य। तगणोऽप्यन्ते लघुर्यस्य। अवहट्ठभाषायां लिङ्-

विभक्तिवचनरचनमतन्त्रम् । ण इति नन्वर्थे । यद्वा अन्तलघुकेन तगणो भवतीत्यर्थः । एवमष्टौ गणाः । क्रमोऽत्राविवक्षितः । क्रमस्तु वृत्तरत्नाकरे—'सर्वगुर्मो मुखान्तर्लौ यरावन्तगलौ सतौ । ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥' एतैरेव गणैः समस्तैर्वैखरीसृष्टिर्व्याप्ता । तदुक्तं छन्दोरत्नाकरे—'म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः । समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥' उग्गाहा छन्दः ॥

अथ कवित्वकरणानन्तरं कविनायकयोः क्वचित्पीडा क्वचिच्च समृद्धिर्दृश्यते तथा तुष्ट्यतुष्टी तत्र देवतातुष्ट्यतुष्टी हेतू इति गणदेवता आह—

पुहवीजलसिहिपवणो गअण अ सूरो अ चन्दमा णाओ ।
गणअट्ठ इट्ठदेओ जहसङ्खं पिङ्गले कहिओ ॥ ३० ॥

[पृथिवीजलशिखिपवनाः गगनं च सूर्यश्च चन्द्रमा नागः ।
गणाष्टके इष्टदेवा यथासंख्यं पिङ्गले कथिताः ॥]

मगणस्य पृथिवी । यगणस्य जलम् । रगणस्य शिखी । सगणस्य पवनः । तगणस्य गगनम् । जगणस्य सूरः । भगणस्य चन्द्रः । नगणस्य नागः । एवं गणाष्टकस्येष्टदेवता यथासंख्यं पिङ्गलेन कथिताः । अत्र यस्य कवित्वस्यादौ यो गणस्तिष्ठति तस्यैव गुणदोषौ ग्राह्याविति । भूषणेऽप्युक्तम् ।—'मही जलानलानिलाः स्वर्यमेन्दुपन्नगाः । फणीश्वरेण कीर्तिता गणाष्टकेष्टदेवताः ॥'

अथ गणाना मित्रामित्रादिकमाह—

मगणणगण दुइ मित्त हो भगणयगणहो भिच्च ।
उआसीण जत दुअउ गण अवसिट्ठउ अरि णिच्च ॥ ३१ ॥

[मगणनगणौ द्वौ मित्रे भवतः भगणयगणौ भवतो भृत्यौ ।
उदासीनौ जतौ द्वौ गणाववशिष्टावरी नित्यम् ॥]

मगणो नगणश्च द्वौ मित्रे भवतः । भगणयगणौ भृत्ये भवतः । जगणतगणौ द्वावप्युदासीनौ भवतः । अवशिष्टौ सगणरगणौ नित्यमरीभवतः । भूषणेऽपि—'मैत्र्यं मगणनगणयोर्यगणभगणयोश्च भृत्यता भवति । औदास्यं जतगणयोररिभावः सगणरगणयोरुदितः ॥' इति । इयं च गणमित्रामित्रव्यवस्था कविनायकयोरिति बोद्धव्यम् । दोहा छन्दः ॥

अथ तेषां फलान्याह—

मगण रिद्धि थिरकज्ज यगण सुह संपअ दिज्जइ
रगण मरण संपलइ सगण सहवास वसिज्जइ ।

तगण सुण्णफल कहइ जगण खरकिरण विसेसइ
भगण ठवइ मङ्गलइ सुकइपिङ्गल परिभासइ ।
जत कव्व गाह दोहइ सुणहु णगण होइ पढमक्खरहिं
तसु रिद्धिवुद्धि सव्वै फुरहि रणराउल दुत्तर तरइ ॥ ३२ ॥

[मगण ऋद्धिं स्थिरकार्यं यगणः सुखं संपदं ददाति
रगणो मरणं संपादयति सगणः सहवासाद्विवासयति ।
तगणः शून्यं फलं कथयति जगणः खरकिरणान्विशेषयति
भगणः स्थापयति मङ्गलानि सुकविपिङ्गलः परिभाषते ।
यावत्काव्यं गाथा दोहा श्रूयते नगणो भवति प्रथमाक्षरे
तदा ऋद्धिर्वृद्धिः सर्वमपि स्फुरति रणं राजकुलं दुस्तरं तरति ॥]

कवित्वस्य ग्रन्थस्यादौ वा मगणे पतिते ऋद्धिः स्थिरं च कार्यं भवति । यगणश्चेत्पतति सुखं संपदं च ददाति । रगणे पतिते मरणं भवति । सगणः सहवासान्निजदेशाद्विवासयति । तगणः शून्यं फलं कथयति । जगणः खरकिरणान्विशेषयति संतापकरो भवति । भगणः कथयति मङ्गलान्येव । तत्र प्रामाण्यं सूचयति—सुकविः पिङ्गलः परिभाषते । तदुक्तम्—'मो भूमिः श्रियमातनोति यजलं वृद्धिं रवह्निर्मृतिं सो वायुः परदेशदूरगमनं तव्योम शून्यं फलम् । जः सूर्यो रुजमादधाति विपुलां भेन्दुर्यशो निर्मलं नो नागश्च सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः ॥' यावत्काव्यं गाथा दोहा वा तत्र प्रथमाक्षरे आदौ नगणश्चेद्भवति तदा तस्य कवेर्नायकस्य वा ऋद्धिर्वृद्धिः सर्वमपि स्फुरति । दुस्तरं रणं राजकुलं च तारयतीति । सुणहु निश्चितं जानीत । भूषणेऽपि—'मः संपदं वितनुते नगणो यशांसि श्रेयः करोति भगणो यगणो जयं च । देशाद्विवासयति सो रगणो निहन्ति राष्ट्रं विनाशयति जस्तगणोऽर्थहन्ता ॥' फलविशेषभेदस्त्वभियुक्तैरुक्तः—'वर्ण्यते नायको यत्र फलं तद्गतमादिशेत् । अन्यथा तु कृते काव्ये कर्तुर्दोषावहं फलम् ॥ देवता वर्ण्यते यत्र काव्ये क्वापि कवीश्वरैः । मित्रामित्रविचारो वा न तत्र फलकल्पना ॥' इति । किंच 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि च ॥' इत्युक्तत्वाच्च । षट्पदच्छन्दः ॥

गणद्वयसंयोगेऽपि फलविशेष इति सूचयितुं गणद्वयविचारमाह—

मित्तमित्त दे ऋद्धिवुद्धि अरु मङ्गल दिज्जइ
मित्तभिच थिरकज्ज जुज्झ णिब्भअ जय किज्जइ ।

---

१. 'मङ्गलभणेअ सुइपिङ्गलभासइ' ख॰. २. 'सव्वड' ख॰.

मित्तउआसे कज्जयन्ध णहि पुणु पुणु छिज्जइ
मित्त होइ जइ सत्तु गोत्तवन्धउ पीडिज्जइ ।
अरु भिचमित्त सव कज्ज हो भिचभिच आइत्ति चल
भिचउआसें धण णसइ भिचवैरि आक्रन्द फल ॥ ३३ ॥
उआसीण जइ मित्त कज्ज किछु मन्द दिखावइ
उआसीण जइ भिच्च सव्व आइत्ति चलावइ ।
उआसीण रु उआस मन्दभल किछु णहि देक्खिअ
उआसीण जइ सत्तु मेत्त वैरिअ कइ लेक्खिअ ।
जइ सत्तु मित्त हो सुण्णफल सत्तु भिच हो वरणिणए
पुणु सत्तु उआसे धण णसइ सत्तु सत्तु णाअक खस ॥३४॥

[मित्रमित्रे दत्त ऋद्धिबुद्धी अन्यन्मङ्गलं दीयते
मित्रभृत्यौ स्थिरकार्यं युद्धे निर्भयं जयं कुरुतः ।
मित्रोदासीनयोः कार्यबन्धो नहि पुनः पुनः क्षीयते
मित्र भवति यदि शत्रुर्गोत्रं बान्धवाः पीड्यन्ते ।
अथ भृत्यमित्रे सर्वं कार्यं भवति भृत्यभृत्यावायतिर्वर्धते(?)
भृत्योदासीनयोः सर्वं धनं नश्यति भृत्यवैरिणोराक्रन्दः फलम् ॥
उदासीनो यदि मित्रं कार्यं किंचिन्मन्दं दर्शयति
उदासीनो यदि भृत्यः सर्वा आयतीश्चालयति ।
उदासीनोऽथोदासीनोऽशुभं शुभं किमपि नहि दृश्यते
उदासीनो यदि शत्रुर्गोत्रं वैरी लक्ष्यते ।
यदि शत्रुमित्रे भवति शून्यफलं शत्रुभृत्यौ गृहिणीनाशः
पुनः शत्रूदासीनयोर्धनं नश्यति शत्रुशत्रू नायकः स्खलति ॥]

ग्रन्थादौ कवित्वस्य वादौ मित्रमित्रे मगणनगणौ । विपरीतौ वेति सर्वत्र बोध्यम् । ऋद्धिवृद्धी अथ च मङ्गलमपि दत्तः । मित्रभृत्यौ मगणभगणौ नगणयगणौ वा स्थिरकार्यं युद्धे निर्भयं यथा स्यात्तथा जय च कुरुतः । मित्रोदासीनयोर्मगणजगणयोर्नगणतगणयोर्वा कार्यबन्धः स्थैर्यं नास्ति पुनः पुनः क्षीयते । मित्र शत्रुश्च यदि भवतः मगणरगणौ नगणसगणौ वा तदा गोत्रजा बान्धवाश्च पीड्यन्ते । अरु इत्यानन्तर्ये । भृत्यमित्रयोर्यगणमगणयोर्भगणनगणयोर्वा सर्वं कार्यं भवति । भृत्यभृत्ययोर्य-

गणभगणयोरायतिरुत्तरकालो वर्धते । भृत्योदासीनयोर्यगणजगणयोर्भगणतगणयोर्वा सर्वं धन नश्यति । भृत्यवैरिणोर्यगणरगणयोर्भगणसगणयोर्वा आक्रन्दो हाहाकारो भवति। पततीत्यर्थ । उदासीनो मित्र च जगणो मगणस्तगणो नगणो वा तदा कार्य किंचिन्मन्द दर्शयति साधारण फल भवति । उदासीनो यदि भृत्यो जगणो भगणस्तगणो यगणो वा तदा सर्वा आयतीश्चाल्यति । उदासीनोदासीनयोर्जगणतगणयोर्मन्दमशुभ वा शुभ वा किमपि फल न दृश्यते । उदासीनो यदि शत्रुर्जगणो रगणस्तगण सगणो वा तदा गोत्रमपि वेरी लक्ष्यते । यदि शत्रुरनन्तर मित्र रगणो मगण सगणो नगणो वा भवति तदा शून्य फल भवति । यदि शत्रुभृत्यौ रगणो यगण सगणो भगणो वा तदा गृहिणी नश्यति । पुन शत्रूदासीनयो रगणजगणयो सगणतगणयोर्वा धन नश्यति । शत्रुस्तथा पुन शत्रुर्यदि सगणस्तदा नायक पतति । षट्पदयुग्मेन गणद्वयविचार कथित । भूषणेऽपि—'मित्रयोरुदिता सिद्धिर्जय स्याद्भृत्यमित्रयो । मित्त्रोदासीनयोर्न श्री स्यात्पीडा मित्त्रवैरिणो ॥ कार्ये स्यान्मित्त्रभृत्याभ्या भृत्याभ्या सर्वशासनम् । भृत्योदासीनयोर्हानिर्हाकारो भृत्यवैरिणो ॥ उदासीनवयस्याभ्या क्षेमसाधारण फलम् । स्यादुदासीनभृत्याभ्यामस्वायत्तश्च सर्वत ॥ उदास्ताभ्या फलाभाव परारात्योर्विरोधिता । शत्रुमित्ते फल शून्य स्त्रीनाश शत्रुभृत्ययो ॥ शत्रूदासीनयोर्हानि शत्रुभ्या नायकक्षय ॥' इति ।

अथानन्तर छान्दसपरीक्षार्थं कौतुकार्थं च मात्राणामुद्दिष्टमाह—

पुव्वजुअलसरिअङ्का दिज्जसु गुरुसिरअङ्क सेस मेटिंज्जसु ।
उवरलअङ्क लेखिक्खु आणह ते परिपुअ उद्दिट्ठा जाणह ॥ ३५ ॥

[पूर्वयुगलसदृशाङ्कान्देहि गुरुशिरोङ्क शेषे लोपय ।
उर्वरितमङ्क लिखित्वानय एतत्परिपाट्या ध्रुवमुद्दिष्ट जानीहि ॥]

एतदुक्त भवति—षट्कलप्रस्तारे एको गुरुर्द्वौ गुरू (लघू) एको गुरुरित्येवमाकारो गण कुत्रास्तीति प्रश्ने कृते तदाकार गण लिखित्वा पूर्वयुगलेन सदृश समानाङ्को देय । आदिकलाया प्रथमाङ्को देय । पूर्वयुगलाभावादुत्सर्गसिद्धो द्वितीयोऽङ्कस्तदधस्तदनन्तरं पूर्वाङ्कद्वयमेकीकृत्य तत्सख्यकोऽङ्कोऽग्रे पूर्वयुगलसमानाङ्कक्षिपबादिर्देय । इति पूर्वयुगलभ्रमार्थ । अत्र गुरोरुपर्यधश्चाङ्को देय । द्विकलत्वात् । एतच्च गुरुशिर पदालभ्यते । एव तेष्वङ्केषु शेषे चरमेऽङ्के त्रयोदशरूपे यावन्तो गुरुशिर स्था अङ्कास्तावन्तो लोप्या । ते च मत्र ते अवधिरूपे त्रयोदशाङ्के लोप्या । उर्वरितमङ्क प्रकृते चतुरङ्क मिलित्वा चतु स्थानकोऽय गण इत्यानय । ते तत्परिपाट्या ध्रुवमुद्दिष्ट कथिताङ्कस्थान जानीहीति । एव च पञ्चकलप्रस्तारे द्वौ लघू एको गुरुरेको लघुश्चेत्येवरूपो गण कुत्र स्थानेऽस्तीति प्रश्ने पूर्वयुगलसमानाङ्कान्दत्वा शेषेऽष्टमेऽङ्के गुरु-

१ 'मट्टिज्जसु' ख०

शिरोऽङ्कस्तृतीयोऽङ्को लोप्योऽवशिष्ट पञ्चमाङ्को भवति तस्मात्पञ्चमो गणस्तादृशो भवतीति वेदितव्यम् । उद्दिष्टस्य कथितस्य गणस्य स्थानमात्रानयनमुद्दिष्टम् । एवं च सर्वप्रस्तारे प्रथमे शेषे च गणे शङ्कैव नास्तीति द्वितीयस्थानादारभ्यान्त्यात्पूर्वस्थानेषु प्रश्न इति बोद्धव्यम् । भूषणेऽपि—'दत्त्वा पूर्वयुगाङ्क गुरुशीर्षाङ्क विलुप्य शेषाङ्के । अङ्कैरितोऽवशिष्टै शिष्टैरुद्दिष्टमुद्दिष्टम् ॥ पादाकुलक छन्द' ॥

अथ मात्रामट्ट पृष्ट रूप नष्ट तच पट्कलप्रस्तारे प्रस्तारान्तरे वा अमुकस्थानानि कीदृश(?) इति प्रश्ने उत्तरमाह—

णट्ठे सव्वकला कारिज्जसु पुव्वजुअलसरिअङ्का दिज्जसु ।
पुच्छलअङ्क मिटावहि सेख उवरलअङ्क लोपि कहु लेख ॥ ३६ ॥
जत्थ जत्थ पाविज्जइ भाग एहु कहइ फुड पिङ्गलनाग ।
परमत्ता लइ गुरुता जाइ जत्त लेक्खहु तत्त लेक्खहु आइ ॥३७॥

[नष्टे सर्वकलाः कुरु पूर्वयुगलसदृशाङ्कान्देहि ।
पृष्टमङ्क लोपय शेषमवशिष्टमङ्क विलुप्य कथय लिखित्वा ॥
यत्र यत्र प्राप्यते भाग एव कथयति स्फुट पिङ्गलनाग ।
परमात्रा गृहीत्वा गुरुता याति यावल्लिखसि तावदेवायाति(?) ॥]

एवमुक्त भवति—यत्कलप्रस्तारे प्रश्नस्ता सर्वा कलारूपा लघव नियन्ताम् । यथा पूर्वसदृशा अङ्का एकद्वित्रिपञ्चाष्टत्रयोदशरूपा अङ्का दीयन्ताम् । शेषे पृष्टेऽङ्को लोपनीय । ततश्चावशिष्टे शेषाङ्केऽपरान्विलुप्य लिखित्वा कथय । तत्र प्रकारमाह—यो योऽङ्क शेषाङ्के लोपयितु शक्यते स पुन स्वाध'स्थितकला परमात्रा चादाय गुरुर्जायते । यथा पट्कलप्रस्तारे द्वितीयस्थाने कीदृशो गण इति प्रश्ने यथाङ्का स्थापनीया' पूर्वयुगलसदृशा अङ्का देया । शेषाङ्के त्रयोदश । पृष्टाङ्कलोपे द्वितीयाङ्कलोपे सति एकादशावशिष्टा भवन्ति । तत्राव्यवहिताष्टलोपेऽष्टाध स्थितत्रयोदशाध स्थितकलाभ्यामेको गुरुर्भवति । अवशिष्ट त्रयम् । तत्र पञ्चलोपाशक्यत्वात्रिलोपे तृतीयचतुर्थाभ्यामपरो गुरुर्भवति । शेपाङ्क नावशिष्यत इति प्रथमं लघुद्वयमेव । तथा चादौ लघुद्वय पश्चाद्गुरुद्वयमेव तादृशो द्वितीयो भवतीत्यर्थ' । वाणीभूषणेऽपि—'नष्टे कृत्वा कला सर्वा पूर्वयुग्माङ्कयोजिता । पृष्टाङ्कहीनशेषाङ्क येन येनैव पूर्यते ॥ परा कलामुपादाय तत्र तत्र गुरुर्भवेत् । मात्राया नष्टमेतत्तु फणिराजेन भाषितम् ॥' इति ॥

अथ क्रमप्राप्त वर्णोद्दिष्टमाह—

अक्खरउप्पर दुण्णा अङ्का दिज्जिअ सुमुणु उद्दिट्ठा ।
लहुउप्पर जो अङ्को त देइ एक्केण जाणेहु ॥ ३८ ॥

१ 'पुच्छह' रवि० २ 'पुच्छह' रवि०

[अक्षरोपरि द्विगुणानङ्कान्देहि जानीहि उद्दिष्टम् ।
लघोरुपरि योऽङ्कस्तं दत्त्वा एकेन जानीहि ॥]

अयमर्थः—चतुरक्षरप्रस्तारे द्वौ गुरू एको लघुः एको गुरुरिति गणः कुत्रास्तीति प्रश्ने कृते पृष्ट गण लिखित्वा प्रथम प्रथमगुरोरुपरि प्रथमाङ्को देयः । ततो द्विगुणान्द्विगुणानङ्कान्देहि । द्वितीयगुरोरप्युपरि द्वितीयोऽङ्कः तृतीये लघौ चतुरङ्क. चतुर्थे गुरावष्टमाङ्को देय इति द्विगुणत्वम् । एवं प्रकारेणोद्दिष्ट गण कुरु । ततो लघोरुपरि योऽङ्कस्तत्राधिकमेकमङ्क दत्त्वा तेन सहैस्ये कृते योऽङ्को भवति तदङ्कसमाने स्थाने स गणोऽस्तीति । प्रकृते तु चतुर्थाङ्कोपरि एकमधिक दत्त्वा पञ्चमोऽङ्क कर्तव्य तस्मात्पञ्चमस्थाने तादृशो गणोऽस्तीति ज्ञातव्यम् । भूषणेऽपि—'उद्दिष्टे वर्णोपरि दत्त्वा द्विगुणक्रमेणाङ्कम् । एक लघुवर्णाङ्के दत्त्वोद्दिष्ट विजानीत ॥' गाथा छन्दः ॥

अथ वर्णाना नष्टमाह—

णट्ठे अङ्के भाग करिज्जसु समभागहिँ तहिँ लहु मूणिज्जसु ।
विसम एक्क दइ वण्टण किज्जसु पिङ्गल जम्पइ गुरु आणिज्जसु॥३९॥

[नष्टेऽङ्के भागः क्रियतां समे भागे तत्र लघुरानीयताम् ।
विषमे एकं दत्त्वा वण्टनं क्रियतां पिङ्गलो जल्पति गुरुरानीयताम् ॥]

अत्र भागो नाम नष्टाङ्कस्यार्धीकरणम् । यथा चतुरक्षरप्रस्तारे षष्ठो गण. किमाकार इति प्रश्ने षडङ्कभाग कृत्वा तदर्धं त्रय स्थाप्यम् । अथ च समानो भागः । तत एको लघुर्लेख्य. । अनन्तर द्वयस्य भाग कृत्वा एक स्थाप्यम् । तदेको लघुर्लेख्यः । ततोऽप्यवशिष्टे विषमे एक दत्त्वा एकस्य च भाग कृत्वा एकमेव स्थापनीयम् । तदेको गुरुर्लेख्यः । एव च प्रथमे लघुरनन्तर गुरुस्ततो लघुरन्ते गुरुरेवमाकारचतुरक्षरप्रस्तारे षष्ठो गण इति वेदितव्यम् । तथा च वाणीभूषणे—'नष्टे तु कल्पयेद्भाग समभागे लघुर्भवेत् । दत्त्वैक विषमे भागः कार्यस्तत्र गुरुर्भवेत् ॥' एव समे भागे लघुर्ज्ञातव्य. । विषमे एक दत्त्वा पुनः पुनर्गुरुर्ज्ञातव्यः । अरिल्ला छन्दः ॥

अथ वर्णमेरुमाह—

अक्खरसंखे कोट्ठ करु आइ अन्त पढमङ्क ।
सिर दुइ अङ्के अवरु भरु सूई मेरु णिसङ्क ॥ ४० ॥

[अक्षरसंख्यया कोष्टक कुरु आद्यन्तयोः प्रथमाङ्कम् ।
शीर्षे द्वयाङ्केनापरं पूरय सूच्यते मेरुर्निःशङ्कम् ॥]

'सूचय मेरुं निःशङ्कम्' इति वा । अयमर्थः—एकाक्षरादि षड्विंशत्यक्षरपर्यन्तं स्वस्वप्रस्तारे कति सर्वगुरवः कत्येकादिगुरव. कति सर्वलघव कति वा प्रस्तारसंख्येति प्रश्ने कृते

1. 'अक्खर' ख०.

मेरुणा प्रत्युत्तरं देयम् । तत्रैकाक्षरादिक्रमेण षड्विंशत्यक्षरावधि कोष्ठकान्विरचय्य आदावन्ते च कोष्ठके प्रथमाङ्को देयः मध्यस्थकोष्ठके च तदीयशिरः कोष्ठद्वयाङ्कशृङ्खलाबन्धन्यायेनैकीकृत्यापरं शून्यकोष्ठकमेकीकृताङ्केन पूरयेत् । एवमन्यत्रापि पूर्णीये कोष्ठके कोष्ठानामुपरिस्थितकोष्ठद्वयाङ्कमुक्तग्रन्थन्यायेन पूरणं विधेयम् । एकाक्षरे कोष्ठद्वयं द्व्यक्षरे कोष्ठत्रयमित्यादि प्रत्यक्षरमेकैकवृद्ध्या षड्विंशत्यक्षरपर्यन्तं मेरुः कर्तव्यः । तत्रैकाक्षरप्रस्तारे आदावेकगुर्वात्मकस्तदन्ते चैकलध्वात्मकः । द्व्यक्षरे तु सर्वगुरुरादौ मध्ये गुरुद्वयमन्ते च सर्वलघुरिति । अक्षरे चादौ सर्वगुरुः स्थानत्रये द्विगुरुः स्थानत्रये एकगुरुः अन्ते च सर्वलघुरिति । एवं च सुधीभिश्चिन्तनीयम् । सर्वाङ्केण प्रस्तारसंख्यापि ज्ञायते । तथा च भूषणे—'कोष्ठमक्षरसंख्यातमन्त्याद्योरेकचिह्नितम् । शीर्षकोष्ठद्वयाङ्केन शून्यं कोष्ठं प्रपूरयेत् ॥' दोहा छन्दः ॥

अथास्य पताकामाह—

उद्दिट्ठासरिअङ्का दिज्जसु पुव्वअङ्क परभरण करिज्जसु[1] ।
पावलअङ्क पढम पैरतिज्जसु पत्थरसंखपताका लिज्जसु ॥ ४१ ॥

[उद्दिष्टसदृशा अङ्का दीयन्तां पूर्वाङ्केण परभरणं क्रियताम् ।
प्राप्ताङ्कः प्रथमं परित्यज्यतां प्रस्तारसंख्यया पताका गृह्यताम् ॥]

प्राकृते पूर्वनिपातानियमात्प्रथमं प्राप्ताङ्कः परित्यज्यताम् । एवमुक्तं भवति—पूर्वाङ्कैः परभरणं कुरु पूरयितव्यपङ्क्तेः प्रधानाङ्कस्य पश्चात्स्थिताः पूर्वाङ्काः । भरणं पूरणं लेखनं कोष्ठदानम् । एकत्राधिकस्य प्राप्तौ सा पङ्क्तिरेव तदङ्कभरणे त्यज्यताम् । प्रस्तारसंख्याया पताका वा वर्धयितव्या । यथा चतुर्वर्णप्रस्तारे एकद्विचतुरष्टाङ्का देयाः । अत्रैकाङ्कस्य पूर्वाङ्काभावाद्द्वितीयाङ्कमारभ्य पङ्क्तिः पूर्यते । तत्र पूर्वाङ्क एकाङ्क एव तस्य परे द्वितीयादयः । ते चाव्यवहितानतिक्रमेण पूर्यन्ते । तथा चैकेन द्वाभ्यां मिलित्वा अङ्को द्वितीयाङ्काधः स्थाप्यः । तत एकेन चतुर्भिश्च पञ्चाङ्कश्चतुरङ्काधः । तत एकेनाष्टभिश्च नवाङ्कः । ततः पङ्क्तिपरित्यागः । प्रस्ताराधिक्यसंभवात् । एतेन चतुर्वर्णप्रस्तारे प्रथमं गुरु । द्वित्रिपञ्चनवस्थानस्थानि त्रिगुरूणि ब्रूयात् । अथ चतुरङ्कस्याधः पराङ्कमिलिता अङ्का देयाः । तत्र प्रथमं पूरित एवेति त्यज्यते । द्वाभ्यां चतुर्भिर्मिलित्वा षट् चतुरङ्कस्याधः । त्रिभिश्चतुर्भिः सप्त षडधः । पञ्चभिश्चतुर्भिर्मिलित्वा (आगच्छन्) नवाङ्क आगत इति न स्थाप्यते । ततः अग्रिमाङ्कपरित्यागः । अनन्तरं च द्वाभ्यामष्टभिर्मिलित्वा दश सप्ताधः । ततस्त्रिभिरष्टभिर्मिलित्वा एकादश दशाधः । ततः पञ्चभिरष्टभिर्मिलित्वा त्रयोदश एकादशाधः । ततः पङ्क्तिपरित्यागः । मेरुसंख्यापरिमाणोक्तेः । ततोऽष्टाङ्काधस्तात्चतुर्भिरष्टभिर्मिलित्वा द्वादश । तदधः षड्भिरष्टभिश्चतुर्दश । ततस्तदधः सप्तभिरष्टभिश्च पञ्चदश । ततः प्रस्ताराधिक्याङ्कसंभवाभावात्संचारः । षोडशाङ्कस्त्वष्टाङ्काग्रे दीयते सर्वलघुज्ञानार्थमिति संप्रदायः ।

---

१. 'परदिज्जसु' रवि०.

पताकाप्रयोजनं तु मेरौ। चतुर्वर्णप्रस्तारस्यैकं रूपं सर्वगुरु। चत्वारि त्रिगुरूणि। पड्द्विगुरूणि। चत्वार्येकगुरूणि। एकं सर्वलघ्वात्मकमस्ति। तत्र षोडशभेदभिन्ने चतुर्वर्णप्रस्तारे कतमस्थले सर्वगुर्वात्मकं कतमस्थाने च त्रिगुर्वात्मकं कतमस्थाने च द्विगुर्वात्मकं कतमस्थाने चैकगुर्वात्मकं कति वा प्रस्तारसंख्येत्यादिप्रश्ने पताकयोत्तरं दातव्यम्। वाणीभूषणे तु—'अङ्कमुद्दिष्टवद्दत्वा शेषे पूर्वानपासयेत्। एकेनैकगुरु ज्ञेयं द्वयं द्वाभ्यां त्रिभिस्त्रयम्॥ एषा वर्णपताका प्रकीर्तिता काहि राजस्य (?)। एकैकमत्र मुक्त्वा ज्ञेया मात्रापताकापि॥' अरिल्ला छन्दः॥

अथ मात्रामेरुः—

दुइदुइ कोट्ठा सरि लिहहु पढमअङ्क तसु अन्त।
तसुआइहि पुणु एक सउ पढमे वे वि मिलन्त॥ ४२॥

सिरअङ्के तसु सिरपरअङ्के उअरलकोट्ठ पुरहु नीसङ्के।
मत्तामेरु अङ्कसंचारि बुज्झहु बुज्झहु जण दुइ चारि॥ ४३॥

[द्वे द्वे कोष्ठे सदृशे लेखनीये प्रथमोऽङ्कस्तस्यान्ते।
तस्यादौ पुनरेकेन समं प्रथमे द्वावपि मिलतः॥
शिरोङ्कैस्तेषां शिरःपराङ्कैरुर्वरितं कोष्ठं पूरय निःशङ्कम्।
मात्रामेरुं अङ्कं संचारयित्वा बुध्यध्वं बुध्यध्वं जना द्वौ चत्वारः॥]

अन्येषामत्र प्रवेश एव न। दुर्गमत्वादिति भावः। एवमुक्तं भवति। प्रथमे कोष्ठद्वयम्। तथा द्वितीयेऽपि। तृतीये कोष्ठत्रयम्। तथा चतुर्थेऽपि। पञ्चमे चत्वारि। तथा षष्ठेऽपीत्यादि। एककलायाः प्रस्तारो नास्तीति कोष्ठद्वयारिमकैवादौ पङ्क्तिरिति। एवं कोष्ठपङ्क्तिष्वधोधः क्रमेणाङ्कान् लिखेत्। सर्वत्र च शेषकोष्ठे प्रथमाङ्को देयः। तत्र कोष्ठद्वयमध्ये आदावुपरि कोष्ठे चैकस्वरूपोऽङ्को देयः। तस्योपरिस्थाङ्काभावादुत्सर्गसिद्ध एव प्रथमोऽङ्कः। अन्ते त्वेक एवापः। द्वयमधो मिलतीतीयं प्रक्रिया। प्रथमकोष्ठद्वयस्य पूरितत्वाद्द्वितीयादारभ्य देयम्। तत्र द्वितीये द्वयम्। तृतीये पुनरेकम्। चतुर्थे त्रयम्। पञ्चमे पुनरेकम्। षष्ठे चत्वारि। सप्तमे पुनरेकम्। इति प्रक्रियया आद्येऽङ्का देयाः। मध्ये शून्यकोष्ठेष्वेषा प्रक्रिया। पूरणीयकोष्ठशिरःकोष्ठाङ्कपरकोष्ठस्थाङ्कौ द्वावप्येकीकृत्य मध्यकोष्ठेऽङ्को देयः। एवं सर्वत्र यावदिच्छं कोष्ठकान्विरचय्य मात्रामेरुः कर्तव्यः। अत्रेदमनुसंधेयम्—कतिसमकले लघवः कति च गुरवः। कति विषमकले लघवः कति च गुरवः। कति वा प्रस्तारसंख्येति प्रश्ने मेरुणा प्रत्युत्तरं देयम्। तत्र द्विकले समप्रस्तारे एकः सर्वगुरुः। द्वितीयो द्विकलात्मकः सर्वलघुरिति संकेतः। त्रिकले विषमे द्वावेककलौ एकगुरुकौ चान्ते सर्वलघुस्त्रिकल इति समकले। चतुष्कले चादौ द्विगुरुः स्थानत्रये चैकगुरुर्द्विकलश्चान्ते सर्वलघुरिति। एवमनेन प्रकारेण यावदिच्छं मात्रा मेरावभीष्टमात्राप्रस्तारेषु लघुगुरुप्रक्रिया

ज्ञातव्या । अथवा समकलप्रस्तारे वामतः क्रमेण द्वौ चत्वारः षडष्टावनेन क्रमेण गुरुज्ञानम्, विषमे त्वेकत्रिपञ्चसप्तेत्यनेन क्रमेण लघुज्ञानमन्ते च सर्वत्र (लघु) सर्वेलघुरिति । उभयत्राप्येको द्वौ त्रय इत्यनया सरण्या दक्षिणतो व्युत्क्रमेण भेदज्ञानम् । अत्र च वामभागे सर्वत्रैकैकाङ्कस्थले सर्वगुरुरिति शिवम् । वाणीभूषणेऽप्युक्तम्—'द्वयं द्वयं समं कोष्ठं कृत्वा तेष्वेकमर्पयेत् । एवं द्व्येकत्र्येकचतुःक्रमेण प्रथमेष्वपि ॥ शीर्षाङ्कातपराङ्काभ्यां शेषकोष्ठान्प्रपूरयेत् । मात्रामेरुरयं दुर्गः सर्वेषामतिदुर्गमः ॥' दोहापादाकुलकच्छन्दसी ॥

अथ मात्रापताकामाह—

उद्दिट्ठे सिरअङ्का भप्पहु वामावत्ते परलइ लुप्पहु ।
एकलोपे एकगुरु आण[1] दुइतिणिलोपे दुइतिणि जाण[2] ।
मत्तपताका पिङ्गल गाव[3] जो पावइ सो परिहिं बुझाव[4] ॥ ४४ ॥

[उद्दिष्टसदृशाङ्काः स्थाप्या वामावर्तेन..........लोपयेत् ।
एकलोपे एकगुरुमानय द्वित्रिलोपे द्वित्रान् जानीहि ।
मात्रापताकां पिङ्गलो गायति यः प्राप्नोति स परं बोधयति ॥]

उद्दिष्टसदृशा अङ्काः स्थाप्याः । ते यथा—एकद्वित्रिपञ्चाष्टत्रयोदशाद्याः । ततो वामावर्तेन सर्वान्तिममङ्कं तत्पूर्वेणाङ्केन लोपयेदित्यर्थः । एकेनाङ्केनाग्रिमाङ्कलोपे कृते एकगुरुरूपमानय अन्तिमलोपे द्विगुरुरूपमानय त्रिभिरन्तिमाङ्कलोपे त्रिगुरुरूपमानयेत्यादि ज्ञेयम् । एतादृशीमेनां मात्रापताकां पिङ्गलः शेषनागो गायति । अथ च य एनां प्राप्नोति स परं जनं पताकां बोधयतीत्यर्थः । तत्र षट्कलप्रस्तारे यथा उद्दिष्टसदृशा अङ्का एकद्वित्रिपञ्चाष्टत्रयोदश स्थाप्याः ततः सर्वापेक्षया परत्रयोदशाङ्कस्तत्पूर्वोऽष्टमाङ्कस्तेनाष्टमाङ्केन त्रयोदशाङ्कस्यत्रे लुप्तेऽवशिष्टाः पञ्च । तस्य पञ्चमाङ्कस्य तत्पूर्वत्र विद्यमानत्वादष्टमाङ्कलोपात्परत्वया गुरुभावाच्च पञ्चमाङ्कात्पश्चिक्रमो विधेय इति तथा च पञ्चमस्थाने ।।।ऽ एवमाकारं रूपमेकगुर्वन्तीति ज्ञानं पताकाफलम् । एवमन्यत्रापि गुरुभावो ज्ञातव्यः । तथा पञ्चभिस्त्रयोदशाङ्के लुप्तेऽष्टाववशिष्यन्ते ते तु पश्चाधो लेख्याः । तथा त्रिभिस्त्रयोदशलोपे दशावशिष्यन्ते तेऽष्टाधो लेख्याः । तथा द्वाभ्यां त्रयोदशलोपे द्वादशावशिष्यन्ते । द्वयोर्विद्यमानत्वात् । परत्वया गुरुरित्युक्तेश्च द्वितीयाङ्कमारभ्य गुरुर्नाङ्कसंचारः । ततो द्वाभ्यामष्टभिश्च तल्लोपे त्रयो द्रावः । तत एकाष्टभिस्तल्लोपे चत्वारि त्रयः । ततः पञ्च । त्रिभिस्तल्लोपादवशिष्टः पञ्चमाङ्को वृत्त एवेति पञ्चभिर्द्वाभ्यां च तल्लोपे षट् चतुर्णामधः । पञ्चैकेन तल्लोपे सप्त । पञ्चधो द्वित्रिलोपे वृत्त एवेति एकत्रिभिस्तल्लोपेन च सप्ताध इति द्विगुरुरूपस्थानानि षट् मेरागुरुत्वात् । तथा त्रिलोपे त्रिगुरुरूपमानयेति त्रिपञ्चाष्टलोपे भागो नास्ति । द्वित्रिपञ्चलोपेऽष्टस्थाने वृत्त एवेति पञ्चैकलोपोऽप्यष्टलोपात्परत्वात् वृत्त एवेति एकद्वित्रिलोपेऽपि

1. 'आणहु' सी०. 2. 'जाणहु' सी०. 3. 'गावहु' सी०. 4. 'बिझावहु' सी०.

वृत्त एवेति एकत्र्यष्टभिर्मिलित्वा जातैर्द्वादशभिस्तल्लोपे कृते एकोऽवशिष्टः स आद्यस्थाने । सर्वगुर्वात्मकं वक्तव्यम् । षण्मात्रापताका । एवमन्यत्रापि सप्ताष्टकलानां यथाक्रमं पताका ज्ञातव्येति दिक् । वाणीभूषणेऽपि वर्णपताकामुक्त्वा 'एकैकमत्र मुक्त्वा ज्ञेया मात्रापताकापि'। पादाकुलकं छन्दः ॥

अथ समार्धसमविषमजातिपद्यवृत्तस्थगुरुलघुज्ञानप्रकारमाह—

पुँच्छलछन्द कला कई पुँच्छल वण्ण मिटाव ।
अवसिट्ठे गुरु जाणिअहु लहु जाणिव्वउ ताव ॥ ४९ ॥
[पृष्टच्छन्दसः कलाः कृत्वा पृष्टं वर्णं लुम्पेत् ।
अवशिष्टैर्गुरुं जानीत लघुं जानीत तदा ॥]

तथा च सर्वच्छन्दःसु कति गुरवः कति लघव इति प्रश्ने कृते पृष्टं छन्द उद्भावितचतुष्पदमेव कलाः कृत्वा तासु कलासु छन्दोक्षरसंख्यां लुम्पेत् । ततोऽवशिष्टाभिः कलाभिर्गुरुं जानीत । गुरुज्ञाने सति परिशेषाल्लघुं जानीयादित्यर्थः । दोहा छन्दः ॥

[पिङ्गलादिभिराचार्यैरुज्झितां वर्णमर्कटीम् ।
एकाक्षरादिषड्विंशत्यक्षरावधिलक्षिताम् ॥
शब्दैरनतिविस्तीर्णैः प्राकृतैरवहट्टकैः ।
वक्ष्ये लक्ष्यसमायुक्तां पञ्चमे प्रत्यये स्थिताम् ॥]

अथ वर्णमर्कटीं पादाकुलकच्छन्दश्चतुष्टयेनाह—

"छैप्पन्ती पत्थार करिज्जसु अक्खरसंखे कोट्ठ धरिज्जसु ।
पहिली पन्ति वण्ण धरिलिज्जसु दोसरिपन्ति दुण्णपरिदिज्जसु ॥
उप्परअङ्कगुणितकरिलेहि चौठी पन्ति सोइ लिहि देहि ।
चौठी अद्धा पँचमी पन्ति सोइ छठमा लिहु णिब्भन्ति ॥
पँचमी चौठी तिअहि मिलाउ पिङ्गल जम्पै अङ्क फलाउ ।
वित्त पभेअ मत्त अरु वण्णह गुरु लघु जाणिअ एअ सपण्णह ॥
अक्खरमक्कसि जाणहु लोइ जिहिं जाणे मण आणँद होइ ।
जो बुज्झई सोई पइज्झइ मक्कलिजाले हत्थिअ रुज्झइ ॥
लच्छीणाहेण कहे एम मक्कलिआए पवधम्मे ।
पेक्खह वण्णसकुण्डं मक्कलिअम्युह अण्णारुण्डम् ॥"

१. 'पूछल' ख॰. २. 'पूछल अङ्क' ख॰. ३. टीकाकर्तुः कृतिरियम्, न तु मूलम्.

तत्रैकाक्षरादि षड्विंशत्यक्षरावधिवर्णप्रस्तारेषु कतिवृत्तादयो भवन्ति इति प्रश्ने कृते वर्णमर्कटिकया प्रत्युत्तरं देयम्। तद्विरचनप्रकारो लिख्यते—छप्पन्ती पट्पङ्क्त्या मनोहराकारया प्रस्तारं कुरु। तत्रैकाक्षरादि षड्विंशत्यक्षरसंख्यया कोष्ठकं धारय विधेहीत्यर्थः। तत्र प्रथमपङ्क्तौ वृत्तपङ्क्तौ एकादिकान् षड्विंशतिपर्यन्तवर्णास्तत्संख्यैतरूपानङ्कान्धारय। लिहसु गृहाण। वृत्तानीति शेषः। एवंकृते प्रथमा वृत्तपङ्क्तिः सिध्यति। अथ द्वितीया प्रभेदपङ्क्तिं साधयति—दोसरीति। ततो द्वितीयाया प्रभेदपङ्क्तौ तद्विगुणान्पूर्वस्थापितवर्णद्विगुणान्प्रभेदसंकेतरूपान् द्व्यादिकानङ्कान्कृत्वा देहीत्यर्थः। एवं कृते द्वितीया प्रभेदपङ्क्तिः सिध्यति। अथ क्रमप्राप्तामपि तृतीया मात्रापङ्क्तिमुल्लङ्घ्य तन्मूलभूतां चतुर्थीं वर्णपङ्क्तिं साधयति—उप्परेति। अत्र स्थितैरित्यध्याहार्यम्। तथा चोपरि स्थितैः प्रथमपङ्क्तिस्थितैरेकद्वित्र्यादिभिरङ्कैर्द्वितीयपङ्क्तिस्थितान् द्विचतुरष्टादिक्रमेण स्थितानङ्का गणयित्वा गृहाण। पुनस्तानेवाङ्कान्द्विगुणितान्द्व्यष्टचतुर्विंशत्यादिक्रमेण चतुर्थपङ्क्तौ लिखित्वा देहि स्थापयेत्यर्थः। एवं कृते चतुर्थी वर्णपङ्क्तिः सिध्यति। अथ पञ्चमषष्ठपङ्क्त्योर्गुरुलघुपङ्क्त्योः पूरणोपायमुपदिशति—चौठीत्युत्तरार्धेन। ततश्चतुर्थपङ्क्तिस्थितार्धाङ्कानेकचतुर्द्वादशादिकानङ्कान्पञ्चमषष्ठपङ्क्त्योर्निर्भ्रमं यथा स्यात्तथा लिख। चतुर्थार्धाङ्कान्पञ्चम्यां लिखितानेवार्धाङ्कान्षष्ठ्यां लिखेति। एवं पञ्चमषष्ठपङ्क्ती गुरुलघुरूपे सिध्यतः। एवं पङ्क्तिद्वयं साधयित्वा अथोर्वरितां तृतीयां मात्रापङ्क्तिं साधयति—तत पञ्चमपङ्क्तिस्थितानेकचतुर्द्वादशानङ्काश्चतुर्थपङ्क्तिस्थितान्द्व्यष्टचतुर्विंशत्यादिकानर्धीकृत्य निद्वादशषट्त्रिंशदादिरूपतामापाद्य तृतीयपङ्क्तौ मेलय। एवीकृत्य लिखेत्यर्थः। एवं पिङ्गलो जल्पति। एवं कृते तृतीया मात्रापङ्क्तिः सिध्यति। वर्णमर्कटीफलमाह—वित्तेति। एकाक्षरादीनि वृत्तानीत्यर्थः। प्रभेदास्तत्प्रभेदान्मात्रास्तत्तन्मात्रा वर्णा गुरुलघूंस्तत्तद्वृत्तगुरुलघून्। इति प्रयोदरावर्णमर्कटी। एवमन्यापि मर्कटी समुन्नेया सुधीभिरित्यलं पल्लवितेन। तत्र सप्तमान् सिद्धान्मानीहि। हे लोकाः, एवमक्षरमर्कटीं जानीत। यस्यां ज्ञातायां मनस आनन्दो भवति। अथ च य एनां बुध्यते स एव वृत्तादीनि बुध्यते नान्यः। ततो मर्कटीजाले हस्ती गजो रुध्यते। दुर्गमत्वादिति भावः।

श्रीलक्ष्मीनाथभट्टेन नारायणतनूभुवा।
वर्णमर्कटिका प्रोक्ता पथमे ग्रन्थे स्थिता॥

अथ मात्रामर्कटीं सप्रतिज्ञमाह—

"जा पिङ्गलेण कइणा ण णियद्धा अप्प गन्थम्मि।
त मत्तामक्कडिअ लच्छीणाहेण विरचिअं भणइ॥
मत्तासंखे कोट्ठक्क वत्तिलय पत्थारि।
तत्थ दुआदिअ अङ्कावरि पढमहि पन्ति विचारि॥

---

१ इयमपि टीकारकर्तृ कृतिः

आइ अङ्क परितज्जिअ कइ सव्वहु पन्ति झझारि ।
पुव्वजुअलसरिअङ्कधरु वीजी पन्ति विचारि ॥
पढमपन्तिटिअअङ्कऊरि वीजीपन्ति गुणेहि ।
जो जो अङ्का जहँ परहि तं तिअ पन्ति भणेहि ॥
पढमे थीअं अङ्कं वीए कोट्ठे अ पञ्चमं अङ्कम् ।
देउण वाणद्दिउणं तद्दिउणं तीअचोत्थए देह ॥
काऊण एकभावं पञ्चमपन्तिट्ठिअे अङ्के ।
देऊण एकमङ्कं कुणेहि तेणव्व पञ्चमं पुण्णम् ॥
तज्जिअ पञ्चममङ्कं पुव्वसिंस एकभावमाग्गणे ।
देऊण एकमधिकं छट्ठं कुण्णेहि परिपुण्णम् ॥
काऊण एकभावं पञ्चमपन्तिट्ठिआण अङ्काण ।
तज्जिअ पञ्चदहङ्कं एकं देऊण कुणुसु मुणिकोट्ठम् ॥
एव्वं णिरवहिमत्तापत्थारे अङ्करिञ्छोली ।
होइ त्ति तेण कइणा ण कवो अङ्काण वित्थारो ॥
एव्वं पञ्चमपन्ति पुण्णं काऊण पढममेकङ्कम् ।
देऊण वाणपन्तिट्ठिएहिँ छट्ठिं कुणेहि अङ्केहि ॥
काऊण एकभावं पञ्चमछट्ठिट्ठिए अङ्कम् ।
पइकोट्ठं सुकइवरो चोत्थिं पन्तिं च कुणउ परिपुण्णम् ॥
वित्तं भेओ मत्ता वण्णा लहुआ तथा गुरुआ ।
एदे छप्पन्तिकआ पत्थारा होन्ति वित्थारा ॥
जत्थ अ हत्थिअरुज्झइ वज्झइ वित्तं च सुत्तसारिच्छम् ।
तं मत्तामक्कलिअ दहूण अ कोण वज्झए सुकई ॥
णट्ठोद्दिट्ठं जह वा मेरुज्जुअल जहा पडाआ वा ।
मक्कलिआ वि तहचिअ कोदूहलमेत्तसारिणी भणिआ ॥
इअ लच्छिणाहकइणा रइए रुइरे पवन्धम्मि ।
पञ्चअपञ्चअवन्धं पेक्खह छन्दस्स सव्वस्सम् ॥”

अथ तत्रैकमात्रादिनिरवधिकमात्राप्रस्तारेषु कतिकतिजातिसम्बन्धिवृत्तादयो भवन्तीति प्रश्ने कृते मात्रामर्कटिकया प्रत्युत्तरं देयमिति मात्रामर्कटीविरचनप्रकारो लिख्यते—'गा पिङ्गलेन कविना न निबद्धा आत्मनो ग्रन्थे। ता मात्रामर्कटिका लक्ष्मीनाथेन विरचिता भणत॥ तत्र तद्विरचनप्रकारे साधनं द्विपथा छन्दसा प्रथमपङ्क्तिसाधनोपायमाह—'मात्रासंख्यया कोष्ठं कुरु पङ्क्तिषट्कं प्रस्तारयित्वा। तत्र द्वादिकानङ्कान्धारय प्रथमपङ्क्तौ विचारयित्वा॥ आद्याङ्कं परित्यज्य सर्वपङ्क्तिमध्ये। भो शिष्य, स्वाभिमतमात्रासंख्यया पङ्क्तिषट्कं यथा स्यात्तथा कोष्ठकं कुरु प्रथमपङ्क्तौ वृत्तपङ्क्तौ यावदित्थं क्रमेण द्व्यादिकानङ्कान्स्थापय। सर्वासां पङ्क्तीनां मध्ये प्रथमाङ्कं परित्यज्य। अत्रैव च प्रतिभाति सर्वकोष्ठेषु प्रथमाङ्कत्यागो न सर्वकोष्ठत्यागपरः किं तु षष्ठगुरुपङ्क्तिप्रथमकोष्ठत्यागपर इति तत्र गुरोरभावात् अतश्च सम्प्रदायात्पञ्चसु कोष्ठेषु प्रथमाङ्कविन्यासोऽवश्यं कर्तव्य एव। अन्यथा वक्ष्यमाणाङ्कविन्यासभङ्गापत्तेः। एवं कृते प्रथमा वृत्तपङ्क्तिः सिध्यतीति। अथ द्वितीया प्रभेदपङ्क्तिं साधयति गाथार्धेन—'पूर्वयुगलसदृशानङ्कान्धारय द्वितीयपङ्क्तौ विचारयित्वा।' एवमुक्तं भवति—एकद्वित्रिपञ्चाष्टादीञ्छृङ्खलान्वयान्वयेन क्रमतो धारय। एवं कृते द्वितीयप्रभेदपङ्क्तिः सिध्यतीति। अथ तृतीयां मात्रापङ्क्तिं साधयति—पढमेति। प्रथमपङ्क्तिस्थिताङ्कैर्द्वितीया पङ्क्तिं गुणय यो योऽङ्को यत्र पतति तं तमेव तृतीयपङ्क्तौ भण। एवं कृते तृतीया मात्रापङ्क्तिः सिध्यतीति। द्विपथाच्छन्दांसि। अथ क्रमप्राप्ता चतुर्थी वर्णपङ्क्तिमुल्लङ्घ्य युगपदेव चतुर्थपञ्चपङ्क्त्योः साधनार्थं तन्मूलभूतां प्रथमं तावत्पङ्क्तिं साधयति—पढमेति। तत्र प्रथमे द्वितीयमङ्कं षट्स्वपि पङ्क्तिषु प्रथमकोष्ठत्यागाद्द्वितीयकोष्ठमेवात्र प्रथमं कोष्ठकम्। अतोऽस्मिन्नेव द्वितीयमङ्कं तदपेक्षया द्वितीयकोष्ठके च पञ्चमाङ्कं दत्त्वा ततो बाणद्विगुणं दश तद्द्विगुणं विंशतिश्चेलितौ द्वावङ्कौ तृतीयचतुर्थयोः कोष्ठयोर्देयौ। विन्यसतेत्यर्थः। अथ तत्र पञ्चमकोष्ठपूरणप्रकारमाह—काऊणेति। पञ्चमकोष्ठे स्थितान्द्व्यादीनङ्कानेकभावं कृत्वा एकीकृत्य तस्मिन्नेकीकृताङ्के एकमधिकं दत्त्वा ततश्च निष्पन्नेनाष्टत्रिंशता पूर्वापेक्षया पञ्चमं कोष्ठकं पूर्णं कुरु। अथ षष्ठकोष्ठपूरणप्रकारमाह—तज्जिअ इति। पूर्वस्मिन्द्व्यादिके पञ्चकोष्ठकस्थिताङ्के एकीकृते सत्येतस्मिन्पञ्चममङ्कं त्यक्त्वा पुनस्तत्रैकमधिकं दत्त्वा पूर्ववज्जातेनैकसप्तत्या षष्ठं कोष्ठं परिपूर्णं कुरु। अथ सप्तमकोष्ठकपूरणोपायमाह—काऊणेति। पञ्चमपङ्क्तिस्थितानां द्व्यादीनामेकभावमेकत्र कृत्वा लघु पञ्चदशाङ्कं त्यक्त्वा ततस्तेष्वपि चैकं हित्वा सप्तमकोष्ठं त्रिंशदुत्तरेण शताङ्केन पूर्णं कुरुष्वेति शेषः। अष्टमकोष्ठपूरणप्रकारमाह—द्व्यादिसप्तमपङ्क्तिस्थितानङ्कानेकीकृत्य तेष्वेकचत्वारिंशदधिकं (शतं) परित्यज्य जातेन पञ्चाशिंशदधिकेन शतद्वयेनाष्टमं कोष्ठं परिपूर्णं कुरु। नवमकोष्ठपूरणप्रकारमाह—द्व्यादिकामष्टपङ्क्तिस्थितानङ्कानेकीकृत्य तेषु नवत्यङ्कं दूरीकुरु। ततो निष्पन्नेन विंशत्यधिकचतुःशताङ्केन नवमकोष्ठपूरणं कुरु। दशमकोष्ठपूरणप्रकारमाह—द्व्यादिकान्नवपङ्क्तिस्थितानङ्कानेकीकृत्य तेषु सप्ताशीत्युत्तरशताङ्कं दूरीकुरु। ततो निष्पन्नेन चतुश्चत्वारिंशदधिकसप्तशताङ्केन दशमं कोष्ठं पूरय। एवं क्रमेण चतुर्थपञ्चपङ्क्तिगर्भा

पञ्चमी लघुपङ्क्तिः सिध्यतीति संक्षेपः। 'एवं निरवधिमात्राप्रस्तारेऽङ्कपरम्परा। भवतीति तेन कविना न कृतोऽङ्कानां विस्तारः॥' अथ षष्ठगुरुपङ्क्तिपूरणप्रकारमाह—तत्र गुरुस्थानीयं प्रथमं कोष्ठकं विहाय अग्रिमकोष्ठे प्रथममेकाङ्कं दत्त्वा पञ्चमपङ्क्तिस्थितैर्द्वितीयादिभिरङ्कैः षष्ठीं पङ्क्तिं पूरय। एवं कृते षष्ठी गुरुपङ्क्तिः सिध्यतीति। अथोर्वरितचतुर्थवर्णपङ्क्तिपूरणप्रकारमाह—काऊणेति। पञ्चमषष्ठपङ्क्तिस्थितान्द्वैकादीनङ्कान्प्रतिकोष्ठमेकीकृत्य चतुर्थीं पङ्क्तिं पूरय। अत्र षष्ठपङ्क्तावादिकोष्ठेऽङ्काभावाच्चतुर्थपङ्क्तिप्रथमकोष्ठे प्रथमाङ्क एव दातव्यः। एवं कृते चतुर्थी वर्णपङ्क्तिः सिध्यतीति। अत्र लघुगुरुपङ्क्तिपूरणप्रकारं सबीजं सुगुप्तं च हरिशंकरगादाकुलद्वयेनाह—

"पहिलें पाँती लहुदुइ आणहु सोई ले गुरु दुसरे जाणहु।
गुरु दुण्णामौ मत्ता सेख सो लहु दुसरें पिङ्गल लेख॥
इम परिपाटी लघुगुरु आणहु गुरुलहु जोरि वण्ण पुण जाणहु।
मत्ताभीतर गुरु हि मिटावहु तेहु सों पुणि वण्णह जाणहु॥"

लघुपङ्क्तेः प्रथमकोष्ठे द्वितीयाङ्कमानयत। अत्र प्रथमपदं द्वितीयकोष्ठमेव लक्षयति। षट्स्वपि पङ्क्तिषु प्रथमकोष्ठत्यागादेकाङ्के गणनाभावात्तु गुरुकोष्ठानुपयोगाच्च। तमेव द्वितीयाङ्कमादाय गुरुपङ्क्तेर्द्वितीयकोष्ठे आनयत। तत्रापि द्वितीयपदं तृतीयकोष्ठपरं ज्ञातव्यम्। अत्र गुरौ प्रथमकोष्ठे प्रथमाङ्क एव देयः। द्वितीयाङ्कस्याग्रे संचारितत्वात्। प्रथमकोष्ठे एकगुरुत्वाच्च। अथ लघुपङ्क्तेर्द्वितीयकोष्ठे पूरणप्रकारमाह—गुरुदुण्णेति। गुरुकोष्ठस्थितानङ्कान्द्विगुणीकृत्य तत्समानमात्राकोष्ठस्थितेष्वङ्केषु लोपय। तच्छेषाङ्कं लघुद्वितीयकोष्ठेषु लिखेति पिङ्गलो भणितवान्। तद्यथा गुरुपङ्क्तेर्द्वितीयकोष्ठे द्वितीयाङ्कस्तद्द्विगुणश्चतुर्थाङ्कस्त तत्समानमात्राकोष्ठस्थे नवमाङ्के लोपय। तच्छेषाङ्का दश तान् लघुद्वितीयकोष्ठे लिख। एवमेकगुरुद्वितीयकोष्ठे पञ्चमाङ्कस्तद्द्विगुणं दश तास्तत्समानमात्राकोष्ठस्थे विंशतिरूपे लोपय। तच्छेषाङ्का दश तान् लघुतृतीयकोष्ठे लिख। अनया परिपाट्या यथेच्छं लघुपङ्क्तिकोष्ठाङ्कान्गुरुपङ्क्तिकोष्ठाङ्कांश्चानय। एवं लघुपङ्क्तिं च सपाद्योर्वरितां वर्णपङ्क्तिं साधयति—गुरुलघुपङ्क्तिस्थितानङ्कानेकीकृत्य तत्समानवर्णपङ्क्तिकोष्ठकेषु यावदिच्छं लिख। अथ वर्णपङ्क्तिसाधने प्रकारान्तरमाह—मत्त इति। मात्रापङ्क्तिस्थिताङ्केषु तत्समानगुरुपङ्क्तिस्थितानङ्कांल्लोपय। तच्छेषाङ्कैरपि वर्णपङ्क्तिः सिध्यतीति जानीहि। इति गुरुणा गोपितोऽपि मया शिष्यबोधाय विविच्य प्रकाशितः। एवं पङ्क्तिषट्कं संसाध्य मात्रामर्कटीफलमाह—वित्तमिति। 'वृत्तं भेदो मात्रा वर्णा लघवस्तथा गुरवः। एते षट्पङ्क्तिकृताः प्रस्तारा भवन्ति विस्ताराः॥' मात्रामर्कटीमाहात्म्यमाह—जत्थ इति। 'यत्र च हस्ती अवरुध्यते बध्यते चित्तं च सूत्रसदृक्षम्। तां मात्रां मर्कटिकां दृष्ट्वा च को न बध्यते सुकविः॥' कौतुकसत्त्वे भवतीत्यर्थः। एतत्करणं कौतुकार्थमित्याह—नट्ठेति। 'नष्टोद्दिष्टं यथा वा मेरुयुगलं यथा पताका वा। मर्कटिकापि तथैव कुतूहलकारिणी भणिता॥' उक्तमुपसंहरति—इऐति। 'इति

लक्ष्मीनाथकविना रचिते रुचिरे प्रबन्धेऽस्मिन् । प्रत्ययपञ्चकबन्ध पश्यत छन्दस सर्वस्वम् ॥'

अथैकाक्षरादिषड्विंशत्यक्षरपर्यन्त समस्तवर्णप्रस्तारपिण्डीभूतसंख्यामाह—

छव्वीसा सत्तसआ तह सत्तारहसहस्साइं।
बाआलीसं लक्खं तेरह कोडी समग्गाइं ॥ ४६ ॥

[षड्विंशति सप्तशतानि तथा सप्तदशसहस्राणि ।
द्विचत्वारिंशल्लक्षाणि त्रयोदश कोटय' समग्राणि ॥]

'अङ्काना वामतो गति ' इति न्यायेन त्रयोदश कोटय द्विचत्वारिंशल्लक्षाणि सप्तदशसहस्राणि सप्तशतानि षड्विंशतिश्च । सम्पूर्णैकाक्षरादि षड्विंशत्यक्षरावधिप्रस्तारस पिण्डसंख्येत्यथ । अङ्कतोऽपि १३४२१७७२६ । 'एकदशशतसहस्रायुतलक्षप्रयुतकोटय' क्रमश । अर्बुदमब्ज खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ॥ जलधिश्चान्त्य मध्य परार्धमिति दशगुणोत्तरा सज्ञा ॥'

अथ 'पद्य चतुष्पदी तच्च वृत्त जातिरिति द्विधा । वृत्तमक्षरसंख्यात जातिर्मात्राकृता भवेत् ॥' इति प्रथम मात्राकृता जातिमभिधास्यन्गाहूप्रभृतीना जातीना कलागणनामुद्देशक्रमेणाह —

होइ गाहू मत्तचऊअण गाहाइ सत्तावणी ।
तह विग्गाहू पलट्टि किज्जइ उग्गाहउ सट्ठिकल ॥
गाहिणि आ वासट्ठि किज्जइ ।
तह वि पलट्टइ सींहिणी वे अग्गल हो सट्ठि ।
सत्तरूअअण्णोण्णगणखन्धमत्तचउसट्ठि ॥ ४७ ॥

[भवति गाहू मात्राश्चतुष्पञ्चाशद्गाथाया सप्तपञ्चाशत् ।
तथा विगाथा परावृत्त्य क्रियते उद्गाथापि षष्टिकला ॥
गाथिनी च द्वाषष्टि' क्रियते ।
तथैव परावर्तते सिंहिणी द्व्यधिका भवति षष्टि ।
सप्तरूपाण्यन्योन्य गणानि स्कन्धके मात्राचतु षष्टि ॥]

चतुष्पञ्चाशन्मात्रा गाहू भवति । गाथाया सप्तपञ्चाशन्मात्रा भवन्ति । *तथा विगाथा* परावृत्य क्रियते । मात्रा' पर सप्तपञ्चाशदेव । उद्गाथापि षष्टिकला । गाथिन्याश्च द्वाषष्टिकला । तथैव परावर्तते सिंहिणी । मात्रा द्वाषष्टिरेव । तानि सप्तरूपाणि अन्योन्य चतुर्मात्रगणानि भवन्ति । स्कन्धके चतु षष्टिर्मात्रा भवन्ति । अत्र सर्वत्र सार्धसप्तगणा स्कन्धके लघ्वी गणा । रड्डा छन्द' ॥

अथ गाहू छन्दः—

पुव्वद्धे उत्तद्धे सत्तग्गल मत्तवीसाइं।

छट्ठमगण पअमज्झे गाहू मेरुव्व जुअलाइं॥ ४८॥

[पूर्वार्धे उत्तरार्धे सप्ताधिका मात्राविंशतिः।

षष्ठो गणः पदमध्ये गाहू मेरु(रेव) युगले॥]

पदमध्ये दलद्वयमध्ये मेरुयुगल भवति। दलद्वयेऽपि षष्ठो गण एकलघ्वात्मको भवतीत्यर्थः। मेररिति लघोर्नाम। एतादृश गाहूछन्दो भवति। इदमप्येतस्योदाहरणम्। तथा च वाणीभूषणे—'गाथोत्तरदलतुल्य पूर्वदल भवति यदि बाले। तामिह फणिपतिभणितामुपगीतिं वर्णयन्ति बुधाः॥' उद्दवणिका यथा—ऽऽ, ऽ।।, ऽऽ, ऽ।।, ऽऽ, ।, ऽऽ, ऽ, ॥ ऽऽ, ।।।।, ऽऽ, ऽ।।, ऽऽ, ।, ऽऽ, ऽ,

गाहूमुदाहरति—जहा—(यथा)

चन्दो चन्दणहारो ताव अ रूअं पआसन्ति।

चण्डेसरवरकित्ती जाव अ अप्पं ण दंसेइ॥

[चन्द्रश्चन्दनहारस्तावच्च रूपं प्रकाशयन्ति।

चण्डेश्वरवरकीर्तिर्यावच्चात्मानं न दर्शयति॥]

चन्द्रश्चन्दनहार एते तावदेव रूप स्वात्मनः श्वैत्याभिमानेन प्रकाशयन्ति चण्डेश्वरस राज्ञः कीर्तिर्यावदात्मान न दर्शयति। ततोऽप्येतस्य कीर्तिरत्यन्तधवलेत्यर्थः। गाहू निवृत्ता। अथ गाथा छन्दः—

पढमं बारहमत्ता बीए अट्ठार होहिं संजुत्ता।

जह पढमं तह तीअं दहपञ्चविहूसिआ गाहा॥ ४९॥

[प्रथमं द्वादशमात्रा द्वितीयेऽष्टादश भवन्ति संयुक्ताः।

यथा प्रथमं तथा तृतीयं दशपञ्चविभूषिता गाथा॥]

यस्याः प्रथमे चरणे द्वादश मात्रास्तथा द्वितीयेऽष्टादशभिः सयुक्ता भवन्ति। यथा प्रथम तथा तृतीय द्वादशमात्रम्। या चतुर्थे चरणे पञ्चदशभिर्मात्राभिर्भूषिता भवति सा गाथेत्यर्थः। भूषणेऽपि—'आदितृतीये द्वादश दशाष्टमात्रा तृतीयचरणे च। तुर्ये पञ्चदश स्युर्गाथेय पिङ्गलेनोक्ता॥' प्राकृते गाथा संस्कृते आर्येति नामभेदः। इदमप्युदाहरणम्।

गाथामुदाहरति—जहा

जेण विणा ण जिविज्जइ अणुणिज्जइ सो कआवराहो वि।

पत्ते वि णअरडाहे भण कस्स ण वल्लहो अग्गी॥

---

१. 'चन्दन हारः' रवि०.

[येन विना न जीव्यतेऽनुनीयते स कृतापराधोऽपि ।
प्राप्तेऽपि नगरदाहे भण कस्य न वल्लभोऽग्निः ॥]

कस्याश्चित्कलहान्तरितायाः सखीं प्रति वचनम् । येन विना न जीव्यते स कृतापराधोऽप्यनुनीयते । उक्तमर्थमर्थान्तरेण दृढीकर्तुमाह—प्राप्तेऽपि नगरदाहे भण कस्य न वल्लभोऽग्निः । अपि तु सर्वस्य । उट्टवणिका यथा—ऽ।।, ऽ।।, ऽ।।, ।।ऽ, ।ऽ।, ऽऽ, ऽ ॥ ऽऽ, ।।।।, ऽऽ, ।।ऽ, ।, ऽऽ, ऽ,

अथ गाथायां गणनियममाह—

सत्तगणा दीहन्ता जो णलहू छट्ठ णेह जो विसमे ।
तह गाहे बिअद्धे छट्ठं लहुअं विआणेहु ॥ ५० ॥

[सप्तगणा दीर्घान्ता जो नलघू षष्ठे नेह जो विषमे ।
तथा गाथा द्वितीयार्धे षष्ठं लघुकं विजानीत ॥]

अत्र चतुष्कलाः सप्त गणा दीर्घान्ता गुर्वन्ता इत्यर्थः । अत्र षष्ठो गणो जगणो भवति नगणलघू वा भवत इति नियमः । इह विषमे स्थाने प्रथमतृतीयपञ्चमसप्तमस्थाने जगणो न भवति । तथा गाथाया द्वितीयेऽर्धेऽपि षष्ठ गणमेकलघ्वात्मकं विजानीत । भूषणेऽपि—'सप्ततुरगाः सदीर्घाः सदीर्घो जगणो द्विजो(।।।।)ऽथवा भवति । षष्ठं लघूत्तरदले विषमे जगणो न गाथायाः ॥' गाथा छन्दः ॥

सर्वगाथासु सामान्यलक्षणमाह—

सव्वाए गाहाए सत्तावण्णाइ होन्ति मत्ताइं ।
पुव्वद्धम्मि अ तीसा सत्ताईसा परद्धम्मि ॥ ५१ ॥

[सर्वस्या गाथाया सप्तपञ्चाशद्भवन्ति मात्राः ।
पूर्वार्धे च त्रिंशत्सप्तविंशति परार्धे ॥]

सर्वस्या गाथायाः सप्तपञ्चाशन्मात्रा भवन्ति । तत्र विवेकः—पूर्वार्धे त्रिंशत् सप्तविंशतिमात्राः परार्धे च । गाथा छन्दः ॥

अथ गाथायाः सप्तविंशतिभेदेषु लक्ष्मीनाम्नीमाद्यां गाथामुपलक्षयति—

सत्ताईसा हारा सल्ला जस्सम्मि तिण्णि रेहाइं ।
सा गाहाणं गाहा आआ तीसक्खरा लच्छी ॥ ५२ ॥

[सप्तविंशतिगुरवः श्लाघ्या यस्यां तिस्रो रेखाः ।
सा गाथानां गाथा आद्या त्रिंशदक्षरा लक्ष्मीः ॥]

यस्यां गाथायां सप्तविंशति गुरवः श्लाघ्यास्तिस्रश्च रेखास्त्रयो लघवः । पूर्वार्धे पञ्चद-

णरेखाद्वयमुत्तरार्धे च षष्ठलघ्वात्मकरेखामात्र मिलित्वा रेखात्रय यस्या सा गाथाना मध्ये आद्या त्रिंशदक्षरा सप्तविंशतिगुरुकरघुत्रयवती लक्ष्मीनामधेया भवति। गाथा छन्द ॥

अथ तत्प्रशस्तापुर सर भेदानयनप्रकारमाह—

तीसक्खराहिँ लच्छीं सव्वे वन्दन्ति होइ विक्खाआ।

हासइ एक्क एक्क वण्ण ता कुणह णामाइ ॥ ९३ ॥

[त्रिंशदक्षरा लक्ष्मीं सर्वे वन्दन्ते भवति विख्याता।

हसत्येकैको वर्णस्तदा कुरुत नामानि ॥]

त्रिंशदक्षरा लक्ष्मीं गाथा सर्वे कविपण्डिता वन्दन्ते। अभिवादनपूर्व स्तुवन्तीत्यर्थ। अत्र यदा एकैको वर्णो हसति न्यूनत्व प्राप्नोति द्वौ लघू वृद्धि गच्छतस्तदा सप्तविंशति नामानि कुरुत। गाथा छन्द ॥

अथाद्या लक्ष्मीमुपलक्ष्यन्निव गाथाभ्या नामान्युद्दिशति—

लच्छी रिद्धी बुद्धी लज्जा विज्जा खमा अ देही अ।

गोरी धाई चुण्णा छाआ कन्ती महामाई ॥ ९४ ॥

कित्ती सिद्धी माणी रामा गाही[1] विसा[2] अ वासीआ।

सोहा हरिणी चक्का सारसि कुररी सिंही[3] अ हसीआ ॥ ९५ ॥

[लक्ष्मी ऋद्धिर्बुद्धिर्लज्जा विद्या क्षमा च देही च।

गौरी धात्री चूर्णा[4] छाया कान्तिर्महामाया ॥

कीर्ति सिद्धिर्मानिनी रामा गाहिनी विश्वा च वासिता।

शोभा हरिणी चक्री सारसी कुररी सिंही च हसिका ॥]

अत्र प्रथमा गाथा सप्तविंशतिगुरुकरेखात्रयवती त्रिंशदक्षरा लक्ष्मी एकगुरुह्रासेन लघु द्वयवृद्ध्या गाथाया सप्तविंशतिभेदा स्फुटीकृत्य प्रदर्श्यन्ते—यथा—२७ गुरु ३ लघु ३० अक्षर लक्ष्मी। २६ गुरु ५ लघु ३१ अक्षर ऋद्धि। २५ गुरु ७ लघु ३२ अक्षर बुद्धि। २४ गुरु ९ लघु ३३ अक्षर लज्जा। २३ गुरु ११ लघु ३४ अक्षर विद्या। २२ गुरु १३ लघु ३५ अक्षर क्षमा। २१ गुरु १५ लघु ३६ अक्षर देही। २० गुरु १७ लघु ३७ अक्षर गौरी। १९ गुरु १९ लघु ३८ अक्षर धात्री। १८ गुरु २१ लघु ३९ अक्षर चूर्णा। १७ गुरु २३ लघु ४० अक्षर छाया। १६ गुरु २५ लघु ४१ अक्षर. कान्ति। १५ गुरु २७ लघु ४२ अक्षर महामाया। १४ गुरु २९ लघु ४३ अक्षर कीर्ति। १३ गुरु ३१ लघु ४४ अक्षर सिद्धि।

---

१ 'राई' रवि० २ 'गाहिणी वीसा' रवि० ३ 'सीही हसीआ' रवि० ४ 'गारि' रवि० ५ 'मनोरमा' रवि०

१२ गुरु. ३३ लघु. ४५ अक्षर. मानिनी । ११ गुरु. ३५ लघु. ४६ अक्षर. रामा । १० गुरु. ३७ लघु. ४७ अक्षर. गाहिनी । ९ गुरु. ३९ लघु. ४८ अक्षर. विश्वा । ८ गुरु. ४१ लघु. ४९ अक्षर. वासिता । ७ गुरु. ४३ लघु. ५० अक्षर. शोभा । ६ गुरु. ४५ लघु. ५१ अक्षर. हरिणी । ५ गुरु. ४७ लघु. ५२ अक्षर. चक्री । ४ गुरु. ४९ लघु. ५३ अक्षर. सारसी । ३ गुरु. ५१ लघु. ५४ अक्षर. कुररी । २ गुरु. ५३ लघु. ५५ अक्षर. सिंही । १ गुरु. ५५ लघु. ५६ अक्षर. हंसी । एते सप्तविंशतिभेदाः । एतासामुदाहरणानि मत्कृतोदाहरणमञ्जर्यां क्रमेण द्रष्टव्यानि ॥

अथ गाथापाठप्रकारमुपदिशति—

पढमं वी हंसपअं बीए सिंहस्स विक्कमं जाआ ।
तीए गअवरलुलिअं अहिवरलुलिअं चउत्थए गाहा ॥ ९६ ॥

[प्रथममिव हंसपदं द्वितीये सिंहस्य विक्रमो यादृक् ।
तृतीये गजवरलुलितमहिवरलुलितं चतुर्थके गाथायाः ॥]

प्रथम द्वादशमात्र चरण हंसपदवन्मन्थर यथा स्यात्तथा पठ्यते । अथवा 'पढमही' इति क्वचित्पाठः । तत्र प्रथमार्द्धं हंसगमनवत्पठेदित्यर्थः । द्वितीयचरणे सिंहविक्रमो यादृक् तादृक् पठ्यते । तृतीयचरणे गजवरस्य लुलितं यथा गतिविशेषो भवति तथा पठ्यते । चतुर्थेऽचरणेऽहिवरस्य लुलितं गतिविशेषो यथा भवति तथा पठ्यते । गाथा छन्दः ॥

अथ गणभेदेन गाथायाः सावस्थाभेदं दोषमाह—

एके जे कुलमन्ती वे णाअकेहि होइ संगहिणी ।
णाअकहीणा रण्डा वेसा बहुणाअआ होइ ॥ ९७ ॥

[एकेन जेन कुलवती द्वाभ्यां नायकाभ्यां स्वयंग्राहिणी ।
नायकहीना रण्डा वेश्या बहुनायका भवति ॥]

एकेन जेन जगणेन गाथा कुलीना भवति । जगणस्य नायकपर्यायत्वादिति भावः । द्वाभ्यां नायकाभ्यां जगणाभ्यां स्वयंग्राहिणी सुखग्राह्या भवति । नायकहीना रण्डा भवति । बहुनायका गाथा वेश्या भवति । द्वितीयार्थः स्पष्टः । गाथा छन्दः ॥

अथ लघुसंख्याभेदेन गाथाया वर्णभेदमाह—

तेरहलहुआ विप्पी एआईसेहि खत्तिणी भणिआ ।
सत्ताइसा वेसी सेसा सा सुद्दिणी होइ ॥ ९८ ॥

१. 'विय' ग०. २. 'अहिलुलिअगउत्थए' ग०. ३ 'सिंहविक्रमवदुन्नं पठ्यते' ग०. ४. 'गजवरलुलितं सर्पलं पठ्यते' ग०. ५. 'चतुर्थमहिलुलितम् । यथा सर्पाणां दोषे गावच तथाभाने यथन्नं पठ्यत इत्यर्थः' ग०. ६. 'वन्ती' ग०. ७. 'संगहिणी' ग०.

[त्रयोदशलघुका विप्रा एकविंशतिभिः क्षत्रिया भणिता ।
सप्तविंशतिभिर्वैश्या शेषा सा शूद्रा भवति ॥]

त्रयोदशवर्णा लघुका यस्यां सा तदवधिका विप्रा । ब्राह्मणी भवतीत्यर्थः । एकविंशतिभिर्लघुकैः क्षत्रिया भणिता । सप्तविंशतिभिर्लघुकैर्गाथा वैश्या भवति । शेषा तु ऊनत्रिंशदारभ्य शेषैर्लघुकैः शूद्रा भवति । गाथा छन्दः ।

विषमस्थानदत्तजगणाया गाथाया दोषमाह—

जा पढम तीअ पञ्चम सत्तमठाणे ण होइ गुरुमज्झा ।
गुव्विणिए गुणरहिआ गाहा दोसं पआसेइ ॥ ५९ ॥

[या प्रथमतृतीयपञ्चमसप्तमस्थाने ननु भवति गुरुमध्या ।
गुर्विणीव गुणरहिता गाथा दोषं प्रकाशयति ॥]

या गाथा प्रथमतृतीयपञ्चमसप्तमस्थाने ननु गुरुमध्या जगणयुक्ता भवति गुर्विणीव गुणरहिता सकलकार्याक्षमा सा गाथा दोषं प्रकाशयति । अतो विषमस्थानस्थनायका सा न कर्तव्येत्यर्थः । गाथा छन्दः ॥ गाथा निवृत्ता ।

विग्गाहा छन्दः—

विग्गाहापढमदले सत्ताईसाइँ मत्ताइं ।
पच्छिमदले ण तीसा इं अं जं पिङ्गलेण णाएण ॥ ६० ॥

[विगाथाप्रथमदले सप्तविंशतिर्मात्राः ।
पश्चिमदले ननु त्रिंशदिति[3] जल्पितं पिङ्गलेन नागेन ॥]

विगाथायाः पूर्वार्धे सप्तविंशतिर्मात्रा भवन्ति । चरमदले उत्तरार्धे ननु त्रिंशन्मात्रा भवन्तीति जल्पितं पिङ्गलेन नागेन । गाथादलवैपरीत्येन विगाथा भवतीत्यर्थः । इदमप्युदाहरणम् । भूषणे तु—'गाथा द्वितीयतुर्यौ पादौ भवतस्तु विपरीतौ । सेयं भवति विगाथा फणिनायकपिङ्गलेन संप्रोक्ता ॥' इति ॥

विगाथामुदाहरति जहा—

परिहर माणिणि माणं पेक्खहि कुसुमाइँ णीवस्स ।
तुम्ह कए खरहिअओ गेह्णइ गुडिआधणुंअ किर कामो ॥

[परिहर मानिनि मानं प्रेक्षस्व कुसुमानि नीपस्य ।
युष्मत्कृते खरहृदयो गृह्णाति गुटिकाधनुः किल कामः ॥]

मानवतीं नायिकां प्रति धृष्टस्य नायकस्य वचनम् । यथा हे मानिनि, मानं परिहर त्यज । प्रेक्षस्व नीपस्य कदम्बस्य कुसुमानि । युष्मत्कृते खरहृदयोऽत्यन्त कठोराशयः

१. 'ठाणे हि' रवि०. २. 'दले हि' रवि०. ३. 'इति भणितं' रवि०.

कामोऽस्मिन्वर्षासमये शेषपुष्पाणामभावात्किल गुटिकाधनुर्गृह्णाति । अतस्त्यजेन मानमिति भावः । अथ वा तादृशीं कान्तकृतानुनयमगृह्णतीं नायिकां प्रति दूत्युक्तिः ॥ उद्दवणिका यथा—।।।।, ऽ।।, ऽऽ, ऽ।।, ।।ऽ, ।, ऽऽ, ऽ ॥ ऽ।।, ऽ।।, ।।ऽ, ऽ।।, ।।ऽ, ।ऽ।, ।।ऽ, ऽ, विगाहा निवृत्ता ॥

अथोद्गाथा छन्दः—

पुव्वद्धे उत्तद्धे मत्ता तीसन्ति सुभअ संभणिआ ।
सो उग्गाहो वुत्तो पिङ्गलकइदिट्ठ सट्ठिमत्तङ्गा ॥ ६१ ॥

[पूर्वार्धे उत्तरार्धे मात्रास्त्रिंशत्सुभग संभणिताः ।
सा उद्गाथा वृत्ता पिङ्गलकविदृष्टा षष्टिमात्राङ्गा ॥]

पूर्वार्धे उत्तरार्धे च यत्र मात्रास्त्रिंशत्सम्यग्भणिताः । सुभगेति मात्राविशेषणम् । सा पिङ्गलकविदृष्टा षष्टिमात्राङ्गा कलाषष्टिशरीरा उद्गाथा वृत्ता । अत्र सर्वत्रावहट्टभाषाया लिङ्गव्यत्यय प्रातिपदिकनिर्देशो वा न दोषाधायक इति गुरवः । इदमप्युदाहरणम् । इयमेव ग्रन्थान्तरे आर्यागीतिरित्युच्यते । भूषणे तु—'गाथा द्वितीयतुर्यावष्टादशमात्रकौ भवतः । मात्राषष्टिशरीरा प्रोक्ता सा गीतिरिह हि फणिपतिना ॥'

उद्गाथामुदाहरति—जहा—

'सोऊण जस्स णामं अंसू णअणाइँ सुमुहि रुन्धन्ति ।
भण वीरचेइवइणो पेच्छामि मुहं कहं जहिच्छं से ॥'

[श्रुत्वा यस्य नाम अश्रूणि नयने सुमुखि रुन्धन्ति ।
भण वीरचेदिपतेः प्रेक्षिष्यामि मुखं कथं यथेच्छं तस्य ॥]

चेदिपतावनुरक्ता काचिद्दर्शनोत्कलिकाकुला कुलवधूका निजसखीमाह—यन्नामश्रवणेनापि सात्त्विकभावाविर्भावादश्रुपातस्तद्वदनदर्शनमतिदूरापास्तमित्युत्कलिकाकुलाह वीरस्य चेदिपतेः कथ मुखं प्रेक्षिष्यामीति सामुत्कलावाच.(?)। उद्दवणिका यथा—ऽऽ, ।ऽ।, ऽऽ, ऽऽ, ।।ऽ, ।।।, ऽऽ, ऽ ॥ ।।ऽ, ।ऽ।, ।।ऽ, ऽऽ, ।।ऽ, ।ऽ।, ऽऽ, ऽ, उद्गाथा निवृत्ता ॥

अथ गाहिनीसिंहिन्यौ—

पुव्वद्ध तीसमत्ता पिङ्गल पभणेइ मुद्धिणि सुणेहि ।
उत्तद्धे बत्तीसा गाहिणि विवरीअ सिंहिणी भणु सअम् ॥६२॥

[पूर्वार्धे त्रिंशन्मात्राः पिङ्गलः प्रभणति मुग्धे शृणु ।
उत्तरार्धे द्वात्रिंशद्गाहिनी विपरीतां सिंहिनीं भण सत्यम् ॥]

---

१. 'मत्तद्दो' गि०. २. 'हे सुभगे' टी०. ३. 'स उद्गाथो वृत्त.' टी०.

यत्र पूर्वार्धे प्रथमदले त्रिंशन्मात्रा भवन्ति उत्तरार्धे चरमदले द्वात्रिंशन्मात्राः संभूय द्वाषष्टिर्यत्र भवन्ति पिङ्गलः प्रभणति मुग्धे शृणु सा गाहिनी छन्दः। तद्विपरीतां सिंहिनीं सत्यं भण। कथयेत्यर्थः। अत्र पूर्वार्धे द्वात्रिंशन्मात्रा उत्तरार्धे च त्रिंशन्मात्रा इति विपर्ययार्थः। वाणीभूषणेऽपि—'यदि गाथातुर्यपदं विंशतिमात्रं च गाथिनी भवति। फणिपतिपिङ्गलभणितं तद्विपरीतं तु सिंहिनीवृत्तं स्यात्॥' इदमप्युदाहरणम्॥

गाथिनीमुदाहरति—जहा—

'मुञ्चहि सुन्दरि पाअं अप्पहि हसिऊण सुमुहि खग्गं मे।
कप्पिअ मेच्छसरीरं पेच्छइ वअणाइ तुह्म धुअ हम्मीरो॥'

[मुञ्च सुन्दरि पादमर्पय हसित्वा सुमुखि खड्गं मे।
कल्पयित्वा म्लेच्छशरीरं प्रेक्षते वदनानि युष्माकं ध्रुवं हम्मीरः॥]

संग्रामयात्रायां चरणपतितां पत्नीं प्रति हम्मीरवचनम्—मुञ्च सुन्दरि पादम्। विघ्नं मा कुर्वित्यर्थः। हे सुमुखि, अर्पय हसित्वा मम खड्गम्। खड्गग्रहणानन्तरं प्रतिजानीते—कल्पयित्वा छेदयित्वा म्लेच्छशरीरं प्रेक्षते वदनानि युष्माकं ध्रुवं हम्मीरः। अनिकृत्तम्लेच्छशरीरो भवन्मुखं नावलोकयितुं सहिष्य इति भावः॥

सिंहिनीमुदाहरति—जहा—

'वरिसइ कणअह विट्ठिं तप्पइ भुअणे दिआणिसं जग्गन्तो।
णीसङ्क साहसङ्को णिन्दइ इन्दं अ सूरबिम्बं अ॥'

[वर्षति कनकस्य वृष्टिं तपति भुवनानि दिवानिशं जाग्रन्।
निःशङ्क साहसाङ्को निन्दतीन्द्रं च सूर्यबिम्बं च॥]

कथितकविर्विक्रमादित्यं स्तौति। अयमर्थः—अयं कनकस्य वृष्टिं वर्षति, इन्द्रस्तावज्जलवृष्टिं वर्षति। असौ भुवनानि तपति, सूर्यबिम्बं भुवनं तपति। इन्द्रः सूर्यो वा दिवसे जागर्ति, अयं तु दिवानिशं जाग्रदेवावतिष्ठत इत्यर्थः। उद्दवणिका उभयोर्यथा—ऽ।।, ऽ।।, ऽऽ, ऽ।।, ।।ऽ, ।।।।, ऽऽ, ऽ।। ऽ।।, ऽ।।, ऽऽ, ऽ।।, ।।ऽ, ।ऽ।। ऽऽ, ऽ, ।। ।।।।, ।।।। ऽऽ, ऽ।।, ।।ऽ, ।ऽ।, ऽऽ, ऽऽ ।। ऽऽ, ऽ ।। ऽऽ, ऽ।।, ।ऽ।, ऽऽ, ऽ, ।।, गाहिनीसिंहिन्यौ निवृत्ते॥

अथ स्कन्धकं छन्दः—

चउमत्ता अट्ठगणा पुव्वद्धे उत्तद्ध होइ समरूआ।
सो खन्धआ विआणहु पिङ्गल पभणेइ मुद्धि बहुसंभेआ॥ ६२॥

[चतुर्मात्रिका अष्टौ गणाः पूर्वार्धे उत्तरार्धे भवन्ति समरूपाः।
तं स्कन्धकं जानीहि पिङ्गलः प्रभणति मुग्धे बहुसंभेदम्॥]

---

१. 'इच्छामि वदनं तव ध्रुवं हम्मीरः' टी०. २. 'भुवने' टी०.

चतुर्मात्रिका गणा अष्टौ भवन्ति पूर्वार्धे उत्तरार्धे च समरूपाः । दलद्वयेऽपि मिलित्वा चतुःषष्टिमात्रकशरीरं स्कन्धकं विजानीत । पिङ्गलः प्रभणति मुग्धे । बहुसभेदमष्टाविंशतिप्रभेदमित्यर्थः । भूषणेऽपि—'स्कन्धकमपि तत्कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात् । तत्तुल्यमपिमदल भवति चतुःषष्टिमात्रकशरीरमिदम् ॥' इदमप्युदाहरणम् ॥

स्कन्धकमुदाहरति—जहा—

'जं जं आणेइ गिरिं रइरहचक्कपरिघट्टणसहं हणुआ ।
तं तं लीलाइ णलो वामकरत्थंहिअं रएइ समुद्दे ॥'
[यं यमानयति गिरिं रविरथचक्रपरिघट्टनसहं हनूमान् ।
तं तं लील्या नलो वामकरस्तम्भितं रचयति समुद्रे ॥]

उट्टवणिका यथा—SS, SS, IIS, IIII, SII, ISI, IIS, IIS ॥ SS, SS, IIS, SII, SS, ISI, SII, SS ॥

अथ स्कन्धकस्य व्याप्यव्यापकभावेन सर्वगुरुकतस्यैकगुरुह्रासे [लघु]द्वयवृद्ध्या अष्टाविंशतिभेदाः । तानुद्दिशति—

णन्दउभद्दउसेससारङ्गसिववम्भवारणवरुण ।
णीलुमअणतालङ्कसेहरुसरुगअणुसरह्णुविमइखीर ॥
णअरुणरुसिद्धणेहलु ।
मअगलुभोलउसुद्धसरिकुम्भकलससस्सि जाण ।
सरहसेससहर गुणहु अट्ठाइस खन्धाण ॥ ६४ ॥
[नन्दभद्रशेषसारङ्गशिवब्रह्मवारणवरुणाः ।
नीलमदनतालाङ्कशेखरशरगगनशरभविमतिक्षीराणि ।
नगरनरस्निग्धस्नेहाः ।
मदकलभूपालशुद्धसरित्कुम्भकलशशशिनो जानीहि ।
शरभशेषशशधराः जानीत अष्टाविंशतिस्कन्धकाः ॥]

हे शिष्याः, शरभशेषशशधराः प्राकृतकवयः । गुणहु जानीत । अष्टाविंशतिस्कन्धका इति । यथा—३० गुरु. ४ लघु. ३४ अक्षर. नन्दः । २९ गुरु. ६ लघु. ३५ अक्षर. भद्रः । २८ गुरु. ८ लघु. ३६ अक्षर. शेषः । २७ गुरु. १० लघु. ३७ अक्षर. सारङ्गः । २६ गुरु. १२ लघु. ३८ अक्षर. शिवः । २५ गुरु. १४ लघु. ३९ अक्षर. ब्रह्मा । २४ गुरु. १६ लघु. ४० अक्षर. वारण । २३ गुरु १८ लघु ४१ अक्षर. व-

१. 'शरभः । शेषे भणमाने शशिधर जानीहि' इति रविकरव्याख्यानम्.

रुण'। २२ गुरु २० लघु ४२ अक्षर नील। २१ गुरु २२ लघु ४३ अक्षर मदन। २० गुरु २४ लघु ४४ अक्षर तालाङ्क। १९ गुरु २६ लघु ४५ अक्षर शेखर'। १८ गुरु २८ लघु ४६ अक्षर शर। १७ गुरु ३० लघु ४७ अक्षर गगनम्। १६ गुरु ३२ लघु ४८ अक्षर शरभ'। १५ गुरु ३४ लघु ४९ अक्षर विमति। १४ गुरु ३६ लघु ५० अक्षर क्षीरम्। १३ गुरु ३८ लघु ५१ अक्षर नगरम्। १२ गुरु ४० लघु ५२ अक्षर नर। ११ गुरु ४२ लघु ५३ अक्षर स्निग्ध। १० गुरु ४४ लघु ५४ अक्षर स्नेह। ९ गुरु ४६ लघु ५५ अक्षर मदकल। ८ गुरु ४८ लघु ५६ अक्षर भूपाल। ७ गुरु ५० लघु ५७ अक्षर शुद्ध। ६ गुरु ५२ लघु ५८ अक्षर सरित्। ५ गुरु ५४ लघु ५९ अक्षर कुम्भ। ४ गुरु ५६ लघु ६० अक्षर कलश। ३ गुरु ५८ लघु ६१ अक्षर शशी। एतऽष्टाविंशतिभेदाः। एषामुदाहरणान्युदाहरणमञ्जर्यां द्रष्टव्यानि। तालङ्किनी छन्द॥

अष्टाविंशतिभेदानयनप्रकारमाह—

चौलघु कत्थ वि पसरजहिँ सो सहि नन्दहु जाण।
गुरु टुट्टइ वि बि लहु वढइ त तं णाम विआण॥ ६९॥

[चतुर्लघवः कुत्रापि प्रसरन्ति त सखि नन्द जानीहि।
गुरुर्ह्रसति द्वौ द्वौ लघू वृद्धिं प्राप्नुतस्तत्तन्नाम विजानीहि॥]

अयमर्थः—चतुःषष्टिकलात्मके स्वःभवे निशङ्कुरश्चत्वारो लघवस्तदा नन्दः। एवमन्यऽपि ज्ञेयाः। षष्ठे जगणस्यावश्यकत्वाच्चत्वारो लघव इत्युक्तम्। दोहा छन्द॥

अथाद्यं नन्दमुदाहरति—

'चन्दा कुन्दा कासा हारा हीरा तिलोअणा केलासा।
जेत्ता जेत्ता सेत्ता तेत्ता कासीस जिण्णिआ ते कित्ती॥'

[चन्द्रः कुन्दः काशो हारो हीरस्त्रिलोचनः कैलासः।
यावद्यावच्छ्वेतानि तावत्काशीश जितानि तव कीर्त्या॥]

कश्चित्कवी राजानं दिवोदासं स्तौति—यथा—चन्द्र कुन्द काश हार हीर त्रिलोचन शिव कैलास यावद्यावच्छ्वेतानि तावद्धे काशीश, त कीर्त्या जितानि। तदपेक्षया ते कीर्तिधवलेत्यर्थः। उद्दवणिका यथा—SS, SS, SS, SS, SS, ISI, SS SS॥ SS, SS, SS, SS, SS, ISI, SS, SS, इति गाथाप्रकरणम्॥

---

१ 'तालङ्क' रवि० २ 'क्षीरनगरम्' रवि० ३ 'स्नेहन' रवि० ४ मदगण' रवि० ५ 'भाल' रवि० ६ 'शुद्धसरित्' रवि० ७ 'कुत्रापि लघुद्वयं वर्धते तथा तथा नामानि जानीत।' रवि० ८ गग रवि० ९ जिता रवि०

अथ दोहा छन्द —

तेरह मत्ता पढम पअ पुण एआरह देह ।
पुण तेरह एआरहइ दोहालक्खण एह ॥ ६६ ॥
[त्रयोदश मात्राः प्रथमे पादे पुनरेकादश दत्थ ।
पुनस्त्रयोदशैकादश दोहालक्षणमेतत् ॥]

त्रयोदश मात्रा प्रथमचरणे पुनर्द्वितीयचरणे एकादश पुनस्तृतीयचरणे त्रयोदश पुनश्चतुर्थचरणे एकादशैव । द्विपथालक्षणमेतत् ॥

द्विपथामुदाहरति—

'सुरअरु सुरही परसमणि णहि वीरेसरामाण ।
ओ वक्कल ओ कठिणतणु ओ पसु ओ पासाण ॥'
[सुरतरुः सुरभिः स्पर्शमणिर्नहि वीरेशसमानः ।
अथ वल्कलोऽथ कठिनतनुरथ पशुरथ पाषाणः ॥]

कश्चित्कविर्वीरेश्वरं स्तौति—सुरतरु कल्पवृक्ष, सुरभि कामधेनु, स्पर्शमणिश्च, एते त्रयोऽपि नहि वीरेश्वरसमानाः । एतेषु कल्पतरुर्वल्कलमय, ओ अथ च कठिनतनु काष्ठमयत्वात्, कामधेनु पशु विवेकरहिता, स्पर्शमणि पाषाणो जड एवेति । अयं च मृदुहृदयो विवेचक सुधी विलक्षणस्वभाव ॥

उदाहरणान्तरमुपरि द्रष्टव्या । तथा द्विपथायास्त्रयोविंशतिभेदानेकगुरुह्रासेन लघुद्वयवृद्ध्याह—

भमरु भामरु सरहु सेवाणु,
मण्डूअ मक्कडु करहु,
णरु मआलु मेअगलु पओहरु,
चलु वाणरु तिण्णिअलु,
कच्छ मच्छ सद्दूल अहिवर,
वग्घ विराडउ सुणह तह
उन्दुर सप्पपमाण,
गुरु टुट्टइ पे लहु वढइ
तं तं णाम विआण ॥ ६७ ॥

१ 'अन्त्यौ चेद् लघू, द्वौ चान्त्यौ गुर्वौ सा द्विपथा' टी०. २ 'मम अंगु' टी० तन्त्रान्तरे 'गरगण' इति

[भ्रमरो भ्रामरः शरभः श्येनः,
मण्डूको मर्कटः करभः,
नरो मरालो मदकलः पयोधरः,
चलो वानरस्त्रिकलः,
कच्छपो मत्स्यः शार्दूलोऽहिवरः,
व्याघ्रो बिडालः शुनकस्तथा
उन्दुरः सर्पप्रमाणः,
गुरुस्त्रुट्यति द्वे लघू वर्धेते
तत्तन्नाम विजानीत ॥]

इति त्रयोविंशतिभेदाः । रड्डा छन्दः ॥

त्रयोविंशतिभेदानयनप्रकारमाह—

छव्विसु अक्खर भमरहो गुरु बाइस लघु चारि ।
गुरु टुट्टइ बे लहु वढइ तं तं णाम विआरि ॥ ६८ ॥

[षड्विंशत्यक्षरो भ्रमरो गुरवो द्वाविंशतिर्लघवश्चत्वारः ।
गुरुस्त्रुट्यति द्वौ लघू वर्धेते तत्तन्नाम विचारय ॥]

ते यथा—२२ गु. ४ ल. २६ अ. भ्रमरः । २१ गु. ६ ल. २७ अ. भ्रामरः । २० गु. ८ ल. २८ अ. शरभः । १९ गु १० ल. २९ अ. श्येनः । १८ गु. १२ ल. ३० अ. मण्डूकः । १७ गु. १४ ल. ३१ अ. मर्कटः । १६ गु. १६ ल. ३२ अ. करभः । १५ गु. १८ ल. ३३ अ. नरः । १४ गु. २० ल. ३४ अ. मरालः । १३ गु. २२ ल. ३५ अ. मदकलः । १२ गु. २४ ल. ३६ अ. पयोधरः । ११ गु. २६ ल. ३७ अ. चलः । १० गु. २८ ल. ३८ अ. वानरः । ९ गु. ३० ल. ३९ अ. त्रिकलः । ८ गु. ३२ ल. ४० अ. कच्छपः । ७ गु. ३४ ल. ४१ अ. मत्स्यः । ६ गु. ३६ ल. ४२ अ. शार्दूलः । ५ गु. ३८ ल. ४३ अ. अहिवरः । ४ गु. ४० ल. ४४ अ. व्याघ्रः । ३ गु. ४२ ल. ४५ अ. बिडालः । २ गु. ४४ ल. ४६ अ. शुनकः । १ गु. ४६ ल. ४७ अ. उन्दुरः । ० गु. ४८ ल. ४८ अ. सर्वलघुः सर्पः । एते त्रयोविंशतिभेदाः । एतेषामुदाहरणान्युदाहरणमञ्जर्यां द्रष्टव्यानि । दोहा छन्दः ॥

अथ भ्रमरं प्रथममुदाहरति—जहा (यथा)—

'जा अद्धङ्गे पव्वइ सीसे गङ्गा जासु ।
जो देआणं वल्लहो वन्दे पाअं तासु ॥'

---

१. रड्डाछन्दोलक्षणं स्पष्टं व्यक्तमेव. २. 'वासु' रवि०; 'वसति' इति तच्छाया. ३. 'लोआण' रवि०; 'लोकाना' इति तच्छाया.

[यस्यार्धाङ्गे पार्वती शीर्षे गङ्गा यस्य ।
यो देवानां वल्लभो वन्दे पादं तस्य ॥]

अथ लघुसंख्याभेदेन द्विपथाया वर्णभेदमाह—

बारह लहुआ विप्पी तह बाईसेहिँ खत्तिणी भणिआ ।
बत्तीस होइ वेसी जा इअरा सुद्दिणी होइ ॥ ६९ ॥

[द्वादश लघवो विप्रा तथा द्वाविंशत्या क्षत्रिया भणिता ।
द्वात्रिंशता भवति वैश्या अष्टचत्वारिंशता शूद्री भवति ॥]

चतुर्लघुकमारभ्य द्वादशलघुपर्यन्ता द्विपथा विप्रा ब्राह्मणी भवति । तथा त्रयोदशलघुकमारभ्य द्वाविंशत्या लघुकैः क्षत्रिया भणिता । त्रयोविंशतिलघुकमारभ्य द्वात्रिंशत्या लघुभिर्वैश्या भवति । या इतरा सा सर्वा शूद्रा भवति । गाथा छन्दः ॥

विषमचरणस्थजगणाय दोषमाह—

जिस्सा पढमहिँ तीए जगणा दीसन्ति अ पाए ण ।
चण्डालइ घररहिआ दोहा दोस पआसेइ ॥ ७० ॥

[यस्याः प्रथमे तृतीये जगणा दृश्यन्ते च पादे ननु ।
चाण्डालगृहस्थिता दोहा दोष प्रकाशयति ॥]

यस्या दोहायाः प्रथमे तृतीये च पादे ण ननु जगणा दृश्यन्ते सा दोहा चाण्डालगृहस्थितेव दोषं प्रकाशयति । यद्वा प्राकृते पूर्वनिपातानियमाद्गृहस्थितचाण्डालेव दोषावहा भवति । गाथा छन्दः ॥

दोहायां गणनियममाह—

छक्कलु चक्कलु तिण्णिक्लु एमपरि विसम पअन्ति ।
समपाअहिँ अन्तेक्कलु ठवि दोहा णिब्भन्ति ॥ ७१ ॥

[षट्कलश्चतुष्कलस्त्रिकलोऽनेन प्रकारेण विषमे पतन्ति ।
समपादेऽन्त एककलं स्थापय दोहा निर्भ्रान्ता ]

षट्कल चतुष्कल त्रिकलस्थानया रीत्या त्रयोऽमी गणा विषमे प्रथमे तृतीये च चरणे पतन्ति । समपादे तृतीय चतुर्थे च चरणे षट्कलचतुष्कलस्थानानन्तरमेकामेव कलां निहितां कुर्यादित्यर्थः । वाणीभूषणेऽपि—'षट्कलयुग्मं त्रिकलमपि विषमपदे विनिधेहि । समपादान्ते धारय कलमिति दोहामध्येहि ॥' दोहा निवृत्ता (दोहा निवृत्ता) ॥

अह रसिआ (अथ रसिका छन्दः—)

दिअवर गण धरि जुअल,
पुणविव तिअ लहु पअल,
इमविहि विवि छउपअणि।
जेँम सुहइ सुससि रअणि,
तह रसिअउ मिअणअणि,
एँअदहकल गअगमणि ॥ ७२ ॥

[द्विजवर गणयोर्धारय युगलं,
पुनरपि त्रयो लघवः प्रकटाः,
अनेन विधिना बिम्बितानि पट्पदानि।
यथा शोभते सुशशी रजन्यां,
तथा रसिकाना मृगनयने,
एकादशकलं गजगमने ॥]

प्रथमं द्विजवर गणयोश्चतुर्लघुकगणयोर्युगलं धारय। पुनरपि च त्रिलघुको गणः पतति। अनेन विधिना बिम्बितानि पट्पदानि यत्र तत्र छन्दः शोभते। यथा सुशशी रजन्या तथा रसिअउ रसिकाना मध्य एतदेकादशकल छन्दः। हे मृगनयने हे गजगमने शोभते इति। भूषणे तु—ललितमिति नामान्तरम्। यथा—'द्विजवर युगमिह रचय, त्रिलघुकगणमिह कलय, सुललित कलितरसपदि, सरसिजमुखि भवति यदि, जगति विदितललितमिति, वरफणिपतिरिति वदति॥' इदमप्युदाहरणम्॥

रसिकामुदाहरति—जहा(यथा)—

'विमुह चलिअ रण अचलु,
परिहरिअ हअगअवलु,
हलहलिअ मलअणिवइ,
जसु जस तिहुअण पिवइ,
वणरसिणरवइ लुलिअ,
सअलउवरि जसु फुरिअ॥'

[विमुखं चलितो रणादचलः,
परिहृत्य हयगजबलं,
हलहलितो मलयनरपतिः,

१. 'विमुह.' रवि०. २. 'रणे' रवि०.

यस्य यशस्त्रिभुवन पिबति,
वाराणसीनरपतिर्लुलित ,
सकलोपरि यश पुष्पितम् ॥]

कश्चित्कस्यचिदग्रेऽचलनरपतेः समराङ्गणादपमानमनुवर्णयंस्तत्कटकक्षोभमुपवर्णयति— विमुख पराङ्मुख चलितो रणादचलाख्योऽपि परिहृत्य हयगजबल तदानीमेव मलयनरपतिरपि हलहलित आकस्मिकसजातसाध्वसोऽभूत् । यस्य यशस्त्रिभुवन पिबति । व्याप्नोतीत्यर्थ । अय च वाराणसीनरपतिरपि लुलित पराङ्मुखो बभूव । सकलस्य लोकस्योपरि यस्य यश पुष्पितम् । विकसितमित्यर्थ । उदवणिका स्पष्टा ॥

अथैतस्य छन्दस उक्कलति नामान्तरमाह—

आइकव्वउक्कच्छ किउ लोहगिणिमह सारु ।
गुरु वट्टइ बिचल घटइ त त णाम विआरु ॥ ७४ ॥
[आदिकाव्यमुक्कच्छा कृत लोहगिण्या सारम् ।
गुरुर्वर्धते द्वौ लघू ह्रसतस्तत्तन्नाम विचारय ॥]

सर्वंल्गुरु रसिकाछन्द । आदिकाव्यमर्थात्प्रथम भेद कृत्वा 'उक्कच्छा' इति णाम किउ कृतम् । छन्दोविद्भिरिति शेष । कीदृशम् । लोहगिण्यामेतस्यैवापरभेदे छन्दसि सारभूतम् । उत्कृष्टमित्यर्थ । अत्र च यदा गुरुर्वर्धते द्वौ लघू ह्रसतस्तदा तत्तन्नाम विचारय । दोहाछन्द ॥

लघुद्वयह्रासेनैकगुरुवृद्धोक्कच्छाया अष्टौ भेदास्तानुद्दिशति—

लोहगिणि हसिणिआ रेहा तालंकि कंपि गभीरा ।
काली कलरुद्दाणी उक्कच्छा अट्ठ नामाइ ॥ ७५ ॥
[लोहगिणी हसी रेखा तालङ्की कम्पी गम्भीरा ।
काली कालरुद्राणी उक्कच्छायाः अष्ट नामानि ॥]

लोहंगिणी, हंसी, रेखा, तालङ्किनी, कम्पिनी, गम्भीरा, काली, कालरुद्राणी, इत्यष्टावुक्कच्छाया नामानि । भेदा इत्यर्थ । गाहाछन्द ॥

अथाष्टभेदानयनप्रकारमाह—

लोहगिणि मज्झसव्व जत्थ गुरू एक्क होइ सा हसी ।
ज ज वट्टइ हारो णाम जो जत्थ सो तत्थ ॥ ७६ ॥

१ हसगति ग॰ । २ 'सारि ग॰, 'यत्र सप्ततारो गुरव सा हसी । तत्र यथा यथा सप्तारो गुरवो वर्धन्ते तथा तथा नामान्तराणि वर्धन्ते । आदिच्छन्दस उक्कच्छा नामैव' इति तरङ्गानुसारिणी टीकाव्याख्या

[लोहंगिणी सर्वलघुर्यत्र गुरुरेको भवति सा हंसी।
यो यो वर्धते हारो नाम यद्यत्र तत्तत्र ॥]

लोहंगिणी सर्वलघुका। यत्रैको गुरुर्भवति सा हंसी। एवं लघुद्वयह्रासेनैकैकगुरुवृद्ध्या यन्नाम यत्र तन्नाम तत्र। अत्र सर्वत्र षट्षष्टिमात्राः। ते यथा—६६ मात्रा सर्वे लघुका लोहंगिणी। ६४ ल० १ गु० ६६ मा० हंसी। ६२ ल० २ गु० ६६ मा० रेखा। ६० ल० ३ गु० ६६ मा० तालङ्किणी। ५८ ल० ४ गु० ६६ मा० कम्पिणी। ५६ ल० ५ गु० ६६ मा० गम्भीरा। ५४ ल० ६ गु० ६६ मा० काली। ५२ ल० ७ गु० ६६ मा० कलरुद्राणी। एतेऽष्टावुक्तच्छाया भेदाः। गाहाछन्दः॥

अथ रोलाछन्दः—

पढम होइ चउवीस मत्त अन्तर गुरु जुत्ते,
पिङ्गल हँते सेसणाअ तण रोला वुत्ते।
एगगारहा हारा रोलाछन्दो जुज्जइ,
एक्के एक्के टुट्टइ अण्णो अण्णो वड्ढइ॥ ७७॥

[प्रथमं भवन्ति चतुर्विंशतिर्मात्रान्तरा गुरुयुक्ताः,
पिङ्गलोऽभवच्छेपनागस्तेन रोला विवृता।
एकादश हारा रोलाछन्दसि योज्यन्ते,
एकस्मिन्नेकस्मिंस्त्रुटितेऽन्योऽन्यो वर्धते ॥]

पिङ्गलो ब्राह्मणोऽभवद्यः शेषनागस्तेन रोलाख्यं छन्दो विवृतम्। अत्र रोलाछन्दसि एकादश हारा गुरवो योज्यन्ते। एकैकगुरुह्रासेनान्योऽन्यो लघुर्वर्धते। अत्र च यथाकथंचित्प्रतिचरण चतुर्विंशतिः कलाः कर्तव्या इति। वाणीभूषणेऽपि—'रोलावृत्तमवेहि नागपतिपिङ्गलभणित प्रतिपदमिह चतुरधिककलाविंशतिपरिगणितम्। एकादशमधिविरतिरखिलजनचित्ताहरणं सुललितपदमदकारि विमलकविकण्ठाभरणम्॥' इति। इदमप्युदाहरणम्॥

रोलामुदाहरति—जहा (यथा)—

'पअभरदरमरुधरणितरणिरेह धुल्लिअ झंपिअ,
कमटपिट्ठटरपरिअ मेरुमंदरसिर कंपिअ।
कोहे¹ चलिअ हम्मीरवीरगअजूहसंजुत्ते,
किअउ कट्ठ हाकंद मुच्छि मेच्छिअके पुत्ते॥'

१. गुरुः. २. 'धअ' रवि०, 'धर्जः' इति तच्छाया.

[पदभरमर्दिता धरणिस्तरणिः स्थितो धूल्याच्छादितः,
कमठपृष्ठमधः पतितं मेरुमन्दरशिरः कम्पितम् ।
कोपेन चलितो हम्मीरवीरो गजयूथसंयुक्तः,
कृतः कष्ट हाक्रन्दो मूर्च्छितं म्लेच्छानां पुत्रैः ॥]

कश्चित्कविर्वीरहम्मीरप्रयाणमनुवर्णयति—पदभरेण मर्दिता धरणिस्तरणिः सूर्यः स्थितस्तदा धूल्या समाच्छादितः । 'तरणिरथः' इति वा । कमठपृष्ठमधः पतितम् । अतिभारादादिकूर्मोऽप्यधस्ताद्गत इति भावः । मेरुमन्दरयोरपि शिरः कम्पितम् । यदा कोपेन चलितो हम्मीरवीरो गजयूथसुयुक्तस्तदा कृतो हाकष्टाक्रन्दः, मूर्च्छितं च म्लेच्छानामपि पुत्रैरिति ॥

यथास्यैकैकगुरुह्रासेन लघुद्वयवृद्ध्या त्रयोदशभेदास्तानुद्दिशति—

कुंद करअल मेह तालंक,
कलरुद्द कोकिल कमल,
इंदु संभु चामर गणेसरु,
सहसक्खह सेस भण,
णाअराअ जंपइ फणेसरु,
तेरह अक्खर जं पलइ,
एग्गारह गुरु देहु,
अक्खर अक्खर जं ठवइ,
तं तं णाम भणेहु ॥ ७८ ॥

[कुन्दः करतलो मेघस्तालङ्कः,
कालरुद्रो कोकिलः कमलम्,
इन्दुः शंभुश्चामरो गणेश्वरः,
सहस्राक्षः शेषो भणति,
नागराजो जल्पति फणीश्वरः,
त्रयोदशाक्षराणि यदि पतन्ति,
एकादश गुरून्दत्त्व,
अक्षरमक्षरं यदि वर्धते,
तत्तन्नाम भणत ॥]

---

१. 'सहस्राक्ष:' गं:०.

यथा—१३ गु. ७० ल. ९६ मा. कुन्दः। १२ गु. ७२ ल. ९६ मा. करतलः। ११ गु. ७४ ल. ९६ मा. मेघः। १० गु. ७६ ल. ९६ मा. तालाङ्कः। ९ गु. ७८ ल. ९६ मा. कालरुद्रः। ८ गु. ८० ल. ९६ मा. कोकिलः। ७ गु. ८२ ल. ९६ मा. कमलम्। ६ गु. ८४ ल. ९६ मा. इन्दुः। ५ गु. ८६ ल. ९६ मा. शंभुः। ४ गु. ८८ ल. ९६ मा. चामरः। ३ गु. ९० ल. ९६ मा. गणेश्वरः। २ गु. ९२ ल. ९६ मा. सहस्राक्षः। १ गु. ९४ ल. ९६ मा. शेषः। इति त्रयोदश भेदान्भणति नागराजः। फणीश्वरो जल्पति। त्रयोदशगुरुसंख्या मानय। एकादश गुरून्दत्त्व। द्वौ द्वौ लघू प्रतिचरणाभिप्रायेणापीति भावः। अथवा त्रयोदशाक्षरेषु गुरुषु अक्षरमक्षरमेकैको गुरुर्यदि पतति लघुद्वयं च वर्धते तदा तत्तन्नाम जानीत। एतेषामुदाहरणमज्ञर्यामुदाहरणानि द्रष्टव्यानि। रड्डाछन्दः॥

अथ गन्धाछन्दः—

दहसत्तवण्ण पढम पअ भणह सुअणा,
तह-वीअम्मि अठारहि जमअजुअचरणा।
एरिसि अ वीअदल कुणह भणइ पिङ्गलो,
गन्धाणा णाम रूअ-उहो पिण्डिअजणचित्तहलो॥ ७९॥

[दशसप्तवर्णान्प्रथमे पदे भणत सुजनाः,
तथा द्वितीयेऽष्टादश यमकयुगचरणा।
एतादृशं च द्वितीयदलं कुरुत भणति पिङ्गलः,
गन्धाना नाम रूपकं भवति पण्डितजनचित्तहरम्॥]

भोः सुजनाः, सप्तदशवर्णान्प्रथमचरणे भणत। तथा द्वितीयचरणेऽष्टादशभिर्वर्णैरुपलक्षिता यमकयुगचरणा। यमकद्वययुक्तचरणेत्यर्थः। एतादृशमेव द्वितीयदलं कुरुतेति भणति पिङ्गलः। गन्धाना नाम रूपकं पण्डितजनचित्तहरं भवति। अत्र यमकत्वाद्दलयोरैक्यमिति। वाणीभूषणेऽप्युक्तम्—'दशसप्तवर्णमिह रचय प्रथमचरणं द्वितीयमष्टादल(श)कलितमिति हृदयहरणम्। ईदृशमुत्तरदलमपि हृदयसंधानकं नागपतिपिङ्गलभणितमिति शृणु गन्धानकम्॥' इदमप्युदाहरणम्॥

पुनरपि शिष्यबोधनाय गन्धानकमेव स्पष्टीकृत्याह—

दहसत्तक्खर संठवहु पढमचरण गन्धाण।
बीए क्खर पुणु जमअ दइ अट्ठारहइ विआण॥ ८०॥

[सप्तदशाक्षराणि संस्थापयत प्रथमचरणे गन्धाने।
द्वितीयेऽक्षराणि पुनर्यमकं दत्त्वाष्टादशैव विजानीत॥]

गन्धानाख्ये छन्दसि सप्तदशाक्षराणि स्थापयत प्रथमचरणे । द्वितीये चरणे पुनर्यमकं दत्वाष्टादशाक्षराण्येव विजानीत । दोहाछन्दः ॥

गन्धाणामुदाहरति—

'कण्ण चलंते कुम्म चलइ पुणु वि असरणा,
कुम्म चलंते महि चलइ भुअणभअंकरणा ।
महिअ चलंते महिहर तह अ सुरअणा,
चक्कवइ चलंते चलइ चक्क तह तिहुअणा ॥'

[कर्णे चलति कूर्मश्चलति पुनरशरणः,
कूर्मे चलति मही चलति भुवनभयकरणा ।
मह्यां चलन्त्यां महीधरास्तथा च सुरजनाः,
चक्रवर्तिनि चलति चलति तथा त्रिभुवनचक्रम् ॥]

कश्चित्कविः कर्णनरपतिं स्तौति—कर्णे राजनि सङ्ग्रामार्थे चलति सति कूर्मः पुनरशरणः सश्चलति स्थानभ्रष्टो भवति । तस्मिंश्चलति भुवनभयंकरा मही चलति । मह्यां चलन्त्यां महीधरा मेर्वादयश्चलन्ति । तथा च सति तदाश्रिताः सुरजना देवसंघाश्चलन्ति । एवं कर्णे चलति दिक्चक्रं चलति । तथा त्रिभुवनं चलति । इतस्ततो भ्रमतीत्यर्थः । उट्टवणिका यथा—ऽ।।, ऽऽ, ऽ।।, ।।।।, ।।।।, ऽ, ऽ।।, ऽऽ, ।।।।, ।।।।, ।।।।, ऽ, ।।।।, ऽऽ, ।।।।, ।।।।, ।।ऽ, ऽ।।, ।।ऽ, ऽ।।, ।ऽ।, ।।।।, ।ऽ, गन्धाणा निवृत्ता ॥

अह चउपइआ छंदा—अथ चतुष्पदीछन्दः—

चउपइआछंदा भणइ फणिंदा चउमत्ता गण सत्ता,
पाएहिँ सगुरु करि तीस मत्त धरि चउसअ असिअ णिरुत्ता ।
चउ छंद लविज्जइ एक्क ण किज्जइ को जाणइ एँहु भेऊ,
कइपिंगल भासइ छंद पआसइ मिअणअणि अमिअ एहु ॥८१॥

[चतुष्पदीछन्दो भणति फणीन्द्रश्चतुर्मात्रकान्सप्त गणान्,
पादान्ते सगुरून्कृत्वा त्रिंशन्मात्रा धृत्वा चतुःशतमशीतिश्च निरुक्ता ।
चतुर्षु छन्दःसु लिख्यत एकं न क्रियते को जानात्येनं भेदं,
कविः पिङ्गलो भाषते छन्दः प्रकाशते हे मृगनयनेऽमृतमेतत् ॥]

चतुष्पदीछन्दो भणति फणीन्द्रः । चतुर्मात्रकान्सप्त गणान्पादे सगुरून्कृत्वा त्रिंशन्मात्रा धृत्वा चतुःशतमशीतिश्च निरुक्ता । चतुर्षु छन्दःसु योजनीयमेकं न कर्तव्यम् । को जा-

---

१. 'सुरगणाः' रवि०.

नात्येन भेदम्। कविः पिङ्गलो भाषते। मृगनयनेऽमृतमेतत्। अथमर्थः—चतुष्पदीछन्द एतत्पदचतुष्टययुक्तमेकं चरणम्, एतादृशपदचतुष्टयं तादृशं छन्द इत्यभिप्रायः। तत्र चतुर्मात्रिका सप्तगणा भवन्ति, पादान्ते च सर्वत्र गुरुः कर्तव्यः। एवं च त्रिशन्मात्राः पादे भवन्तीति फलितोऽर्थः। एवं च सति विंशत्यधिकं मात्राशतकं चरणचतुष्टयेऽपि भवति। तत्सर्वमेवैकमेव चरणं तदभिप्रायेणात्र मात्राणां चतुःशती साशीतिर्निरुक्ता, तदेकलं न कर्तव्यं चतुश्छन्दोयुक्तमेव कर्तव्यमिति। वाणीभूषणे तु विंशत्युत्तरं शतमात्रात्मकमेवोक्तम्—'चौपइयावृत्तं त्रिशन्मात्रं फणिपतिपिङ्गलगीतं, कुरु सततुरगममतिहृदयगमं मन्ते गुरुमुपनीतम्। यदि दशवसुरविभिश्छन्दोविद्भिः क्रियते यतिरभिरामं, सपदि श्रवसमये नृपतिः कवये वितरति ससदि कामम्॥' इदमप्युदाहरणम्। ग्रन्थगौरवभयाच्चतुष्पदिकाया पादमेकमुदाहरति—जहा (यथा)—

'जसु सीसहिँ गङ्गा गोरि अधंगा गिम पहिरिअ फणिहारा,
कंठट्ठिअवीसा पिंधण दीसा संतारिअसंसारा।
किरणावलिकंदा णंदिअ चंदाणअणहिँ अणल फुरंता,
सो संपअ दिज्जउ बहुसुह किज्जउ तुह्म भवाणीकंता॥'

[यस्य शीर्षे गङ्गा गौर्यर्धाङ्गे ग्रीवायां परिधृतः फणिहारः,
कण्ठस्थितविषः पिधानं दिशः संतारितससारः।
किरणावलिकन्दो नन्दितचन्द्रो नयनेऽनलः स्फुरन्,
स सपदं ददातु बहुसुखं करोतु युष्मभ्यं भवानीकान्तः॥]

स इति प्रसिद्धो भवानीकान्तो युष्मभ्यं सपदं ददातु। बहुसुखं च करोतु। स कः। यस्य शीर्षे गङ्गा स्फुरति। यस्यार्धाङ्गे गौरी वसति। येन ग्रीवायां परिधृतः फणिहारः। यश्च कण्ठस्थितविषः। यस्य पिधानं वासो दिक्। दिगम्बर इत्यर्थः। संतारितस्तारकोपदेशात्संसारो येन तथाभूतः। यश्च किरणावलीनां दीप्तिमद्वस्तूनां कन्द उत्पत्तिस्थानम्। 'यद्भासा सर्वमिदं भासते' इति श्रुतेः। नन्दित आनन्दितो हर्षयुक्तश्चन्द्रो यस्मिन्। यस्य नयने भालस्थतार्तीयलोचने अनलो ज्वलन् स्फुरन्। अस्ति इति शेषः। उद्दवणिका यथा— IIS, IIS, SS, IIS, SII, IIII, IIS, S, SS, IIS, SS, IIS, SS, SII, SS, S, IIS, IIS, SS, IIS, SII, IIII, IIS, S, SS, IIS, IIII, IIS, IIS, IIS, SS, S, चौपइया निवृत्ता।

'पिंगलकइदिट्ठउ छन्द उकिट्ठउ घत्त मत्त वासट्ठि करु।
चउमत्तसत्तगण बेवि पाअ भण तिण्णि तिण्णि लहुअंत धरि॥८०॥

[पिङ्गलकविदृष्टं छन्द उत्कृष्टं घत्ता मात्रा द्विषष्टिं कुरु।
चतुर्मात्रिकान्सप्तगणान्द्वयोरपि पादयोर्भण त्रींस्त्रीँल्लघूनन्ते धृत्वा॥]

१. मत्पुस्तके 'पिंगल-' इत्यस्य स्थाने 'अह घत्ता' इति दृश्यते.

पिङ्गलकविना द्वाषष्ठिमात्रास्या कृत्वा अत्युत्कृष्ट घत्तानामक छन्दो दृष्टम् । अत्र चतुर्मात्रिकान्सप्तगणान्द्वयोरपि पादयोस्त्रींस्त्रीँल्लघूनन्ते धृत्वा भण । अयमर्थ —घत्ता द्विपदी तत्र चतुष्कला सप्तगणास्त्रिलघ्वन्ता । द्वयोरपि चरणयो समुदिता मात्राश्चतु षष्टि कर्तव्या इति । भूषणेऽपि 'इह चतुष्कलगणनिर्मितपद निलघुविराम भवति यदि । नागाधिपपिङ्गलभणितसुमङ्गलघत्तावृत्तमिद द्विपदि ॥' इदमप्युदाहरणम् ॥

एतस्यैव सविश्राम लक्षणान्तरमाह—

पढम दस वीसामो बीए मत्ताइँ अट्ठाइँ ।

तीए तेरह विरई घत्तामत्ताइँ बासट्ठी ॥ ८३ ॥

[प्रथम दशसु विश्रामो द्वितीये मात्रास्वष्टसु ।

तृतीये त्रयोदशसु विरतिर्घत्तामात्रा द्वाषष्टि ॥]

प्रथमे चरणे प्रथम दशसु मात्रासु विश्राम । द्वितीयस्थले अष्टसु । तृतीयस्थले त्रयोदशसु मात्रासु विरति । इत्येकत्रिंशत्कलात्मक प्रथमश्चरण । एव द्वितीयोऽपि । सभूय द्वाषष्टि कला इत्यर्थ । गाहूछन्द ॥

घत्तामुदाहरति—जहा (यथा)—

'रणदक्ख दक्खहणु जिणकुसुमधणु अधअगधवि णासकरु ।

सो रक्खउ संकरु असुरभअकरु गोरिणारिअद्धग धरु ॥'

[रणदक्षो दक्षहन्ता जितकुसुमधन्वान्धकगन्धस्यापि नाशकर ।

स रक्षतु शङ्करोऽसुरभयकरो गौरीनारीमर्धाङ्गे धारयति ॥]

रणदक्ष सङ्ग्रामकुशल , दक्षस्य हन्ता, जितकुसुमधन्वा जितकन्दर्प । अन्धकस्यासुरस्य गन्धस्यापि विनाशकर । गौरीनारीमर्धाङ्गे धारयति य । तादृशोऽसुरभयकर स शंभुर्युष्मात्रक्षतु । उट्टवणिका यथा—IIS, ISI, IIS, IIII, IIS, IIS, IIS, III, SS, IIS, IIII, IIS, IIS, ISI, SS, III, घत्ता निवृत्ता ॥

अथ त्रिभेदेन घत्तानन्दमाह—

सो घत्तहकुलसारु कित्तिअपारु णाअराअ पिंगल कहइ ।

एआरह वीसाम णदउ णाम पुणुवि सत्त तेरह विरइ ॥ ८४ ॥

[स घत्ताकुलसार कीर्त्यापारो नागराज पिङ्गल कथयति ।

एकादशसु विश्रामो नन्दो नाम पुनरपि सप्तसु त्रयोदशसु विरति ॥]

ततश्छन्दो घत्तानाम । षुच्छन्दसु कुलेन सार नातिश्रेष्ठम् । मात्रात्मकमित्यर्थ । 'जातिर्मात्राकृता मेरु' इत्युक्तत्वात् । तत्किम् । यत्र प्रथममेकादशसु मात्रासु विश्राम । पुनरपि सप्तसु । ततस्त्रयोदशसु मात्रासु विश्रामो भवति । तत्कीर्त्या अपार , अपार

कीर्तिर्वा, नागराजः पिङ्गलो घत्तानन्दनाम कथयतीति योजना । वाणीभूषणेऽपि—'एकादशविश्रामि तुरगविरामि यदि घत्तावृत्त भवति । छन्दो घत्तानन्दमिदमानन्दकारि नागपतिरिति वदति ॥' इदमप्युदाहरणम् ॥

अत्रैव गणनियममाह—

छक्कल आइहिँ संठवहु तिण्णि चउक्कल देह ।
पंचक्कल चक्कलजुअल घत्ताणंद मुणेह ॥ ८५ ॥

[षट्कलमादौ स्थापयतु त्रींश्चतुष्कलान्दत्थ ।
पञ्चकलं चतुष्कलयुगलं घत्तानन्दं जानीत ॥]

आदौ षट्कल गण स्थापयतु । ततस्त्रींश्चतुष्कलान्दत्थ । तदनन्तर पञ्चकल चतुष्कलयुगल च गण दत्वा घत्तानन्द छन्दो जानीत । दोहाछन्दः ॥

घत्तानन्दमुदाहरति—जहा(यथा)—

'जो वंदिअ सिर गंग हणिअ अणंग अद्धंगहि परिकर धरणु ।
सो जाई जणचित्तहरउ दुरित्तसंकाहर संकरचरण ॥'

[यो वन्दितः शीर्षे गङ्गया हतोऽनङ्गोऽर्धाङ्गे परिकरं धृतवान् ।
स जयति जनचित्तहरो दुरितशङ्काहरः शंकरचरणः ॥]

यो वन्दितः शीर्षे गङ्गया । येन हतोऽनङ्गः । यश्चार्धाङ्गे परिकरं कलत्र धृतवान् । अतएव युवतिजनचित्तहरः । स शिवो जयतीति भावः । कीदृशः । दुरितशङ्काहरः । स्मरणमात्र इति भावः । पुनश्च यः शीर्षस्थितयापि गङ्गया वन्दित इत्युत्कर्षः सूचितः । पुनर्येन अनङ्गः कदर्पो हतः । यस्त्वधिक्षिप्य हन्यते स पूर्वं लक्ष्यया ताड्यत इति भाव । पुनः पश्चादर्धाङ्गे परिकरधरः पार्वतीं धृतवान् । उद्वणिका यथा—ऽऽ॥, ॥ऽ, ॥॥, ।ऽ।, ऽऽ।, ॥॥, ॥॥, ऽऽऽ, ।।ऽ, ॥॥, ।ऽ।, ऽऽ।, ।ऽ।, ॥॥, घत्ता णिव्वुत्ता ।

अह छप्पअ—(अथ षट्पदच्छन्द)

छप्पअ छंद छइल्ल सुणहु अक्खरसंजुत्तउ,
एआरह तसु विरइ तु पुणु तेरह णिब्भत्तउ,
वे मत्ता धरि पढम तु पुणु चउचउकल किज्जइ ।
मज्जट्ठिअ गण पंच हेट्ठविण्ण बिलहु दिज्जइ,
उल्लाल विरइ वे पन्धरह मत्ता अट्ठाइस सोइ,
एवमुणह गुण्णह छप्पअपअ अण्णहा इथि किंवि ण होइ॥८६॥

[षट्पदं छन्दो विदग्धाः शृणुताक्षरसंयुक्तं,
एकादशसु तस्य विरतिः पुनस्त्रयोदशसु निर्भ्रमं,
द्वे मात्रे धृत्वा प्रथमं पुनश्चतुश्चतुष्कलाः क्रियन्ते ।

मध्यस्थितो गणः पञ्च अधोवर्णा लघुद्वयं दीयते,
उल्लालयोर्विरतिर्द्वयोः पञ्चदशसु मात्रास्वष्टाविंशतिस्तत,
एवं जानीत गणयत षट्पदपदमन्यथात्र किमपि न भवति ॥]

इतश्च षट्पदप्रकरणमारभ्यते—षट्पद छन्दो विदग्धा' शृणुत । अक्षरसंयुक्तम् । एकादशकलासु तस्य विरतिः । तदनन्तरं त्रयोदशकलासु विश्रामो निर्भ्रमम् । द्वे मात्रे धृत्वा प्रथम तत' पुनश्चतुश्चतुष्कलाः नियन्ते । मध्यस्थित एको गणः । एव चतुष्कलाः पञ्च । द्वे चरणान्ते सर्वत्र लघुद्वय दीयते । पश्चादुल्लालचरणयोर्द्वाभ्या पञ्चदशाभ्या विरतिः । अष्टाविंशतिमात्रिकौ च चरणौ भवतस्तौ । अत्र सर्वत्रानुक्तस्थले उर्वरितकलासु विश्रामसंख्या ज्ञेयेति । एव जानीत । गुणयन्तु षट्पदपदे मदुक्तलक्षणादन्यथात्र न किमपि भवति । अयमर्थ —पूर्वं मात्राद्वयम् । ततश्चतुष्कलाः पञ्च । अधस्तु मात्राद्वयम् । एव पदचतुष्टय विधेयम् । अनन्तरमुल्लालछन्दसि पञ्चदशसु मात्रासु त्रयोदशसु विश्रामः तादृश पदद्वयमष्टाविंशतिकलात्मकम् । एव काव्य पदचतुष्टयेन उल्लालपदद्वयेन द्वाभ्या छन्दाभ्या षट्पद भवति । इदमप्युदाहरणम् ॥

षट्पदमुदाहरति—जहा (यथा)—

'पिंधउ दिढसंणाह वाह उप्परि पक्खर दइ,
बंधु समदि रण धसउ साहिहम्मीरवअण लइ,
उड्डुउ णहपह भमउ खग्ग रिपुसीसहि झल्लउ,
पक्खर पक्खर ठल्लिपेल्लि पव्वअ अप्फालउ,
हम्मीरकज्ज जज्जल भण कोहाणलमह मइ जलउ,
सुलितानसीस करवाल दइ तज्जि कलेवर दिअ चलउ ॥'

[परिधाय दृढसनाह वाहोपरि सनाहं दत्वा,
बन्धून्संभावयित्वा रणेऽवतीर्णः साहिहम्मीरवचनं गृहीत्वा,
उड्डुपे नभःपथे भ्रमामि खड्गेन रिपुशीर्षाणि क्षयामि,
सनाहेन सनाहमपहस्तयित्वा पर्वतानास्फाल्यामि,
हम्मीरकार्ये जज्जलो भणति कोपानलमध्येऽह ज्वलामि,
सुल्तानशीर्षे करवाल दत्वा त्यक्त्वा कलेवरं दिवं चलामि ॥]

यश्चित्कश्चिद्धीरहम्मीरसुभटस्य अवलम्बयस्य सोत्साहं प्रतिज्ञामुपवर्णयति—यथा मया परिहितो दृढः सनाह' । तुरगोपरि सनाहं दत्वा, बन्धून्समाश्वस्य, रणेऽहं रणेऽवतीर्ण',

१. 'पक्खर तुरगवर्म' इति देशीनाममाला

साहिहम्मीरवचनं गृहीत्वा, उड्डुपेऽन्तरिक्षे नभःपथे भ्रमामि। खड्गेनानेन रिपुशीर्षाणि प्रति क्षपामि। संनाहेनैव सनाहमपहस्तयित्वा पर्वतानप्यास्फालयामि। हम्मीरकृते जज्जलो राजपुत्र एवं वदति। कोपानलमध्येऽहं ज्वलामि। सुलतानः सुत्राणोऽल्लावदीनः (जल्लालदीन्द्रः) तच्छीर्षे करवालं दत्वा त्यक्त्वा च कलेवरं दिवं चलामीति प्रतिज्ञां करोमीति जज्जलस्य वचनम्। उट्टवणिका यथा—ऽ।।।।, ऽऽ, ।ऽ।, ऽ।।, ऽ।।, ।।, ऽ।।।।, ।।।।, ।ऽ।, ऽऽ, ।।।।, ।।, ऽ।।।।, ।।।।, ।ऽ।, ।।ऽ, ।।ऽ, ।।, ऽ।।ऽ, ।।ऽ, ।ऽ।, ऽ।।, ऽऽ, ।।, ऽऽ, ।ऽ।, ऽऽ, ।।।, ऽऽ, ।।।।, ।।।।, ।, ।।ऽ, ।ऽ।, ।।ऽ, ।।।, ऽ।।, ऽ।।, ।।।।, ।.

एतस्यैव प्रकारान्तरेण लक्षणमाह—

पअपअतलउ णिबद्ध मत्त चउवीसइ किज्जइ,
अक्खर डंबर सरिस छंद इह सुद्ध भणिज्जइ,
आइहिं छक्कल होइ चारि चउकलउ णिवुत्तउ,
दुकल अंत ठवेहु सेसकइ वत्थु णिवुत्तउ,
बावण्ण सउ वि मत्तह मुणहु उल्लालउ सरिसउ गुणहु,
छप्पअ छंद परिसिअ होइ गंथ गंथिअ मरहु ॥ ८७ ॥

[पदपदतले निबद्धा मात्राश्चतुर्विंशतिः क्रियन्ते,
अक्षराणि डेम्बराणि सदृशानि छन्द इति शुद्धं भण्यते,
आदौ षट्कलो भवति चत्वारश्चतुष्कला निरुक्ताः,
द्विकलमन्ते स्थापयन्तु शेषकविना वस्तु निरुक्तं,
द्विपञ्चाशच्छतं मात्रा जानीत उल्लालेन सहैव गणयत,
षट्पदं छन्द एतादृशं भवति ग्रन्थं ग्रन्थित्वा म्रियध्वम् ॥]

पदे पदे प्रतिचरणमधस्तान्निबद्धमात्राश्चतुर्विंशतिः क्रियन्ते। अक्षराडम्बरः सदृश एव भवति। इत्यमुना प्रकारेण कृत छन्दः शुद्ध भण्यते। तत्र गणनियममाह—आदौ षट्कलो गणो भवति। ततश्चत्वारश्चतुष्कला निरुक्ताः। द्विकल चान्ते स्थापयन्तु। शेषकविना तद्वस्त्विति नामान्तर निरुक्तम्। मात्रासंख्यामाह—सभूय द्विपञ्चाशदधिकं मात्राशतकं १५२ जानीत। उल्लालेन सहैव गणयन्तु। एतेन काव्यस्य षण्णवत्या ९६ उल्लालस्य षट्पञ्चाशता ५६ संभूय द्विपञ्चाशदधिकं शतमित्यर्थः। भोः शिष्याः, किमिति ग्रन्थग्रन्थनं कृत्वा म्रियध्वमिति। भूषणेऽपि—'षट्कलमादौ तदनु चतुस्तुरगं परिसतनु, शेषे द्विकल कलय चतुष्पदमेत्र सचिनु, छन्दः षट्पदनाम भवति फणिनायकगीतम्, रुद्रे

१. 'गमिज्जइ' रवि०. २. 'आरभटीयुक्तानि' रवि०.

विरतिमुपैति तु पतिसुखकरमुपनीतम्, उल्लालयुगलमत्र च भवेदष्टाविंशतिकलमिदम्, शृणु पञ्चदशे विरतिस्थित पठनादपि गुणिगणहितम् ।' इदमप्युदाहरणम् ॥

वस्तुनामक षट्पदमुदाहरति—जहा (यथा)—

'जहा सरअ ससिबिंब जहा हरहारहंसठिअ,
जहा फुल्ल सिअकमल जहा सिरिखंड खंडकिअ,
जहा गंगकल्लोल जहा रोसाणिअ रुप्पइ,
जहा दुद्धवर मुद्धफेण फंफाइ तलप्फइ,
पिअपाअ पसाएदिट्ठि पुणु विहसि हसइ जह तरुणिजण,
वरमत्ति चंडेसर कित्ति तुअ तुत्थ देक्खु हरिबंभ भण ॥'
[यथा शारदशशिबिम्बं यथा हरहारहंसस्थितिः,
यथा फुल्लं सितकमलं यथा श्रीखण्डः खण्डीकृतः,
यथा गङ्गाकल्लोलो यथोज्ज्वलीकृतं रूप्यम्,
यथा दुग्धवरे मुग्धफेनः फफाइ स्फुरति,
प्रियात्प्राप्य प्रसाददृष्टिं पुनर्विहस्य हसति यथा तरुणीजनः,
वरमन्त्रिश्चण्डेश्वर कीर्तिस्तव तथ्यं पश्य हरिब्रह्मा भणति ॥]

यथा शारदः शशिबिम्बः, यथा हरहारहंसस्थितिः, यथा फुल्लं सितकमलम्, यथा खण्डीकृतः श्रीखण्ड , यथा [गङ्गा]कल्लोलः, यथोज्ज्वलीकृत रौप्यम्, यथा दुग्धवरे मुग्धफेनः। 'फफाइ' इत्यनुकरणम् । ऊर्ध्वं गत्वा स्फुरति । प्रियात्प्राप्य प्रसाददृष्टिं पुनः स्मित्वा हसति यथा तरुणीजनः । तथा हे चण्डेश्वर, राज्ञो वरमन्त्रिन्, तव कीर्तिः स्फुरति । इति तथ्य पश्य । हरिब्रह्मनामको कविर्भणति । क्वचित् 'पुणु विहसि' इति स्थले 'पलु णिहुइ' इति पाठः, तत्र दृष्टिं पातयित्वा अर्थात्प्रिये निभृत यथा स्यात्तथा हसतीति । उट्टवणिका यथा—ISIII, IIS, IIS, IIS, ISI, II, ISSI, IIII, IIS, IIS, ISI, II, ISSI, SS, IIS, SS, IIS, II, ISSI, IIS, ISI, SS, IIS, II, IIS, IIS, SS, IIII, IIII, IIII, IIII, IIS, IIS, IIS, IIS, ISI, IIS, III, षट्पदच्छन्दः खलु छन्दोद्वयेन भवति । काव्यपदचतुष्टयेनोल्लालपदद्वयेनेति ॥

काव्यमालालक्षणमाह—

आइ अंत दुहु छक्कलउ तिण्णि तुरंगम मज्झ ।
तीए जगण कि विप्पगण कव्वह लक्खण बुज्झ ॥ ८८ ॥

[आदावन्ते द्वये षट्कलस्त्रयस्तुरंगमा मध्ये ।
तृतीये जगणो वा विप्रगणः काव्यलक्षणं बुध्यस्व ॥]

आदावन्ते च यत्र षट्कलगणो गणस्थानद्वये । मध्ये यत्र तुरंगमाश्चतुष्कलास्त्रयो गणाः, तत्र तृतीयो जगणो भवति । किंवा विप्रगणश्चतुर्लघ्वात्मको गणः । तत्काव्य छन्दः । एतल्लक्षणं बुध्यस्व । यदा काव्याभिधेयमेव छन्दः क्रियते तदैव जगणस्तृतीयो भवति । लघूल्लालेन सम क्रियते तदा न नियमः । तत्र एकादशसु विश्राम इत्याशयः । दोहाछन्दः ॥

अथानन्तर लघुद्वयह्रासेनैकैकगुरुवृद्ध्या काव्यस्य पञ्चचत्वारिंशद्भेदान्दर्शयिष्यन्सर्वलघुक शक्रनामक वृत्तमाह—

चउ अग्गल चालीस गुरु एक्कक्के गुरु देहु ।
जो गुरु हीणउ सक्क सोइ णामग्गहण कुणेहु ॥ ८९ ॥

[चतुरधिकाश्चत्वारिंशद्गुरव एकैकान्गुरून्दत्थ ।
यद्गुरुहीनं शक्रं तन्नामग्रहणं कुरुत ॥]

चतुरधिकाश्चत्वारिंशद्गुरव एकैकगुरुवृद्धिक्रमेण दातव्याः । यद्गुरुहीनं सर्वलघुकं तच्छक्रनामकं छन्दः । ततो लघुद्वयह्रासेन एकैकगुरुवृद्ध्या नामग्रहण कुरुत । दोहाछन्दः ॥

शक्रमुदाहरति—जहा (यथा)—

'जसु कर फणिवइवलअ तरुणिवर तणुमँहँ विलसइ,
णअण अणल गल गरल विमल ससि जसु सिर णिवसइ ।
सुरसरि सिरमँहँ रेहइ सअलजणदुरितदलणकर,
हँसि ससिहर हर दुँरिअ वितर हर अतुलअभअवर ॥

[यस्य करे फणिपतिवलयस्तरुणिवरा तनुमध्ये विलसति
नयनेऽनलो गले गरलं विमलः शशी यस्य शिरसि निवसति ।
सुरसरिच्छिरोमध्ये वसति सकलजनदुरितदलनकर
हसित्वा शशिधर हर दुरितं वितर हरातुलमभयवरम् ॥]

कश्चिद्भक्तः शिवं प्रार्थयते—यस्य तव करे फणिपतेः शेषस्य वलयः कंकणं विलसति । तनुमध्ये वरतरुणी पार्वती विलसति । नयने अलिकस्थतार्तीयलोचनेऽनलो ज्वलति । गले च गरलं विलसति । विमलः शशी निष्कलङ्कश्चन्द्रो यस्य तव शीर्षे निवसति । सुरसरिन्मन्दाकिनी शिरसि वसति । एवंविध, हे सकलजनदुरितदलनकर, शशिधर,

१. 'ससहर' रवि०. २. 'वहइ' रवि०. ३. 'दिसउ' रवि०.

हे हर, मम दुरितं हर । अथ च अतुलमभयवरं हसिला वितर । येनाहं कृतकृत्यो भवेयमिति भावः । अत्र प्रतिचरण चतुर्विंशतिः कलाः सभूय पण्णवत्यो मात्राः ९६ ज्ञातव्याः । विरतिरेकादशे त्रयोदशे च । सर्वलघुकं शक्रनामकं छन्दः ॥

पुनः सौकर्यार्थं सात्रधिक भेदमाह—

जह जह वलआ वड्ढिहइ तह तह णाम कुणेहु ।
संभु हिसउँ भण भिंगगण चउआलीस मणेहु ॥ ९० ॥

[यथा यथा वलया वर्धन्ते तथा तथा नामानि कुरु ।
शंभुमारभ्य भण भृङ्गगणं चतुश्चत्वारिंशतं जानीहि ॥]

यथा यथा वलयो गुरुर्वर्धते तथा तथा नामानि भेदान्कुरु । शंभुमारभ्य गणभृङ्गमवधीकृत्य गणय । चतुश्चत्वारिंशन्नामानि जानीहि । दोहा छन्दः ॥

नामान्येवाह—जहा (यथा)—

ता सक्को संभो सूरो गंडो खंधो विजओ दप्पो,
तालंको समरो सीहो सेसो[1] उत्तेओ पडिवक्खो[2] ।
परिधम्म मरालु मइंदो दंडो मक्कलु मअणु मरहट्ठो,
वासंतो कंठो मोरो बंधो भमरो भिण्ण मरहट्ठो ॥ ९१ ॥
वलहद्दो राओ वलिओ रामो मंथाणो बलि मोहो,
सहसक्खो वालो दरिओ सरहो दंभोऽहो उद्दंभो ।
वलिअंको तुरओ हरिणो अंधो मुद्धीए तह भिंगो,[4]
वत्थूआणामो[3] पिंगलणाओ जंपइ छंदपबंधो ॥ ९२ ॥

[तानि शक्रः शंभुः सूरो गण्डः स्कन्धो विजयो दर्पः
तालाङ्कः समरः सिंहः शेष उत्तेजाः प्रतिपक्षः ।
परिधर्मो मरालो मृगेन्द्रो दण्डो मर्कटो मदनो महाराष्ट्रः
वसन्तः कण्ठो मयूरो बन्धो भ्रमरो भिन्नो महाराष्ट्रः ॥
बलभद्रो राजा वलितो रामो मन्थानो बली मोहः
सहस्राक्षो बालो दृप्तः शरभो दम्भोऽह उद्दम्भः ।

१. 'सीसो' रवि०. २. 'फणिरक्खो' रवि०. ३. 'आणूवट्ठो' इति रविकरः, 'अनुबन्धः' इति तच्छाया. ४. 'हारो हरिणो अंधो मुद्धी भिंगो' रवि०.

वलिताङ्कस्तुरंगो हरिणोऽन्धो मुग्धे तथा भृङ्गः
वास्तूकनाम पिङ्गलनागो जल्पति च्छन्दःप्रबन्धः ॥]

यानि गुरुवृद्ध्या नामानि तानि । कथ्यन्ते इति शेषः । यथा—०गु. ९६ ल. शक्रः । १ गु. ९४ ल. शंभुः । २ गु. ९२ ल. सूर्यः । ३ गु. ९० ल. गण्डः । ४ गु. ८८ ल. स्कन्धः । ५ गु. ८६ ल. विजयः । ६ गु. ८४ ल. दर्पः । ७ गु. ८२ ल. तालाङ्कः[1] । ८ गु. ८० ल. समरः । ९ गु. ७८ ल. सिंहः । १० गु. ७६ ल. शेषः[2] । ११ गु. ७४ ल. उत्तेजाः । १२ गु. ७२ ल. प्रतिपक्षः[3] । १३ गु. ७० ल. परिधर्मः । १४ गु. ६८ ल. मरालः । १५ गु. ६६ ल. मृगेन्द्रः । १६ गु. ६४ ल. दण्डः । १८ गु. ६२ ल. मर्कटः । १८ गु. ६० ल. मदनः[4] । १९ गु. ५८ ल. महाराष्ट्रः[5] । २० गु. ५६ ल. वसन्तः । २१ गु. ५४ ल. कण्ठः । २२ गु. ५२ ल. मयूरः । २३ गु. ५० ल. बन्धः । २४ गु. ४८ ल. भ्रमरः[6] । २५ गु. ४६ ल. द्वितीयो महाराष्ट्रः । २६ गु. ४४ ल. बलभद्रः । २७ गु. ४२ ल. राजा । २८ गु. ४० ल. वलितः । २९ गु. ३८ ल. रामः । ३० गु. ३६ ल. मन्थानः । ३१ गु. ३४ ल. बली[7] । ३२ गु. ३२ ल. मोहः[8] । ३३ गु. ३० ल. सहस्राक्षः । ३४ गु. २८ ल. बालः । ३५ गु. २६ ल. दृप्तः । ३६ गु. २४ ल. शरभः । ३७ गु. २२ ल. दम्भः । ३८ गु. २० ल. अहः[9] । ३९ गु. १८ ल. उद्दम्भः । ४० गु. १६ ल. वलिताङ्कः । ४१ गु. १४ ल. तुरगः[10] । ४२ गु. १२ ल. हरिणः । ४३ गु. १० ल. अन्धः । ४४ गु. ८ ल. भृङ्गः । एतेषु चतुश्चत्वारिंशद्भेदाः शक्रेण सह पञ्चचत्वारिंशद्वास्तूकापरनाम्नः काव्यस्य । हे मुग्धे, छन्दःप्रबन्धः छन्दसां प्रकर्षेण बन्धो यस्मात् एवविधः पिङ्गलनागो जल्पति । इदं प्राकृतसूत्रम् ॥

पुनस्तामेव सख्यामाह—

पचतालीसह वत्थुआ छंदे छंद विअंभ ।
अद्धा कइ पिंगल कहइ चलइ ण हरिहरबंभ ॥ ९३ ॥

[पञ्चचत्वारिंशद्वास्तूकच्छन्दसि छन्दांसि विजृम्भन्ते ।
सत्यं कविः पिङ्गलः कथयति चलति न हरिहरब्रह्मभिः ॥]

वास्तूकापरनाम्नि काव्याख्ये छन्दसि शक्रादयः पञ्चचत्वारिंशच्छन्दोभेदा विजृम्भन्ते इति पिङ्गलः कविरद्धा साक्षात्कथयति । हरिहरब्रह्मभिरपि न चलति । तैरप्यन्यथाकर्तुं न शक्यत इत्यर्थः । दोहा छन्दः । एतेषामुदाहरणान्युदाहरणमञ्जर्यामवगन्तव्यानि ॥

---

१. 'ताटङ्कः' रवि०. २. 'शीर्षम्' रवि०. ३. 'फणारक्षः' रवि०. ४–५. एनयोः स्थाने रविकरटीकाया 'अनुबन्धः' इति पठ्यते. ६. इतोऽग्रे मूलपुस्तके रविकरव्याख्यायां च 'भिन्नः' इति वर्तते. ७–८. एतयोः स्थाने 'वलिमोहः' इति समस्तो दृश्यते रविकरव्याख्यायाम्. ९. 'अहः' इति नास्ति रविकरव्याख्यायाम्. १०. अस्याग्रे 'हारः' इति रविकरव्याख्यायां वर्तते.

अथ षट्पदस्य काव्यस्य दोषानाह—

पअइ असुद्धउ पंगु हीण खोडउ पभणिज्जइ,
मत्त ग्गल वाऊल सुण्ण फल कण्ण सुणिज्जइ,
झलवज्जिअ तह वहिर अंध लंकारह रहिअउ,
वूल छदु उट्टवण अत्थ विणु दुब्बल कहिअउ,
डेरउ हट्ठअक्खरहिँ होइ काण गुण सव्वहिँ गहिअ,
सव्वंगसुद्ध समरूअगुण छप्पअदोसँ पिंगलु कहिअ ॥ ९४ ॥

[पदे अशुद्ध पङ्गुर्हीन खञ्ज प्रभण्यते,
मात्राधिको वातूल शून्य फल कर्णेन श्रूयते,
झलवर्जितस्तत्र बधिरोऽन्धोऽलङ्काररहित ,
वूल छन्द उट्टवणिकायामर्थेन विना दुर्बल कथ्यते,
डेर हठाक्षरैर्भवति काणो गुणै सर्वै रहित ,
सर्वाङ्गशुद्ध समरूपगुण षट्पददोष पिङ्गलेन कथित ॥]

पदे चरणे अशुद्ध प्राकृतव्याकरणदुष्ट पङ्गुरित्यभिधीयते । हीनमात्रया खञ्जो भण्यते । मात्राधिको वातूल । तेन शून्य फल कर्णेन श्रूयते । तथा झकारलकाराभ्या वर्जितो बधिर इत्यभिधीयते । उपमाद्यलङ्काररहितोऽन्धोऽभिधीयते । उट्टवणिकाया यदा पञ्चक त्रिकलौ वा भवति तदा वूल । मूक इत्यर्थ । अर्थेन विना दुर्बल कथ्यते । हठाकृष्टकठोराक्षरै डेर । केकर इत्यर्थ । श्लेषादिगुणरहित काण । सर्वैरङ्गै शुद्ध समरूपगुण षट्पददोष पिङ्गलेनैव कथित । इति षट्पदच्छन्द ॥

अथ लघुसंख्याभेदेन वर्णमुपदिशन्प्रतिपदमात्रासंख्यां पिण्डसंख्या च कथयन् षट्पदस्याप्येकसप्ततिर्भवन्तीत्याह—

विप्प होइ वत्तीस खत्ति वेआल करिज्जसु,
अठतालिस लहु वेस सेस सुद्दउ सलहिज्जसु,
चउअग्गल पअ वीस मत्त छण्णवइ ठविज्जसु,
पचतालीसह णाम कव्वलक्खणह करिज्जसु,
छहवीस उल्लाल एक्कक्कइ विण्णिपाअ छप्पअ मुणहु,
समवण्ण सरिससमदोसगुण णाम एहत्तरिउ मुणहु ॥ ९५ ॥

१ "वोल" इति देशीयभाषा । भममिन्यर्थ ' रवि०

[विप्रो भवति द्वात्रिंशता क्षत्रियं द्विचत्वारिंशता कुरुत,
अष्टचत्वारिंशता लघुभिर्वैश्यं शेषैः शूद्रं सुश्लाघ्यम्,
चतुरधिका पदे विंशतिर्मात्राः षण्णवतिं स्थापयत,
पञ्चचत्वारिंशन्नामभिः काव्यलक्षणं कुरुत,
षड्विंशतिमुल्लालस्यैकीकृत्य द्विपादस्य षट्पदं जानीत,
समवर्णं सदशसमदोषगुणं नामान्येकसप्ततिं जानीत ॥]

द्वात्रिंशल्लघुभिर्विप्रो भवति । ततो द्विचत्वारिंशद्भिर्लघुकैः षट्पदं क्षत्रियो भवति। ततोऽष्टचत्वारिंशदवधिकैर्वैश्यो भवति। उर्वरितैः शेषैः शूद्रो भवति। इति तं सलहिज्जसु सुश्लाघ्यं कुरु। उल्लालरहितायाश्चतुष्पद्याः पदे चतुरधिकां विंशतिं मात्राः स्थापय । एवं च पिण्डसंख्यां मात्राषण्णवतिरूपां पादचतुष्टये स्थापय । ततश्च पञ्चचत्वारिंशन्नामभिः काव्यलक्षणं कुरु । अथोल्लालच्छन्दसः षड्विंशतिगुरूनेकीकृत्य पादद्वयाभ्यां षट्पदं जानीत । *समवर्णं सदशदोषगुणम् । यथा काव्यस्य दोषगुणास्तथा षट्पदस्यापि भवन्ती*-त्यर्थः । तथा च षट्पदस्यापि एकसप्ततिनामानि परिगृणु । पञ्चचत्वारिंशन्नामानि काव्यस्य, षड्विंशतिरुल्लालायाः संभूय एकसप्ततिरिति । षट्पदी छन्दः ॥

अथोल्लालालक्षणम्—

तिण्णि तुरंगम तिअल तहँ छहचउतिअ तहँ अंत ।
इमि उल्लाला उट्टवहु विहुदल छप्पणमंत ॥ ९६ ॥

[त्रयस्तुरंगमास्त्रिकलस्ततः षट्चतुस्त्रयस्ततोऽन्ते ।
अनेनोल्लाला ······ द्विदलाभ्यां षट्पञ्चाशन्मात्राः ॥]

प्रथम तुरंगमास्त्रयश्चतुष्कलगणास्त्रयः, ततस्त्रिकलः, तदनन्तरं षट्कलः, ततः चतुष्कलः, ततस्त्रिकलः, संभूयाष्टाविंशतिः कलाः प्रथमचरणे । एवमुल्लालामुट्टवणिकया संक्षिप्तां कुर्वन्तु । तथा च द्वाभ्यां दलाभ्यां षट्पञ्चाशन्मात्रा भवन्ति । दोहाच्छन्दः ॥

अथ शाल्मलीप्रस्तारं दर्शयिष्यंस्तत्र पूर्वं सर्वगुरुभेदमुदाहरति—जहा (यथा)—

'जाआधंगे सीसे गङ्गा लोलन्ती,
सव्वासा पूरंती दुःखा तोडंती,
णाआराआ हारा दीसा वासंता,'
वेआला जासंगे दुव्वा णासंता,
णाचंता उच्छाहे ताले भूमी कंपाले,
जादिट्ठे मोक्खाआ सो तुह्माणं सुक्खादो ॥'

[जायार्धाङ्गे शीर्षे गङ्गा लुलन्ती,
सर्वाशाः पूरयन्ती दुःखानि त्रोटयन्ती,
नागराजो हारो दिग्वासोऽन्तः,
वेताला यस्य सङ्गे दुष्टान्नाशयन्,
नृत्यन्नुत्साहेन तालैर्भूमिः कम्पिता,
यस्मिन्दृष्टे मोक्षः स युष्माकं सुखदः ॥]

यस्य शिवस्य जाया पार्वती अर्धाङ्गे। तिष्ठतीति शेषः। यस्य शीर्षे गङ्गा लुठति। कीदृशी। सर्वाशाः पूरयन्ती। दुःखानि त्रोटयन्ती। यस्य नागराजो हारः। यस्य दिग्वासोऽन्तः। दिगेव वाससो वस्त्रस्यान्तोऽञ्चलं यस्य। यस्य सङ्गे वेतालाः। तिष्ठन्तीति शेषः। पिशाचसहचर इत्यर्थः। दुष्टान्नाशयन्, उत्साहेन नृत्यन् ताण्डवं कुर्वन्, तालैर्भूमिः कम्पिता येन। अथ च यस्मिन्दृष्टे मोक्षः स शिवो युष्माकं सुखदोऽस्तु ॥

अथैकसप्ततिभेदानयनप्रकारमाह—

चउआलीस गुरु कव्वके छहवीसउ उल्लाल।
जे गुरु टुट्टइ लहु वढइ एहत्तरि पत्थार ॥ ९७ ॥

[चतुश्चत्वारिंशद्गुरवः काव्यस्य षड्विंशतिरुल्लालस्य।
यदि गुरुस्त्रुट्यति लघुर्वर्धते एकसप्ततिप्रस्तारः ॥]

चतुश्चत्वारिंशद्गुरवः काव्यस्य, षड्विंशतिरुल्लालायां संभूय सप्ततिः। तेषु यदैकैकक्रमेण गुरुर्ह्रसति, लघुद्वयं वर्धते तदा सप्ततिसंख्याका भेदा भवन्ति। सर्वशेषे च सर्वलघ्वात्मकमेकम्। एवमेकसप्ततिप्रस्तारः। दोहा छन्दः ॥

तदेवाह—

अजअ बेआसी अक्खरउ गुरु सत्तरि रविरेह।
एकक्खर वढ गुरु घटइ इम परिलहुआदेह ॥ ९८ ॥

[अजये द्व्यशीतिरक्षराणि गुरवः सप्तती रविरेखाः।
एकमक्षरं वर्धते गुरुर्ह्रसति अनया परिपाट्या लघुकान्देहि ॥]

अजयनाम्नि षट्पदे द्व्यशीत्यक्षराणि। तत्र विवेकः—सप्ततिर्गुरवः, रविसंख्याका रेखा लघवः, ततो यावद्विपश्चाशदधिकशताक्षरं तावदेकैकमक्षरं सर्वलघुप्रभेदान्तं वर्धते। एको गुरुर्ह्रसति। लघुद्वयं वर्धते। अनया परिपाट्या यावत्सर्वलघुर्भवेत्तावल्लघुकान्देहि। इति प्रथमो भेदः ॥

---

१. मूलपुस्तके 'अथ शाल्मलिप्रस्तारः' इति वर्तते.

अथ तानुदाहरति—

अजअ विजउ बलि कण्ण वीर वेआल विहण्णउ,
मक्कलु हरि हर बंभ इंदु चंदणु सुसुहंकरु,
साण सीह सद्दूल कुंभ कोइल खरु कुंजरु,
मअण मच्छ तालंक सेस सारंग पओहरु,
ता कुंद कमलु वारण सरहु जंगम जुइअट्ठवि लहइ,
सरु सुसरु समरु सारसु सरअ छप्पअणाम पिंगल कहइ ॥९९॥
मेरु मअरु मअ सिद्धि बुद्धि करअलु कमलाअरु,
धवल मणउ धुअ कणउ किसणु रंजणु मेहाअरु,
गिह्म गरुड ससि सूर सल्ल णवरंग मणोहरु,
गअणु रअणु णरु हीरु भमरु सेहरु कुसुमाअरु,
ता दिप्पु संख वसु सद्द मुणिणाअराअ पिंगलु कहइ,
छप्पअणाम एहत्तरिहिं छंद णाअराअ पत्थरि लहइ ॥१००॥

[अजयो विजयो बलिः कर्णो वीरो वेतालो बृहन्नलः,
मर्कटो हरिर्हरो ब्रह्मा इन्दुश्चन्दनः सुशुभंकरः,
श्वा सिंहः शार्दूलः कूर्मः कोकिलः खरः कुञ्जरः,
मदनो मत्स्यस्तालाङ्कः शेषः सारङ्गः पयोधरः,
ततः कुन्दः कमलं वारणः शरभो जङ्गमो द्युतीष्टो दाता,
शरः सुशरः समरः सारसः शारदः षट्पदनामानि पिङ्गलः कथयति ॥
मेरुर्मदकरो मदः सिद्धिर्बुद्धिः करतलः कमलाकरः,
धवलो मनो ध्रुवः कनकं कृष्णो रञ्जनं मेघकरः,
ग्रीष्मो गरुडः शशी सूर्यः शल्यो नवरङ्गो मनोहरः,
गगनं रत्नं नरा हीरो भ्रमरः शेखरः कुसुमाकरः,
ततो दीपः शङ्खो वसु शब्दो मुनिर्नागराजः पिङ्गलः कथयति,
षट्पदनामान्येकसप्तति छन्दस्कारः प्रस्तार्य लभते ॥]

यथा—७० गु. १२ ल. ८२ अ. अजयः। ६९ गु. १४ ल. ८३ अ. विजयः। ६८ गु. १६ ल. ८४ अ. बलिः। ६७ गु. १८ ल. ८५ अ. कर्णः। ६६ गु. २० ल

८६ अ. वीरः । ६५ गु. २२ ल. ८७ अ. वेतालः । ६४ गु. २४ ल. ८८ अ. बृहन्नलः। ६३ गु. २६ ल. ८९ अ. मर्कटः । ६२ गु. २८ ल. ९० अ. हरिः । ६१ गु. ३० ल. ९१ अ. हरः । ६० गु. ३२ ल. ९२ अ. ब्रह्मा । ५९ गु. ३४ ल. ९३ अ. इन्दुः । ५८ गु. ३६ ल. ९४ अ. चन्दनम् । ५७ गु. ३८ ल. ९५ अ. शुभकरः । ५६ गु. ४० ल. ९६ अ. श्वा । ५५ गु. ४२ ल. ९७ अ. सिंहः । ५४ गु. ४४ ल. ९८ अ. शार्दूलः । ५३ गु. ४६ ल. ९९ अ. कूर्मः । ५२ गु. ४८ ल. १०० अ. कोकिलः । ५१ गु. ५० ल. १०१ अ. खरः । ५० गु. ५२ ल. १०२ अ. कुञ्जरः । ४९ गु. ५४ ल. १०३ अ. मदनः । ४८ गु. ५६ ल. १०४ अ. मत्स्यः । ४७ गु. ५८ ल. १०५ अ. तालाङ्कः । ४६ गु. ६० ल. १०६ अ. शेषः । ४५ गु. ६२ ल. १०७ अ. सारङ्गः । ४४ गु. ६४ ल. १०८ अ. पयोधरः । ४३ गु. ६६ ल. १०९ अ. कुन्दः । ४२ गु. ६८ ल. ११० अ. [1]कमलम् । ४१ गु. ७० ल. १११ अ. वारणः । ४० गु. ७२ ल. ११२ अ. शरभः । ३९ गु. ७४ ल. ११३ अ. जङ्गमः । ३८ गु. ७६ ल. ११४ अ. द्युतीष्टम् । ३७ गु. ७८ ल. ११५ अ. दाता । ३६ गु. ८० ल. ११६ अ. शरः । ३५ गु. ८२ ल. ११७ अ. सुशरः । ३४ गु ८४ ल. ११८ अ. समरः । ३३ गु. ८६ ल. ११९ अ. सारसः । ३२ गु. ८८ ल. १२० अ. शारदः । ३१ गु. ९० ल. १२१ अ. मेरुः । ३० गु. ९२ ल. १२२ अ. मदकरः । २९ गु. ९४ ल. १२३ अ. मदः । २८ गु. ९६ ल. १२४ अ. सिद्धिः । २७ गु. ९८ ल. १२५ अ. बुद्धिः । २६ गु. १०० ल. १२६ अ. करतलम् । २५ गु. १०२ ल. १२७ अ. कमलाकरः । २४ गु. १०४ ल. १२८ अ. धवलः । २३ गु. १०६ ल. १२९ अ. मनः । २२ गु. १०८ ल. १३० अ. ध्रुवः। २१ गु. ११० ल. १३१ अ. कनकम् । २० गु. १११ ल. १३२ अ. कृष्णः । १९ गु. ११४ ल. १३३ अ. रञ्जनम् । १८ गु. ११६ ल. १३४ अ. मेघकरः । १७ गु ११८ ल. १३५ अ. ग्रीष्मः । १६ गु. १२० ल. १३६ अ. गरुडः । १५ गु. १२२ ल. १३७ अ. शशी । १४ गु. १२४ ल. १३८ अ सूर्यः । १३ गु. १२६ ल. १३९ अ. शल्यः । १२ गु. १२८ ल. १४० अ नवरङ्गः । ११ गु. १३० ल. १४१ अ. मनोहरः । १० गु. १३२ ल. १४२ अ. गगनम् । ९ गु. १३४ ल. १४३ अ. रत्नम् । ८ गु. १३६ ल. १४४ अ. नरः । ७ गु. १३८ ल. १४५ अ हीरः । ६ गु. १४० ल. १४६ अ. भ्रमरः । ५ गु. १४२ ल. १४७ अ. शेखरः । ४ गु १४४ ल. १४८ अ. कुसुमाकरः । ३ गु. १४६ ल. १४९ अ. दीपः । २ गु. १४८ ल. १५० अ. शङ्खः । १ गु. १५० ल. १५१ अ. वसु[2] । ० गु. १५२ ल. १५२ अ. (१५२ मात्रा ) शब्दः । इति ज्ञात्वा मनसि विचारयित्वा नागराजः पिङ्गलः कथयति । इत्येकसप्ततिः षट्पदानां नामानि । छन्दस्कारः प्रस्तार्य लभते । नामभेदानिति शेषः ॥

---

१. 'मुकुरः' इति मूलपुस्तकस्थः पाठः. २. मूलपुस्तके प्रतिसंज्ञमेवैव मात्रागणना वर्तते.

पट्पदच्छन्दसि नामसंख्यानयनप्रकारान्तरमाह—

सत्ते सव्वहि होइ लहु अद्ध विसज्जहि ताम।
तहिँवि विसज्जहि एक्कसर एहि पमाणे णाम ॥ १०१ ॥
[यावन्तः सर्वे भवन्ति लघवोऽर्धं विसर्जय तासु।
तास्वपि विसर्जयैकशरमेतत्प्रमाणि नामानि ॥]

यावन्तः सर्वे लघवो भवन्ति। द्विपञ्चाशदधिकशतकला इत्यर्थः। तासु कलास्वर्धे विसर्जय। अवशिष्टा षट्सप्ततिः। तास्वपि शरसंख्यां विसर्जय। एवं सति यावन्तोऽवशिष्यन्ते। प्रकृते एकसप्ततिः। एतत्प्रमाणि नामानीति दोहाछन्दः। एतेषामुदाहरणान्युदाहरणमञ्जरीतोऽवगन्तव्यानि क्रमेण। षट्पदं निवृत्तम् ॥

अह पज्झडिआ (अथ पज्झटिका छन्दः)—

चउमत्त करहु गण चारि ठाँइ,
ठवि अन्त पओहर पाँइ पाँइ।
चउसट्ठि मत्त पज्झरइ इन्दु,
ऍम चारिपाअ पज्झडिअ छन्दु ॥ १०२ ॥
[चतुर्मात्रिकान्कुरुत गणांश्चतुःस्थाने,
स्थापयित्वान्ते पयोधरं पादे पादे।
चतुःषष्टि मात्राः प्रक्षरतीन्दु-
रेवं चतुष्पादैः पज्झटिका छन्दः ॥]

चतुर्मात्रिकांश्चतुरो गणांश्चतुःस्थाने चतुश्चरणे स्थापयित्वा नियमेन पयोधरं चतुष्कलं चतुर्थं स्थापयित्वा। एवं पदचतुष्टयेन चतुःषष्टिभिः(ष्ट्या) मात्राभिः पज्झटिका भवति। यथा इन्दुश्चन्द्रमाः षोडशकलाभिरमृतं क्षरति तथा षोडशमात्राभिरेकचरणोऽस्याः पीयूषवर्षी भवतीति भावः। तथा सति षोडशकलैव पज्झटिकानामकं छन्दो निष्पाद्यते इति। भूषणेऽप्युक्तम्—'चत्वारि चतुष्कलानि देहि तत्रापि जगणमन्ते विधेहि। भणिता फणिनायकपिङ्गलेन पज्झटिकेयं षोडशकलेन ॥' इदमप्युदाहरणम् ॥

पज्झटिकामुदाहरति—जहा (यथा)—

'जॆं[ण] गंजिअ गौडाहिवइ राउ,
उद्दण्ड उड्डसों भअ पएउ।

1. 'छन्दःप्रशंसामाह—इदं श्रुत्वा इन्दुश्चन्द्रमाः प्रस्विद्यते। अमृतं क्षरतीत्यर्थः।' इति रविकरव्याख्या.

गुरुविक्कम विक्कम जिणिअ जुज्झ,
ता कण्णपरक्कम कोइ बुज्झ ॥'

[येन गञ्जितो गौडाधिपती राजा,
उद्दण्ड उत्कलेशो भयेन पलायितः ।
गुरुविक्रमो विक्रमो जितो युद्धे,
तस्मात्कर्णपराक्रमं कोऽपि बुध्यते[1] ॥]

कश्चित्कविः कर्णं स्तौति—कर्णस्य पराक्रम कोऽपि बुध्यते । अपि तु न कोऽपि । येन गञ्जितो गौडाधिपतिः । यस्य भयेन उद्दण्ड उद्धतदण्डोऽपि उद्दस्तो उत्कलेशः पलायितः । गुरुर्विक्रमो यस्यैव विक्रमो येन युद्धे जितः । ता तस्मात्कस्तव पराक्रमं जानीयादिति भावः । उट्टवणिका यथा—ऽऽ, ।।ऽ, ऽ।।, ।ऽ।, ऽऽ, ।ऽ।, ।।।।, ।ऽ।, ।।ऽ, ।।ऽ, ।।।।, ।ऽ।, ऽऽ, ।।ऽ, ।।ऽ, ।ऽ।.

अथाडिल्लाछन्दः—

सोरह मत्ता पाउ अँडिल्ल ह
वेवि जमक्का भेउ अडिल्लह ।
होइ ण पओहर किं पि अडिल्लह
सुपिअ अन्त भण छन्द अडिल्लह ॥ १०२ ॥

[षोडश मात्राः पादे अडिल्ल ह[2]
द्वे अपि यमके भेदं कलयतः ।
भवति न पयोधरः कथमप्यप्रयोजकः
सुप्रियोऽन्ते भण च्छन्दोऽडिल्लम् ॥]

अत्र षोडश मात्राः पादे लभ्यन्ते । द्वयोरपि दलयोर्यमकौ भवत इति कलया भवति। न पयोधरो जगणः कथमपि । अन्तेषु चतुर्ष्वपि चरणेषु सुप्रियो लघुद्वयात्मको गणो भवति यत्र तच्छन्दोऽडिल्लानामकमित्यर्थः । भूषणेऽप्युक्तम्—'छन्दसि षोडशकले वि-

---

१. 'बुध्यते' इति दैवादिकस्य बुधधातोः कर्तरि रूपम्. २. रविकरव्याख्याने 'डि'वर्णस्थाने 'लि' इति वर्णः प्रतिचरण दृश्यते. तथा च "द्वे यमके भेदं कलयतः । कल्पिवल्ली कामधेनू । 'इल्लडिल्लौ स्वार्थे' इतील्लप्रत्ययः । 'हहिजेराः पादपूरणे' इति हप्रत्ययः । 'प्रायोलोपः' इति प्रायोवचनादाद्यावपि ककारलोपः । पयोधरः कीदृक् । अलिल्लह अप्रयोजकः । अप्रयोजकवाचकादलंशब्दादिल्लप्रत्ययो हप्रत्ययश्च ।" इति तद्व्याख्यानिष्कर्षः.

लासिनि प्रतिपदमन्ते यमकविलासिनि । अद्विलनामपयोधरधारिणि शेषे नियतलघुद्वय-धारिणि ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

'जेंण आसावरि देहा दिन्हउ
सुत्थिर डाहररज्जा लिन्हउ ।
कालंजर जिण कित्ती अप्पिअ
धण आवज्जिअ धम्मकें अप्पिअ ॥'
[येनासावरीदेशो दत्तः
सुस्थिरं डाहरराज्यं गृहीतम् ।
कालंजरे येन कीर्तिरर्पिता
धनमावर्ज्य धर्मेऽर्पितम् ॥]

येन कर्णेन [आ]सावरीदेशः मार्गणेभ्यो दत्तः । येन च सुस्थिरं डाहरराज्यं पार्वतीयान्विजित्य गृहीतम् । येन च कालंजरे दुर्गे कीर्तिः स्थापिता । येन च धनमावर्ज्य धर्मार्थमेवार्पितमर्थिभ्यः । स कर्णो जयतीति वाक्यशेषः ॥ उद्दवणिका यथा—॥ऽ, ऽ॥, ऽऽ, ऽ॥, ऽ॥, ऽ॥, ऽऽ, ऽ॥, ऽऽ, ॥॥, ऽऽ, ऽ॥, ॥ऽ, ऽ॥, ऽ॥, ऽ॥.

अथ पादाकुलकं छन्दः—

लहु गुरु एक्क णिम्म णहि जेहा,
पअ पअ लेक्खह उत्तमरेहा ।
सुकइ फणिंदह कंठहवलअं,
सोरहमत्ता पाआकुलअम् ॥ १०४ ॥
[लघुगुर्वोरेको नियमो नहि यत्र,
पदे पदे लिख्यन्त उत्तमरेखाः ।
सुकवेः फणीन्द्रस्य कण्ठवलयं,
षोडशमात्रं पादाकुलकम् ॥]

यत्र लघूनां गुरुणा वा एकोऽपि नियमो नास्ति । पदे पदे उत्तमरेखा भवन्ति । अन्तरान्तरा लघुर्गुरुश्च भवतीत्यर्थः । अथ च सुकवेः फणीन्द्रस्य पिङ्गलस्य कण्ठवलयं कण्ठाभरणं षोडशमात्रं पादाकुलकं छन्दो भवतीति । भूषणेऽपि—'अक्षरगुरुलघुनियम-

१. याचकेभ्यः. २. 'अत्यन्तानुरागात्फणीन्द्रेण ग्रैवेयकत्वेन धृतमिति प्रसिद्धिः । सर्पाणां कण्ठे वलयाकारा रेखा भवन्तीति ।' इति रविकरव्याख्याविशेषः.

विरहित भुजगराजपिङ्गलपरिभणितम् । भवति सुगुम्फितषोडशकलक वर्णाभूषण पादाकुलकम् ॥' इदमप्युदाहरणम् ॥

तदुदाहरति—जहा (यथा)—

'सेर एक्क जउ पावउँ घित्ता,
मंडा वीस पकावउँ णित्ता ।
टंक एक्क जउ सेंधव पाआ,
जो हउ रंक सोइ हउ राआ ॥'

[सेरमेकं यदि प्राप्नोमि घृतं,
मण्डकान्विशतिं पचामि नित्यम् ।
टङ्क एको यदि सैन्धवः प्राप्तः,
योऽहं रङ्कः सोऽहं राजा ॥]

कस्यचिद्दिद्रपकस्य वचनम्—सेरमात्र यदि प्राप्यते घृत तथा मण्डकान्विशतिं पचामि नित्यम् । तत्र टङ्कमात्र यदि सैन्धव लवण प्राप्त तदा य एवाह रङ्कः स एवाह राजा ॥ उट्टवणिका यथा—SIS।।IS।।SS, SSS।।S।।SS, SIS।।IS।।SS, S।।SIS।।SS यथा वा—'मलयपवनहृतकुसुमपरागः परभृतनिभृतरणितवनभागः । चिरतरसंचितमानदुरन्तः कस्य न मुदमुपनयति वसन्तः ॥'

अथ चउबोलाछन्दः—

सोरहँ मत्तहँ बे वि पमाणहु,
बीअ चउत्थहिँ चारिदहा ।
मत्तह सट्ठि समग्गल जाणहु,
चारिपआ चउबोल कहा ॥ १०९ ॥

[षोडशमात्राभिर्द्वावपि प्रमाणयत,
द्वितीये चतुर्थे चतुर्दश ।
मात्राः षष्टिं समग्रा जानीत,
चतुष्पदा चउबोला कथिता ॥]

षोडशमात्राभिर्द्वौ चरणौ प्रथमतृतीयौ प्रमाणयत । द्वितीये चतुर्थे चरणे च चतुर्दश मात्रा. । एवं षष्टिमात्राभिश्चतुष्पद जानीत ॥

---

१. सोदाहरणमदः सूत्र मूलपुस्तके रविकरव्याख्याया च नोपलभ्यते.

चउवोलामुदाहरति—

रे धणि मत्तमअंगजगामिणि,
खंजणलोअणि चंदमुही ।
चंचल जुव्वण जात ण आणहि,
छइल्ल समप्पइ काँइ णही ॥
[रे प्रिये मत्तमतङ्गजगामिनि,
खञ्जनलोचने चन्द्रमुखि ।
चञ्चलं यौवनं जातं न जानासि,
विदग्धेभ्यः समर्पयसि कुतो नहि ॥]

कस्यांचित्तरुण्यामासक्तस्य [कस्यचिद्] वचनम्—रे धणि हे वनिते, मत्तमतङ्गजगामिनि, हे खञ्जनलोचने, हे चन्द्रमुखि, यतश्चञ्चलमिदं यौवनं हस्तस्थितजलमिव गच्छन्न जानासि । अतः छइल्लेभ्यः अस्मदादिविटेभ्यः कुतो न समर्पयसि । अहो ते भ्रम इति भावः ॥ उट्टवणिका यथा—ऽ॥ऽ॥ऽ॥ऽ॥, ऽ॥ऽ॥ऽ॥ऽ, ऽ॥ऽ॥ऽ॥ऽ॥, ॥॥ऽ॥ऽ॥ऽ.

अथ रड्डाछन्दः—

पढम विरइ मत्त दहपंच,
पअ बीअ बारह ठवहु,
तीअठाँव दहपंच जाणहु,
चारिम एग्गारहिँ,
पंचमे हि दहपंच माणहु,
अट्ठा सट्ठा पूरवहु,
अग्गे दोहा देहु,
राअसेण सुपसिद्ध इअ,
रड्डु भणिज्जइ एहु ॥ १०६ ॥
[प्रथमे विरचय मात्राः पञ्चदश,
पदे द्वितीये द्वादश स्थापयन्तु,
तृतीयस्थाने पञ्चदश जानीत,

१. इतः प्राङ् मूलपुस्तके 'अह णवपअ' इति पाठो लभ्यते. २. 'विरतिः' रवि०.

चतुर्थे एकादश,
पञ्चमे पञ्चदशानयन्तु,
अष्टषष्टिं पूरयन्तु,
अग्रे दोहां दत्य
राजसेनः सुप्रसिद्धामिति
रड्डां भणति इमाम् ॥]

प्रथमे पदे पञ्चदश मात्रा विरचय । पदे द्वितीये द्वादश । तृतीयस्थाने पञ्चदशमात्रा नीत । चतुर्थे एकादश मात्राः । पञ्चमे पञ्चदश मात्रा आनयन्तु । एवं पञ्चपदेषु अष्टषष्टिं मात्राः पूरयन्तु । अग्रे दोहा दत्य । राजसेनो नाम राजा सुप्रसिद्धामिमां रड्डां भणति । इदमप्युदाहरणम् ॥

एतस्या एव गणनियममाह—

विसम तिकल संठवहु तिण्णि पाइक्क करहुलहु,
अंत णरिंद कि विप्प पढम वे मत्त अवरपइ,
समपअ तिअ पाइक्क सव्वलहु अंत विसज्जहु,
चउठाचरण विचारि एक्क लेहु कड्ढिअ लिज्जसु,
एम पंच पाअ उट्टवण्ण कइ वत्थुणाम पिंगल कुणइ,
ठवि दोसहीण दोहाचरण राअसेण रड्डह भणइ ॥ १०७ ॥

[विषमे त्रिकलं स्थापयन्तु त्रयः पदातयः क्रियन्तां,
अन्ते नरेन्द्रः किंवा विप्रः प्रथमं द्वे मात्रे अपरपदे,
समपदे त्रयः पदातयः सर्वलघुमन्ते विसर्जयन्तु,
चतुर्थचरणे विचारयित्वैकं लघुमाकृष्य गृह्णन्तु,
एवं पञ्चसु पादेषूट्टवणिकां कृत्वा वस्तुनाम पिङ्गलः करोति,
स्थापयित्वा दोषहीनं दोहाचरणं राजसेनो रड्डा भणति ॥]

विषमे पदे प्रथमतृतीयपञ्चमे प्रथम त्रिकल स्थापयन्तु । ततस्त्रयः पदातयः चतुष्कलाः क्रियन्ताम् । अत्र प्रथमपादस्यान्ते नरेन्द्रो मगणः । किंवा विप्रगणः चतुर्लघ्वात्मको भवति । ततोऽपरत्र समे द्वितीये चतुर्थे च द्वे मात्रे प्रथमतो दत्वा त्रयः पदातयः चतुष्कलास्त्रयोगणाः, पूर्वस्थापितमात्राद्वयेन सह कर्तव्या इत्यर्थः । सर्वेषु पदेषु लघुमन्ते

१. 'संस्थापय' रवि०. २. 'प्रहाण' रवि०. ३. 'संस्थाप्य' रवि०. ४. 'रड्डा भण्यते' रवि०

विसर्जयन्तु । चतुर्थे चरणे विचारयित्वा कार्यः । उद्दवणिकां विधाय तुरीयचरणे एक ल-घुमाकृष्य गृह्णन्तु । तेन चतुर्थे चरणे एकादशैव कलाः । अतस्तृतीयो गणस्त्रिकलद्विल-घ्वात्मको भवति, इत्येवं पञ्चसु पादेषु उद्दवणिकां कृत्वा अष्टषष्टिमात्राश्च पूरयित्वा वस्तु-भूत तच्छन्दसो नाम पिङ्गलः करोति । 'वस्तु' इत्येतस्यैव नामान्तरम् । वापा (?) स्था-पयित्वा दोषहीन दोहाचरणं राजसेनो नाम राजा रड्डामिति भणति । षट्पदी च्छन्दः ॥

तामुदाहरति—जहा (यथा)—

'भमइ महुअर फुल्ल अरविंद,
णवकेसुकाणण फुल्लिअ,
सव्वदेस पिअ राव बुल्लिअ,
सिअल पवण लहु वहइ,
मलअकुहर णववल्लि पेल्लिअ,
चित्तम णोभउसर हणइ,
दूर दिगन्तर कंत,
केपरि अप्पउ वारिहउ,
इम परिपेलिअ दुरंत ॥'

[भ्रमति मधुकरः स्फुटितमरविन्दं,
नवकिंशुककाननं पुष्पितं,
सर्वदेशे पिको रावं कूजति,
शीतलः पवनो लघु वहति,
मलयकुहरे नववल्लीं प्रेरयित्वा,
चित्तं मनोभवशरो निहन्ति,
दूरे दिगन्तरे कान्तः,
केन प्रकारेणात्मानं स्थापयिष्यामि,
एवं परिपतितं दुरन्तम् ॥]

काचित्प्रोषितभर्तृका समागत वसन्तमवलोक्यात्मान शोचति—यथा हे सखि, मधुकरो भ्रमरो भ्रमति । स्फुटितमरविन्दम् । विकसितमित्यर्थः । नवकिंशुककानन च पुष्पितम् ।

१ 'सुण्णिअ' रवि०. 'श्रूयते' इति तच्छाया. रमणीयश्चायं पाठः. २. 'परिमिलिअ' रवि०. 'परिमिलित' इति तच्छाया.

अथ च सर्वदेशे प्रिय' पञ्चम कूजति । शीतलपवनो मलयानिल मलयकुहरस्थनवकम्मभिनवलता प्रेरयित्वा लघु मन्द वहति । एव वसन्ते जाते सति चित्त च मनोभवशरा हन्ति । दूरे दिगन्तरे कान्त । कथमिदानामात्मान स्थापयिष्यामि । एव पतित दुरन्त दु खमिति । एतस्या एवान्यत्र नवपदमिति नामान्तरम् । उद्दवणिका यथा—॥।, ॥॥, ऽ॥, ।ऽ।, ॥ऽ, ।ऽ।, ॥॥, ऽ।, ऽ॥, ।ऽ।, ऽ॥, ॥॥, ॥॥, ॥, ॥, ॥॥, ।ऽ।, ऽ॥, ऽ॥ऽ, ॥॥, ॥, ऽ॥ऽ, ॥ऽ, ।, ऽ॥ऽ, ॥ऽ, ॥, ॥॥।, ॥ऽ, ।

अथैतस्य छन्दस सप्त भेदा भवन्तीति नामतस्तानुद्दिशति—

केरही णंदा मोहिणी चारुसेणि तह भद्द ।
राअसेण तालंक पिअ सत्त वत्थु णिप्फंद ॥ १०८ ॥

[करभी नन्दा मोहिनी चारसेना तथा भद्रा ।
राजसेना ताल‌ङ्किनी प्रिये सप्त वस्तूनि निष्पन्नानि ॥]

करभी, नन्दा, मोहिनी, चारुसना, भद्रा, राजसेना, तालङ्किना, इति प्रिये सप्त भेदा वस्त्वपरनामकदूहाच्छन्दसो निष्पना । दोहा च्छन्द ॥

तेषा लक्षणमाह—

पढमतीअपश्चमपअह तेरह मत्ता जासु ।
बीअचउत्थएआरहहिँ करहिं भणिज्जसु तासु ॥ १०९ ॥

[प्रथमतृतीयपञ्चमपदेषु त्रयोद शमात्रा यस्या ।
द्वितीयचतुर्थयोरेकादश करहीं भणति ताम् ॥]

प्रथमतृतीयपञ्चमपदेषु यस्यास्त्रयोदश मात्रा । अथ च द्वितीयचतुर्थयोरेकादश मात्रा । एव पञ्च पदानि, एतदग्रे दोहा यस्यास्ता करभीं भणति । दोहा च्छन्द ॥

पढमतीअपश्चमपअह मत्त होइ दहचारि ।
बीअचउत्थएआरहहिँ णंद भणिज्ज विआरि ॥ ११० ॥

[प्रथमतृतीयपञ्चमपदेषु मात्रा भवन्ति चतुर्दश ।
द्वितीयचतुर्थयोरेकादश नन्दा भणति विचार्य ॥]

यस्या प्रथमतृतीयपञ्चमपादेषु चतुर्दश मात्रा । द्वितीयचतुर्थयोरेकादश, ता विचार्य दोहा च दत्वा नन्दा भणति । दोहा च्छन्द ॥

पढमतीअपश्चमपअह णव दह मत्ता जासु ।
बीअचउत्थएआरहहिँ त मोहिणि मुणिआसु ॥ १११ ॥

१. 'करभी' रवि०. २. 'चारुसनी' रवि० ३. 'राजसन' रवि० ४ 'तालङ्क' रवि०.

[प्रथमतृतीयपञ्चमपदेषु नव दश मात्रा यस्याः ।
द्वितीयचतुर्थयोरेकादश तां मोहिनीं जानीहि ॥]

प्रथमतृतीयपञ्चमपदेषु नव दश ऊनविंशतिर्मात्राः । यस्या द्विचतुर्थे एकादश । अग्रे दोहा यत्र तां मोहिनीं जानीहि । दोहा च्छन्दः ॥

पंढमतीअपञ्चमपअह मत्त पण्णरह जासु ।
वीअचउत्थएआरहहिँ चारुसेणि मुणिआसु ॥ ११२ ॥

[प्रथमतृतीयपञ्चमपदेषु मात्राः पञ्चदश यस्याः ।
द्वितीयचतुर्थयोरेकादश चारुसेनां जानीहि ॥]

प्रथमतृतीयपञ्चमपदेषु मात्राः पञ्चदश । द्वितीयचतुर्थयोरेकादश । सदोहां तां चारुसेनां जानीहि । दोहा च्छन्दः ॥

पढमतीअपंचमपअह मत्ता दहपंचाइ ।
वीअ चउत्थे बारहहिँ भद्दणाम कहिआइ ॥ ११३ ॥

[प्रथमतृतीयपञ्चमपदेषु मात्राः पञ्चदश ।
द्वितीयचतुर्थयोर्द्वादश भद्रानाम्नीं कथय ॥]

प्रथमतृतीयपञ्चमपदेषु पञ्चदश । द्वितीयचतुर्थयोर्द्वादश मात्रा दत्वा दोहां भद्रानाम्नीं कथय । दोहा च्छन्दः ॥

पढमतीअपंचमपअह मत्त पण्णरह जेत्थु ।
सम बारह अरु एक्कदह राअसेणु भण तेत्थु ॥ ११४ ॥

[प्रथमतृतीयपञ्चमपदेषु मात्राः पञ्चदश यत्र ।
समे द्वादश पुनरेकादश राजसेनां भण तत्र ॥]

प्रथमतृतीयपञ्चमपदेषु पञ्चदश मात्राः, द्वितीये द्वादश, चतुर्थे एकादश, तस्यान्ते दोहा, ता राजसेनां भण ॥

पंढमतीअपञ्चमपअह मत्ता सोलह जासु ।
सम बारहएआरहहिँ तालङ्किणि भण तासु ॥ ११५ ॥

---

१. चारुसेनालक्षणरूपासौ दोहा मूलपुस्तके नास्ति. २. 'अथ च पद्मावती पद्मिनी नायिकां भण । यस्याः स्थाने स्थाने चतुर्मात्राः ब्रह्मक्षत्रविट्शूद्ररूपाः, अष्टौ गणा अष्टनायिकासु गण्यन्त इत्यर्थः । पद्मिनी च जातिचतुष्टयादुत्पद्यत इति प्रसिद्धिः । ध्रुवं निश्चितम् । सा कथं चतुर्मात्रिका । कर्णः क्षत्रियः । करतलो वैश्यः । विप्रो ब्राह्मणः । चरणः शूद्रः । एवंरूपेण चतुर्मात्रिकत्वं यस्याः । उत्कृष्टा । यदि तस्याः पयोधरः स्तनः पतति तदा किमियं मनोहरा । सा च यथा नायकगुणं पीडयति, पितरं सन्त्रासयति, यत्सखामभिरक्तो भवति कविस्तमुद्भासयति' इति रविकरव्याख्यान्तरम्.

[प्रथमतृतीयपञ्चमपदेषु मात्राः षोडश यस्याः ।
समे द्वादशैकादश तालङ्किनीं भण ताम् ॥]

प्रथमतृतीयपञ्चमपदेषु षोडश मात्राः, द्वितीये द्वादश, चतुर्थे एकादश, अन्ते दोहा यस्यास्तां तालङ्किनीं भणेति । एतेषामुदाहरणानि सुबुद्धिभिः स्वयमूह्यानि । इति रड्डाप्रकरणम् ॥

अथ पद्मावती छन्दः—

भणु पउमावत्ती ठाणं ठाणं चउमत्ता गण अट्ठाआ
धुव कण्णो करअलु विप्पो चरणो पाए पाअ उक्किठाआ ।
जइ पलइ पओहर किमइ मणोहर पीडइ तह णाअक्कगुणो
पिअरह संतासइ कइ उव्वासइ इय चंडालचरित्त गणो ॥ ११६ ॥

[भण पद्मावती स्थाने स्थाने चतुर्मात्रिका गणा अष्टौ
ध्रुवं कर्णः करतलो विप्रश्चरणः पादे पाद उत्कृष्टाः ।
यदि पतति पयोधरः किमियं मनोहरा पीडयति तथा नायकगुणं
पितरं संत्रासयति कविमुद्वासयत्ययं चण्डालचरित्रो गणः ॥]

यस्याः स्थाने स्थाने चतुर्ष्वपि चरणेषु चतुर्मात्रिकाश्चतुष्कला गणा अष्टौ भवन्ति । तां पद्मावती भण । के के गणा इत्याह—कर्णः गुरुद्वयात्मको गणः । करतलः गुर्वन्तश्चतुष्कलः । विप्रः चतुर्लघ्वात्मको गणः । चरणः आदिगुरुर्भगणाख्यः । ध्रुव निश्चितम् । एत एव गणाः पौर्वापर्येण वसुसङ्ख्याका पादे पादे उत्कृष्टाः कार्याः । अत्र 'ध्रुवधम्मो' इति क्वचित्पाठः । तत्र धर्मो युधिष्ठिरः, तेन कुन्तिपुत्रत्वाद्गुरुद्वय विवक्षितम् । अत्र यदि पयोधरो जगणः पतति तदा किमियं मनोहरा, (मनोहरा) न भवतीत्यर्थः । अथ च यस्य कवित्व क्रियते तस्य नायकस्य तथा गुण पीडयति, पितर त्रासयति, कवित्वस्य पिता कविरेव विवृणोति—कविमुद्वासयति, तस्मादत्र छन्दसि अय जगणश्चण्डालचरित्रः सर्वथा त्याज्यः । उक्त च भूषणे—'यद्यष्टचतुष्कलगणनिर्मितपदकरपदकर्णद्विजविहिता सा पद्मावतिका विबुधसुमहिता जगणविरहिता सुकविहिता । इह दशवसुभुवनैर्भवति विरामः सकलाभिमतफलाय तदा फणिनायकपिङ्गलभणितसुमङ्गलरसिकमनःसविहितमदा ॥'

पद्मावतीमुदाहरति—जहा (यथा)—

'भअभज्जिअ वंग भंगु कलिंगा तेलंगा रण मुत्ति चले
मरहट्ठा धिट्ठा लग्गिअ कट्ठा सोरट्ठा भअ पाअ पले ।

१. पद्मावती.

चपारणकंपा पव्वअझम्पा उत्थी उत्थी जीवहरे

कासीसरराणा किअउ पआणा विज्जाहर भण मंतिवरे ॥'

[भयेन पलायिता वङ्गा भग्ना. कालिङ्गास्तैलङ्गा रण मुक्त्वा चलिता ,

महाराष्ट्रा धृष्टा लग्नाः काष्ठा. सौराष्ट्रा भयेन पादे पतिता ,

चम्पारण्याना कम्प पार्वतीया झम्पा उपर्युपरि जीवगृहे,

काशीश्वरराज्ञि कुर्वति प्रयाण विजयहरो भणति मन्त्रिवर ॥]

कश्चित्कवि काशीश्वरस्य राज्ञो विजयप्रयाणमनुवर्णयति—वङ्गा वङ्गदेशीया भयेन पलायिता । अथ च कालिङ्गा कलिङ्गदेशस्था , तेऽपि भग्ना । तैलङ्गा अपि रण त्यक्त्वा चलिता । धृष्टा महाराष्ट्रा । एकनीभूय लग्ना काष्ठा । लग्ना दिश इत्यर्थ । सौराष्ट्रा भयेनागत्य पादे पतिता । अथ च चम्पारण्यदेशीयाना कम्पो जात । पार्वतीया उत्थी उत्थी उपर्युपरि जीवाना मनुष्याणा हरेर्गृहे एव झम्पा निलीना । जीवगृहे गोप्यस्थले झम्पा निलीना इति वा । एतत्प्रतापतपनभयाद्दूरा इव स्थिता इत्यर्थ । उद्वनणिका यथा—IIS, IIS, SS, IIS, SS, SS, IIS, IIS, IIS, SS, SS, IIS, SS, SS, IIS, IIS, SS, IIS, SS, IIS, SS, SS, SS, IIS, SS, IIS, SII, IIS, SS, SII, IIS, IIS

अथ कुण्डलिका छन्द —

दोहालक्खण पढम पढि कव्वह अद्ध णिरुत्त,

कुंडलिआ वुभअण मुणहु उल्लाले संजुत्त,

उल्लाले संजुत्त जमक सुद्धउ स लहिज्जइ,

चउआलह सउ मत्त सुकइ दिढबंधु कहिज्जइ,

चेउआलह सउ मत्त जासु तणुभूसणसोहा,

तं कुंडलिआ मुणहु पढम जह पढिअइ दोहा ॥ ११७ ॥

---

१ 'सुकविदृढबन्धु (पिङ्गल) कथयति' इति रविकरव्याख्या २ 'अथ गुणालंकारां कथयति—यस्यास्तनौ शरीरे भूषणशोभा हसन्ति । भूषणमलंकार । शोभा कान्ति । गुण इति शेष । द्विवचनस्य बहुवचन नियम् । तेन भूषणशोभे यस्यास्तनौ हास्यं कुर्वाते । नियतमस्याकगुणशोभा इत्याह—चतुश्चत्वारिंशत्मात्रा । अत्र प्राकृत पूर्वनिपाताऽनियम । तेन व्यवहितनापि मात्राशब्देनान्वय ।' इति रविकरव्याख्या तथा चैके—'चउआल हसउ मत्त जासु-तनु-भसणसोहा'

[दोहालक्षणं प्रथमं पठित्वा काव्येनार्धं निरुक्त्वा,
कुण्डलिकां बुधजना जानीत उल्लालेन संयुक्ताम्,
उल्लालेन संयुक्तं यमकं शुद्धं तल्लभते,
चतुश्चत्वारिंशदधिकं शतं मात्राः सुकविना दृढबन्धः कथ्यते,
चतुश्चत्वारिंशदधिकं शतं मात्रा यस्यास्तनुभूषणशोभा,
तां कुण्डलिकां जानीत प्रथमं यत्र पठ्यते दोहा ॥]

प्रथमं द्विपथालक्षण पठित्वा काव्येनार्धे निरुक्त्वा कुण्डलिकां जानीत । कीदृशीम् । उल्लालेन संयुक्ताम् । उल्लालनमेव उल्लालः परावर्तन, तेन युक्तमेव पद पुन पठेदित्यर्थः । ननु षट्पदवदुल्लालेन छन्दसा युक्तामिति, तस्मात्सिंहावलोकनन्यायेन निकटवर्तिना पदेन शुद्ध यमकं श्लाघ्यते । तत्राष्टसु पदेषु कियत्यो मात्रा इत्याकाङ्क्षायामाह—चतुश्चत्वारिंशदधिक शतं मात्रा यत्र भवन्ति । सुकविना दृढो बन्धः कथ्यते । दोहाया अष्टचत्वारिंशत्, काव्यस्य षण्णवतिर्मिलित्वा चतुश्चत्वारिंशदधिकशत कलाः तनुभूषणशोभा यस्यास्तां कुण्डलिकां मुणहु जानीत । एतेनाष्टपदी कुण्डलिकेति तात्पर्यार्थः । तथा चोक्तं भूषणे—'कुण्डलिका सा कथ्यते प्रथमं दोहा यत्र। रोलाचरणचतुष्टयं प्रभवति नियतं तत्र ॥ प्रभवति नियत तत्र पदं प्रति सुललितयमकम् । अष्टपदी सा भवति विविधकविकौशलगमकम् ॥ अष्टपदी सा भवति सुखितपण्डितमण्डलिका । कुण्डलिनायकभणितविबुधकर्णे कुण्डलिका ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—(जहा) यथा—

'ढोल्ला मारिअ [3]ढिल्लिमहँ मुच्छिअ मेच्छसरीर,
पुर जज्जल्लामंतिवर चलिअ वीर हम्मीर,
चलिअ वीर हम्मीर पाअभर मेइणि कंपइ,
दिगमग णह अंधार धूलि सुररह आच्छाइहि,
दिगमग णह अंधार आण खुरसाणुकउल्ला,
दरमरि दमसि विपक्खमारु ढिल्लीमहँ ढोल्ला ॥'

[ढोल्ला मारिता ढिल्लीमध्ये मूर्च्छितं म्लेच्छशरीरैः,
पुरो जज्जलमन्त्रिवरश्चलितो वीरो हम्मीरः,
चलितो वीरो हम्मीरः पादभरेण मेदिनी कम्पते,

१. अत्र वृत्तभङ्गभयात्सहिता न विहिता. २ ढोलनाम्ना प्रसिद्धो वाद्यविशेषः. ३ साप्रतं 'दिल्ली' 'देहली' इति वा नाम्ना ख्याता नगरी. 'दिल्लीवल्लभपाणिपल्लवतले' इति पण्डितराजः.

दङ्मार्गे नभस्यन्धकारो धूलिं सूर्यरथमाच्छादयति,
दङ्मार्गे नभस्यन्धकार आनीत खुरासानस्यौल,
विपक्षा गारिता ढिल्लीमध्ये ढोल्हा ॥]

कश्चिद्बन्दी वीरहम्मारप्रयाणमनुवर्णयति—यदैव ढिल्लीमध्ये प्रयाणडिण्डिम समाहतस्त दानीमेव मूर्च्छित म्लेच्छशरीरे। अनन्तर च पुरस्कृतजज्जलमन्त्रिवर चलितो वीरहम्मीर। ततश्च हस्त्यश्वपदातिचरणभरेण मेदिनी कम्पत। दिङ्मार्ग नभसि चान्धकार स्फुरति। धूलि सूर्यरथमाच्छादयति। एव दिङ्मार्गे नभोमार्गे चान्धकारो विस्तृतिमानीत। खुरासानस्य ओलो दण्ड, हे राजन्, त्व चरणमद(द)नेन दमसि(दाम्यसि) विपक्षान्। स्मितु सम्भ्रमेण। एव यस्य तवाहता डिण्डिमो ढिल्लीमध्ये इति। उद्दवणिका यथा— ऽऽऽ, ॥ऽ, ॥।, ऽ॥ऽ, ॥ऽ ।, ॥ऽऽ, ऽऽ, ॥।, ॥ऽ।, ऽऽ, ।, ॥ऽ।, ऽऽ, ।ऽ।, ॥ऽ, ॥ऽ, ॥, ॥॥।, ऽऽ, ।ऽ।, ऽ॥ ॥ऽ, ॥, ॥॥।, ऽऽ, ।ऽ।, ॥ऽ, ॥ऽ, ऽ, ॥॥।, ॥ऽ ।ऽ।, ऽऽ, ॥ऽ, ऽ

उद्दवणिकामत्र स्पष्टीकरोति—

पढमहिं दोहाचारिपअ चउपअ कव्वह देहु।
ईम कुण्डलिआ अट्ठपअ पअ पअ जमअ कुणेहु ॥ ११८ ॥
[प्रथम दोहाचतुष्पद चतुष्पद काव्यस्य दत्त।
एव कुण्डलिकामष्टपदीं पदे पदे यमक कुरुत ॥]

प्रथममेव द्विपथाचतुष्पद ततश्चतुष्पद काव्यस्य दत्त। एव कुण्डलिकामष्टपदीं पदे पदे यमक च कुरुत। दोहा छन्द ॥

पण्डितस्तु आदौ दोहा। तत सोरठा, अथाद्विपरीतदोहा। तत काव्यमिति कुण्डलिकालक्षणमाह। तस्मिन्पक्षे एकशत द्विनवतिमात्रा भवन्ति ॥

अथ गगनाङ्गन छन्द—

पअ पअ ठवहु जाणि गअणगउ मत्तविहूसिणा,
भाअउ वीस करेअ सरअग्गल लहुगुरुसेसिणा।
पढमहि मत्तचारिगण रिज्जइ गणइ पआसिओ
वीसक्खर सभइ पअइ पिअ गुरु अन्त पआसिओ ॥ ११९ ॥
[पद पदे स्थापयत ज्ञात्वा गगनाङ्गन मात्राविभूषित,
भागत विंशति कृत्वा शराधिका लघुगुरुशोभिता।

१ 'भअन (प्रकोप)' ग।

प्रथम चतुर्मात्रिको गण क्रियते गणाः प्रकाशिता ,
विंशत्यक्षराणि सकलेपु पदेपु प्रिये गुररन्ते प्रकाशित ।।]

मात्राविभूपितमिद भवत्सु । कथ्यते इति शेप । अस्य च ज्ञात्वा पद पद स्थापयत । अत्र प्रतिपद विंशति कला शराधिका पञ्चविंशति कला करणीया । लघुगुरुभ्या शेपिता । सर्वत्र पादान्ते लघुगुरू दातव्याविलय । अत्रैव गणनियममाह—चतुर्ष्वपि चरणेपु प्रथम मात्राश्चतस्रो यस्मिनेतादृशश्चतुष्कलो गण कार्य । अग्रे च यथासुख गणै प्रकाशितमक्षरनियममाह—विंशत्यक्षराणि सकलेपु पादेपु तथा चरणचतुष्टय च गुरु , एव यस्य तद्गगनाङ्गन छन्द इति । इदमप्युदाहरणम् ॥

उक्तमेवोद्दवणिका स्पष्टीकृत्याह—

पढमहि चक्कल होइ गण अतहि दिज्जइ हारु ।
वीसक्खर गअणगण मणु मत्त पचीस विआरु ॥ १२० ॥
[प्रथम चतुष्कलो भवति गणोऽन्ते दीयते हार ।
विंशत्यक्षराणि गगनाङ्गन मण मात्रा पञ्चविंशतिर्विचारय ॥]

चतुर्ष्वपि चरणेपु प्रथम चतुष्कलो गण । चरणान्ते हारो गुरुर्देय । अय(त्र) चाक्षराणि विंशति । मण पठ । मात्रा पञ्चविंशति । एव गगनाङ्गन छन्दो विचारय ॥ दोहा छन्द ॥ उद्दवणिका यथा—।।।।, ।।।ऽ।।ऽ।।ऽ।।ऽ।ऽ, ऽ।।, ऽ।।।।।ऽ, ।।।।।ऽ।ऽ, ।।।।, ऽ।ऽ।।ऽ।।।।।ऽ।ऽ, ऽऽ, ।। ।।।।।।।।ऽ।।ऽ।ऽ, वाणीभूपणे तु मात्रागणनियमोऽन्यथा क्षरनियमो नास्तीत्युक्तम् । यथा—'पटकलमादौ विरचय शेपे रगणविभूपितं मध्ये नियमविहीन द्वादशके यतिसगतम् । । फणिपतिपिङ्गलभणित कविकुलहृदयरञ्जनं पञ्चाधिकविंशतिकल वृत्तमिद गगनाङ्गनम् ॥'

गगनाङ्गनमुदाहरति—जहा (यथा)—

भजिअ मलअ चोलवइ णिवलिअ गजिअ गुज्जरा,
मालवराअ मलअगिरि लुक्किअ परिहरि कुजरा ।
खुरसाणा खुहिअ रणमहँ लघिअ अहिअ साअरा,
हम्मीर चलिअ हारव पलिअ रिउगणह काअरा ॥
[भग्नो मलयपतिश्चोलपतिर्निवृत्तो गञ्जितो गुर्जरपति-
र्मालवराजो मलयगिरौ लीन परित्यज्य कुञ्जरान् ।
खुरासानपति क्षोभ प्राप्य रणमध्ये लङ्घते स्माहितसागर
हम्मीरे चलिते हाराव पतितो रिपुगणे कातरे ॥]

भग्नो मलयपति । चोलपतिर्निवृत्त । गञ्जितो गुर्जरपति । मालवराजो मलयगिरौ

लीनः। परित्यज्य कुञ्जरान्। खुरासानाधिपती रणमध्ये खुहिअ विक्षोभ प्राप्य अहितसागर लङ्गते स्म। यद्वा अधिक यथा स्यात्तथा। हम्मीरे चलिते सति हारावो रिपुषु कातरेषु पतित। उट्टवणिका यथा—ऽ।।, ।।।, ऽ।।, ।।।, ।ऽ।, ।ऽ।, ऽ, ऽ।।, ऽ।।, ।।।, ऽ।।, ।।।, ।।ऽ, ।ऽ, ।।ऽ, ऽ।।, ।।।, ।।।, ।।ऽ, ।।ऽ।, ऽ, ऽऽ, ।।।, ।ऽ।, ।।।, ।।।, ।।।, ऽ।, ऽ

अथ द्विपदीछन्दः—

आइग इंदु जत्थ हो पढम हि दिज्जइ तिणि धणुहरं
तह पाइक्कजुअल परिसंठवहु विधिविचित्तसुंदरं।
सरसइ लइअ पसाउ तँह पुहमी करह कइत्त कइअणा
महुरचरणअंत लइ दिज्जसु दोर्पइ मुणहु बुहअणा ॥ १२१॥

[आदिग इन्दुर्यत्र भवति प्रथम हि दीयन्ते त्रयो धनुर्धराः,
तथा पदातियुगल परिसस्थापयन्तु विधिविचित्रसुन्दरम्।
सरस्वत्या गृहीत्वा प्रसाद तत्र पृथिव्या कुरुत कवित्व कविजनाः
मधुरचरणमन्ते दत्थ द्विपदीं जानीत बुधजनाः॥]

आदिस्थ इन्दुः षट्कलो गण प्रथम यत्र भवति। ततो दीयन्ते त्रयो धनुर्धराश्चतुष्कलगणा यत्र। तथा पदातियुगल चतुष्कलयुगल परिसस्थापयन्तु। एवं विधितो विचित्रसुन्दरमिति च्छन्दोविशेषणम्। सरस्वत्या सकाशात्प्रसाद गृहीत्वा तथा पृथिव्या कुरुत कवित्व कविजना। मधुरो गुरुस्त चरणान्ते दत्थ। एतादृश द्विपदीछन्दो जानीत बुधाः। अत्रेद लक्षणद्वय [द्विप]दीद्वयेन ज्ञातव्य न तु पदचतुष्टयम्। द्विपदीति नामविरोधात्तथोदाहरणाच्च। अत्रेन्दुर्यद्यपि लघुद्वयगुरुद्वयात्मकः (।।ऽऽ) षट्कलस्तथापि षट्कलमात्रोपलक्षक लक्ष्ये तथैव दर्शनात्॥

उक्तामेवोट्टवणिकां दोहाछन्दसा स्पष्टीकृत्याह—

छकलु मुह संठाविकहु चकलु पंच करेहु।
अंतहि एकइ हार दइ दोवइच्छंद कहेहु॥ १२२॥

[षट्कलो मुखे सस्थापयित्वा चतुष्कालान्पञ्च कुरुत।
अन्त एक हार दत्वा द्विपदीछन्दः कथयतु॥]

षट्कल मुखे स्थापयित्वा ततश्चतुष्कलान्पञ्चगणान्कुरुत। अन्ते च एकहारो गुरुस्त दत्वा द्विपदीछन्दः कथयतु। भूषणेऽपि—'आदौ षट्कलसगतमेतत्तदनु च पञ्चचतुष्कलम्। गुर्वन्तं द्विपदी भवतीह हि विंशत्यष्टकलदलम्॥' इदमप्युदाहरणम्॥

१ एतत्पूर्वं मूलपुस्तके 'अह दोपई' इति पाठो दृश्यते. २ 'भण फइअणा' इति मूलपुस्तकस्थः पाठः. ३. 'मधुकरचरण पट्पद' इति रविकरव्याख्यानम्. ४. 'ठवेहु' इति मूलपुस्तकस्थः पाठः.

तामुदाहरति—जहा (यथा)—

दाणवदेव वेवि दुक्कतउ गिरिवरसिहर कंपिओ,
हअगअपाअघाअउट्ठंतउ धूलिहि गअणह झंपिओ ॥
('सीतउ सिंधुणीर उच्छलिअइ मेअणिजलहरपूरिओ,
असुरसुरेंदसमरदरसणह तितिहु अणवरचूरिओ ॥')
[दानवदेवौ द्वावपि परस्पर मिलितौ गिरिवरशिखर कम्पितम् ।
हयगजपादाघातोत्थितधूलिभिर्गगनमाच्छादितम् ॥]

दानवदेवौ द्वावपि सग्रामार्थमेकदा परस्पर मिलितौ । अत एव गिरिवरस्य सुमेरो शिखर कम्पितम् । अथ च हयगजपादघातोद्भूतधूलिभिर्गगन च विशेषेण पिहितम् । उद्दवणिका यथा—SIIS, ISI, SS, IIII, IIII, ISI, S, (२८) IIIIS, ISI, ISI, ISI, IIII, ISI, S, (२८)

अथ झुल्लणाछन्द —

पढम दह दिज्जिआ पुण वि तह किज्जिआ
पुण वि दहसत्त तह विरइ जाआ ।
एम परिविविहुदल सत्तसततीसपल
ण्हु कहु झुल्लणा णाअराआ ॥ १२३ ॥
[प्रथम दश दीयन्ते पुनरपि तथा क्रियन्ते
पुनरपि सप्तदश तथा विरतिर्जाता ।
अनेन परदलेऽपि(?) सप्तत्रिंशत्पतन्ति
इमा कथयति झुल्लणा नागराज ॥]

प्रथम दश मात्रा दीयन्ते । अर्थात्तत्र विरति क्रियत । पुनरपि तथा कर्तव्या । पुनरपि सप्तदशमात्रासु विरतिर्जाता च । अनयैव रीत्या दलद्वयेऽपि मात्रा सप्तत्रिंशत्पतन्ति यत्र तामिमां नागराज पिङ्गलो झुल्लणामिति कथयति । इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

सहस मअमत्तगअ लक्खलक्ख पक्खरिअ
साहिदुइ साजि खेल्लत गिंदू ।

१ 'सीतउ–' इत्यादि 'चूरिओ' इत्यन्त पाठश्चैकपुस्तके न दृष्ट

कोप्पि पिअ जाहि तह थप्पि जसविमल महि
जिणइ णहि कोइ तुह तुलुक हिंदू ॥

[सहस्रं मदमत्तगजाँल्लक्षं लक्षं संनद्धा-
न्सज्जीकृत्य साहिद्वयं गेन्दुकमिव खेलति ।
आक्रुश्य प्रिय [याहि] तत्र स्थापयित्वा विमलयशो मह्यां
जेष्यति नहि कोऽपि त्वां तुरुष्को हिन्दू ॥]

सहस्रं मत्तान् नागान् । सहस्रशब्दोऽसंख्यातवाची । लक्षं लक्षं संनद्धानश्ववारान् स-ज्जीकृत्य साहिदुपाति(?) साहिद्वय कन्दुकमिव खेलति । अतिसुन्दरसंगरं रचयतीत्यर्थः । अतो हे प्रिय, आक्रुश्य गल(?) तत्र स्थापयित्वा विमलयशो मह्यां कोऽपि तुरुष्को हिन्दू वा त्वां न जेष्यति । काचिन्महाभटं स्वभर्तारमुत्साहयति ॥ उट्टवणिका यथा—
।।।।ऽ।।, ऽ।।ऽ।।, ऽ।।ऽ।ऽ, ऽ।ऽऽ (३७) ऽ।।ऽ।।, ऽ।।।।।।, ।।।।ऽ।।, ।।ऽऽ (३७).

अथ खञ्जाछन्दः—

धुअ धरिअ दिअवरणवगण कमलणअणि बुह-
अणमण सुहइ जिमि सिसि रअणि सोहए ।
पुण विअ विरइ विहुपअ गअवरगमणि रअण
पर फणिवइ भण सुमरु बुहअणसोहरा ॥ १२४ ॥

[ध्रुवं धृत्वा द्विजवरगणान्नव कमलनयने बुध-
जनमनः सुखयति यथा शशी रजन्यां शोभते ।
पुनरपि विरतिः पदद्वयेऽपि गजवरगमने रगणः
परे फणिपतिर्भणति स्मर बुधजनमनोहरम् ॥]

यत्र निश्चित धृत्वा पूर्वं द्विजवरस्य चतुर्लघुकचतुष्कलस्य नव गणान् हे कमलनयने, विबुधजनमनः सुखयति । जुय (?) च्छन्दः । तत्र यथा शशी रजन्यां शोभते । रगणो नवद्विजगणोपरि शोभते । हे गजवरगमने, पुनरपि विरतिः पदद्वयेऽपि । नव विप्रगणाः पश्चाद्रगण इति खञ्जाछन्दः । वरः श्रेष्ठः फणिपतिर्भणति । [हे] बुधजनमनोमोहकं तत्स्म-रेति । इदमप्युदाहरणम् ॥

एतदेव दोहाछन्दसा स्पष्टीकृत्याह—

विहुदल णव पल विप्पगण जोहल अन्त ठवेहु ।
मत्त इआलिस खंजपअ दह गण तत्थ मुणेहु ॥ १२५ ॥

[दलद्वये नव पतन्ति विप्रगणा जोहलमन्ते स्थापयतु ।
मात्रा एकचत्वारिंशत्खञ्जापदे दश गणास्तत्र जानीत ॥]

यदत्र दलद्वये नव गणा विप्राश्चतुर्लघ्वात्मका पतन्ति । अन्ते जोहल रगण स्थापयतु । सम्भूयैकचत्वारिंशन्मात्रा खञ्जाछन्दस पतन्ति गास्तत्र दश पतन्तीति जानीत । भूषणेऽपि—'द्विजवरनवगणमुपनय तदनु च विमलकमलदलमृदुलसुतनु रगणमिह खञ्जके । द्विदलममलमिति फणिवरनरपतिनिगदित[मिद]मतिशयगुणसहृद[यहृदयसु]रञ्जके ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

अहि ललइ महि चलइ गिरि पलइ [हर खलइ] ससि घुमइ अमिअ
　व[म]इ मुअ[ल] जिवि वुट्ठए ।
पुणु तलइ पुणु [खलइ पुणु ललइ] पुणु घुमइ पुणु वमइ जिविअ विविह
　परिसमर दिट्ठए ॥
[अहिर्ललति मही चलति गिरि[1] पतति [हर स्खलति] शशी घूर्णते अ-
　मृत वमति मृता जीवित्वोत्तिष्ठन्ति ।
पुनस्तरति पुन स्खलति पुनर्ललति पुनर्घूर्णते पुनर्वमति जीविता विविधा
　परितः समरे दृष्टा. ॥]

कस्यचित्समरमनुवर्णयति—परकटकभारेणाहि शेषो ललति चलति । स्थानभ्रष्टो भवतीत्यर्थ । अतएवावष्टम्भकाभावान्मही चलति । तस्मादेकगिरि[1] कैलास पतति । तदाश्रयो हर स्खलति । अत एव शशी घूर्णते । घूर्णनेनामृत वमति । अतोऽमृतसपर्कादेव मृता अपि सुभटा जीवित्वोत्तिष्ठन्ति । ततश्च भूमिस्तादृशभारवती भवति । अत शषाहि पुनरपि तरति । पुन स्खलति । पुनर्ललति । पुनर्घूर्णते । पुनर्वमति । पुनश्च जीविता विविधा. परित समरे दृष्टा भटा । अत्र महीचलने शेषचलन हेतु । कैलासपतने महीचलनमित्युत्तरोत्तर प्रति पूर्वस्य हेतुत्वमिति अलकार । उद्दवणिका यथा—।।।।, ।।।।, ।।।।, ।।।।, ।।।, ।।।, ।।।, ।।।, ।।।, ऽ।ऽ (४१) ।।।, ।।।, ।।।, ।।।, ।।।, ।।।, ।।।, ।।।, ।।।।, ऽ।ऽ (४१)=(८२)

अथ सिक्खा(शिखा)छन्द —

ससिवअणि गअगमणि पअ पअ दिअछगण पअहर ससिख ।
पेंढ पढम लहु[2] विविह पअलि दिअगण अहिअ जअल दल भणइ स
　सिख ॥ १२६ ॥

---

१ 'हर खलइ' इत्येतस्मिन्पुस्तके न वर्तते २ 'पढम विविहिलहु' इति रविकरसमत पाठः, 'प्रथमतो विविधलघून्' इति तच्छाया

[शशिवदने गजगमने पदे पदे द्विजगणषट्कं पयोधरेण सशिखम्।
पठ प्रथमं द्वाभ्यां द्वाभ्यां लघुभ्यां प्रकटितो द्विजगणोऽधिको जगणो दले
भणति तां शिखाम्॥]

हे शशिवदने, हे गजगमने, यत्र पदे पदे द्विजगणषट्कं भवति। तदुपरि पयोधरेण जगणेन सशिखम्। उपरिस्थितजगणमित्यर्थः। एवंविधं प्रथमदलं पठ। पश्चाद्वाभ्यां द्वाभ्यां लघुभ्यां प्रकटितोऽधिक एको द्विजगणो लभ्यते। तेन द्वितीये दले सप्तविप्रगणानन्तरं यत्र जगणो भवति स इति प्रसिद्धः। शेषस्तच्छिखानामकं छन्दो भणति। इदमप्युदाहरणम्॥

उक्तलक्षणमेव गाहूछन्दसाह—

मत्त अठाइस पढमे बीए बत्तीस मत्ताइ।
पअ पअ अंते लहुआ सुद्धा सिखा विआणेहु॥ १२७॥

[मात्रा अष्टाविंशतिः प्रथमे द्वितीये द्वात्रिंशन्मात्राः।
पदे पदेऽन्ते लघुका शुद्धां शिखां विजानीत॥]

यत्राष्टाविंशतिर्मात्राः प्रथमे दले भवन्ति। द्वितीयदले द्वात्रिंशन्मात्राः। पदयोरन्ते लघुर्यत्र तच्छुद्धं शिखाछन्दो विजानीत॥ भूषणेऽपि—'द्विजवरमिह हि रसगुणितमुपनय तदनु जगणमपि विधेहि। स्वरगणितमिह परदलमधिकुरु फणिनरपतिसुभणितरुचिरशिखा हि॥' इदमप्युदाहरणम्॥

तामुदाहरति—जहा (यथा)—

फुल्लिअ महु भमरहु रअणिपहु किरण बहु अवअरु वसंत।
मलअगिरिकुहुर धरि पवण वह सह वत भण सहि णिअल म णाहि कंत॥

[पुष्पिता मधुका भ्रमरा रजनिप्रभोः किरणा बह्वोऽवतरति वसन्तः।
मलयगिरिकुहरं धृत्वा पवनो वहति सहे वत भण सखि निकटे मे नहि कान्तः॥]

काचित्प्रोषितभर्तृका सखीमाह—हे सखि, पुष्पिता मधुका भ्रमराः। स्थिताः पुष्पेषु इति शेषः। किंच रजनीप्रभोश्चन्द्रस्य किरणा बहवो विशेषतः अत्र इदानीं पुनर्वसन्त इत्यतः। परमसंतापका इति भावः। अथ च मलयाचलकटककोटरमभिव्याप्य पवनो वहति। अतएवैतत्सर्वं सोढव्यं कथमिति त्वमेव भण। निकटे नास्ति कान्तः। अतो यद्युचितं भण॥ उद्वणिका यथा—ıııı, ıııı, ıııı, ıııı, ıııı, ıııı, ।ऽı, ıııı, ıııı, ıııı, ıııı, ıııı, ıııı, ।ऽı.

१. 'मुनिगुणितमपर—' इति भूषणस्थः पाठः. २. 'वरफणि—' इति भूषणस्थः पाठः.

अथ मालाछन्दः—

पढमचरण ससिवअणि मिअणअणि णव दिअगण पअल पुण वि
तह रअण ठवहु अंतए कण्णो ।
पिंगलणाअ भणंता माला सेसं पि गाहस्स ॥ १२८ ॥

[प्रथमचरणे शशिवदने मृगनयने नव द्विजगणाः पतन्ति पुनरपि तथा
रगणं स्थापयतान्ते कर्णः ।
पिङ्गलनागो भणति मालां शेषमपि गाथायाः ॥]

हे शशिवदने, हे मृगनयने, कर्णो गुरुद्वयात्मको गणो भवति । शेषं द्वितीयचरण गाथाया अर्धं यस्मिंस्तन्मालाछन्दः पिङ्गलनागो भणति ॥ इदमप्युदाहरणम् ॥

उक्तलक्षणमेव दोहाच्छन्दसाह—

पढम होइ णव विप्पगण जोहल कण्ण ठवेहु ।
गाहा अद्धा अंत दइ मालाछंद कदेहु ॥ १२९ ॥

[प्रथमं भवन्ति नव विप्रगणा जोहलं कर्णं स्थापयत ।
गाथाया अर्धमन्ते दत्वा मालाछन्दः कुरुत ॥]

यत्र प्रथमं नव विप्रगणाः ततो जोहल रगणः पुनर्गुरुद्वयम् । एवं पञ्चचत्वारिंशन्मात्राः, पश्चाद्गाथाया अर्धं सप्तविंशतिर्मात्राः उत्तरार्धे यत्र तन्मालाछन्दः ॥ तथा चोक्तं वाणीभूषणे—'द्विजवरनवगणमतिशयसुरुचिरमिह कुरु तदनु रगणमपि कलय कमलमुखि कर्णवच्छेषे ॥ अपरदलं गाथाया मालावृत्तं विचित्रं तत् ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

वरस जल भमइ घण गअण सिअल पवण मणहरण कणअपि-
अरि णचइ विजुरि फुल्लिआ णीवा ।
पत्थरवित्थरहिअला पिअला णिअलं ण आवेइ ॥

[वर्षति जलं भ्रमति घनो गगने शीतलः पवनो मनोहरणः कनकपीता .
नृत्यति विद्युत्फुल्लिता नीपाः ।
प्रस्तरविस्तारहृदयः प्रियो निकटं नायाति ॥]

काचित्प्रोषितभर्तृका वर्षासमयमालोक्य सखीमाह—हे सखि, वर्षति जलम् । भ्रमति घनः । शीतलः पवनो मनोहरणः । वहति इति शेषः । किं च [क]नकपीता नृत्यति विद्युत् । नीपा [फुल्लिताः] एवंविधेऽपि समये जाते प्रस्तरविस्तारहृदयो महापाषाणहृदयः प्रिय इ-

१. 'पवित्रम्' इति वाणीभूषणस्थः पाठः.

दानीमपि नायाति। अत' किं विधेयमुपदिशेति व्यज्यते॥ उद्दवणिका यथा—।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ऽ।ऽ, ऽऽ, (४५) ऽ।।, ऽ।।, ।।ऽ, ।।ऽ, ।।ऽ, ऽ।ऽ, ऽ (२७).

अथ चुलिआलाछन्द —

चुलिआलापइ देह किमु दोहा उप्परि मत्तह पंचइ।
पअ पअ उप्पर संठवहु सुद्ध कुसुमगण अंतह दिज्जइ॥१३०॥

[चुलिआलाप देदीयन्ते किमु दोहोपरि मात्राः पञ्च।
पदे पद उपरि स्थापयन्तु शुद्ध कुसुमगणोऽन्ते दीयते॥]

तच्चुलिआलानामक छन्द। यदि दोहाया उपरि पञ्च मात्रा अधिका दीयन्ते। तदेवाह—पदे पदे उपरि शुद्ध' कुसुमगण एको लघु, ततो गुरु', ततो लघुद्वयम्। एवंरूप पञ्चकल स्थापयन्तु। 'पदे पदे' इत्युक्ते दोहापदचतुष्टयेऽपि पञ्चकलदान ·····आह—सपञ्चकलो गणोऽन्ते द्विपदाप्रथमदलान्ते चरमदलान्ते च दीयते। एतेनार्धे ऊनत्रिंशन्मात्रा भवन्ति। एव दलाभ्यामष्टपञ्चाशन्मात्राश्चुलिआलाछन्दसो भवन्ति॥ इदमप्युदाहरणम्॥

उक्तलक्षणमेवाह—

दोहासंखा संठवहु उप्परि पंचइ मत्त।
अट्ठदहप्पइ वीस दुइ चुलिआला उक्खित्त॥१३१॥

[दोहासख्या सस्थापयन्तु उपरि पञ्च मात्राः।
अष्टादशोपरि विंशतिद्वयं चुलिआलाख्याता॥]

दोहासख्या सस्थापयन्तु। उपरि पञ्चैव मात्रा। एवमष्टादशोपरि चत्वारिंशन्मात्रा समूयाष्टपञ्चाशन्मात्राभिश्चुलिआला आख्याता॥ भूषणेऽपि—'दोहादलशेषे यदा पञ्चकलो विमलो हि विराजति। फणिवरनृपति. त्रिल तदा चुलिआलामिह तामनुगायति॥' इदमप्युदाहरणम्॥

तामुदाहरति—जहा (यथा)—

राआ लुद्ध समाज खल बहु कलिहारिणि सेवक धुत्तउ।
जीअण चाहसि सुक्ख जइ परिहरु घर जइ बहुगुणजुत्तउ॥

[राजा लुब्धः समाज. खल. वधूः कलहकारिणी सेवको धूर्त.।
जीवनं प्रार्थयसे सुख यदि परिहर गृह तर्हि बहुगुणयुक्त॥]

१. एतट्टीकानिर्मातृ-लक्ष्मीनाथभट्टलिखितवाणीभूषणपुस्तके 'चुलिआला' इति सानुनासिक' पाठ उपलभ्यते, अन्यत्र 'चुल्लिआ, चुलिआलाला' इति पाठभेद'.

हे मित्र, राजा [लु]ब्ध', समाजः खलः, वधूः कलहकारिणी, सेवको धूर्तः, एव सति यदि जीवन सुखरूप प्रार्थयसे तर्हि गृह परिहर । विरज्य सन्यास कुरु । इति कश्चिद्गृहस्थं प्रति मित्रमाह । उद्दवणिका यथा—SSS, IIS, III, IIIIS, IIS, I, ISII, SIIS, IIS, III, IIIII, IIII, I, ISII, इति पद्मावतीछन्दः ॥

अथ सोरट्ठा छन्दः—

सो सोरट्ठउ जाण जं दोहा विपरीअ ठिअ ।
पअ पअ जमक वखाण णाअराअ पिंगल कहइ ॥ १३२ ॥
[तां सोरट्ठा जानीहि या दोहा विपरीता स्थिता ।
पदे पदे यमकं व्याख्याहि नागराजः पिङ्गलः कथयति ॥]

ता सोरट्ठा जानीहि । या विपरीतैव दोहा स्थिता । तत्र च पदे पदे यमक व्याख्येहि । इति नागराजपिङ्गल. कथयति । प्रथमचरणे एकादश, द्वितीये त्रयोदश, तृतीये एकादश, चतुर्थे त्रयोदशेति । भूषणेऽप्युक्तम्—'तत्सोरट्ठावृत्तममलमुरगपतिरिति वदति । यद्दोहाविपरीतमिह जनहृदि मुदमुपनयति ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

सो माणिअ पुणवंत जासु भत्त पंडिअ तनअ ।
जासु घरिणि गुणमंति सो वि पुहवि सग्गहणिलअ ॥
[स मान्यते पुण्यवान्यस्य भक्तः पण्डितस्तनयः ।
यस्य गृहिणी गुणवती सोऽपि पृथिव्या स्वर्गनिलयः ॥]

कश्चित्कस्मैचिच्छ्लाघते—स एव मान्यते पुण्यवान् यस्य तनयो भक्तः, अर्थात्पितु', पण्डितश्च । यस्य च गृहिणी गुणवती स तु पृथिव्यामपि वर्तमान स्वर्गनिलयोऽमरो भवति । उद्दवणिका यथा—SSIIIIS। (११) SISISIIII (१३) SIIIIISI (११) SIIIISIIII (१३)

अथ हाकलिछन्द —

सगणा भगणा दिअगणइ मत्त चउद्दह पअ पलइ ।
संठइ वंको विरइ जहा हाकलिरूअह एहु कहा ॥ १३३ ॥
[सगणो भगणो द्विजगणो मात्राश्चतुर्दश पदे पतन्ति ।
संस्थाप्य वक्रं विरतौ यथा हाकलिरूपमिद कथितम् ॥]

यत्र सगणो गुर्वन्तश्चतुष्कल भगणो गुर्वादि, द्विजगणश्चतुर्लघ्वात्मकश्च । अत एव व्यस्तसमस्ता गणा भवन्ति । अन्ते वक्र गुरमेक सस्थाप्य मात्राश्चतुर्दश मिलिता वर्णाश्चैकादश पदे पदे उत्तरार्धे दश पतन्ति, तदिद हाकलिच्छन्दोरूप कथितम् । इदमप्युदाहरणम् ॥

उक्तलक्षणमेव साक्षरनियममाह—

मत्त चउद्दह पअ पअह एग्गारह वण्णेहि ।

दह अक्खर उत्तरदलहि हाकलिछंद कहेहि ॥ १३४ ॥

[मात्राश्चतुर्दश पदे पदे एकादशभिर्वर्णैः ।

दशाक्षराण्युत्तरदले हाकलिच्छन्दः कथय ॥]

यत्र मात्राश्चतुर्दश पदे पतन्ति, एकादशवर्णैश्च पूर्वदलम्, दशाक्षरैरुत्तरदल यत्र तद्धाकलिच्छन्दः कथय ॥ वाणीभूषणे त्वक्षरनियमो नोक्तः । 'द्विजगणसगणभगणकलिता, भवति चतुर्दशकलकलिता । अन्ते गुरुमुपधाय सदा, हाकलिरेषा भवति तदा ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

उच्चउ छावणि विमल घरा तरुणी घरिणी विणिअपरा ।

वित्तकपूरल मुंदहरा वरिसासमआ सुक्खकरा ॥

[उच्चा छदिर्विमलं गृहं तरुणी गृहिणी विनयपरा ।

वित्तपूरितं मूलगृहं वर्षासमयाः सुखकराः ॥]

उच्चा छदिः विमल गृह विनयपरा तरुणी चेद्गृहिणी यस्य वित्तैः पूरित मूलगृह तस्य वर्षासमयाः सुखकरा भवन्ति । इति दरिद्रवचन वयस्य प्रति । उट्टवणिका यथा—
SIISIIIIIS, IISIISIIIS, SIISIISIIS, IISSIISIIS.

अथ मधुभारच्छन्दः—

जसु पलइ सेकल पअहर एक्क ।

चउमत्त तेअ महुभार एअ ॥ १३५ ॥

[यस्य पतति शेषे पयोधर एकः ।

चतुर्मात्रिकास्त्रयो मधुभार एषः ॥]

यस्य पतति शेषे दलद्वयान्ते पयोधर एकः । जगण एकः । पततीत्यर्थः । तत्पश्चाच्चतुर्मात्रिका गणास्त्रयो यत्र तन्मधुभारच्छन्दः । वाणीभूषणे तु गणनियमो यद्यपि दर्शितस्तथापि चतुष्कलमात्रे पर्यवसन्नो ज्ञेयः । 'सगणं निधाय जगणं विधाय । श्रुतिमीरधाम मधुभारनाम ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

जसु चंद सीस पिधणह दीस ।

सो संभु एस तुह सुब्भ देऊ ॥

---

१. 'सुब्भ' रवि०.

[यस्य चन्द्रः शीर्षे विधानं दिशः ।
स शंभुरेष तुभ्यं शुभं ददातु ॥]

यस्य चन्द्रः शीर्षे । यस्य परिधानं दिशः । स शंभुरेष तुभ्यं शुभं ददात्विति । उद्दवणिका [यथा]—।।ऽ, ।ऽ।, ऽ।।, ।ऽ। ऽऽ, ।ऽ।, ।।ऽ, ।ऽ।.

अथाभीरच्छन्दः—

गारह मत्त करीज अंत प[ओ]हर दीज ।
एहु सुछंद अहीर जंपइ पिंगलवीर ॥ १३६ ॥
[एकादश मात्राः क्रियन्तेऽन्ते पयोधरो दीयते ।
एतत्सुच्छन्द आभीरं जल्पति पिङ्गलवीरः ॥]

यत्रैकादश मात्राः प्रतिपदं क्रियन्ते । यत्र चान्ते जगणो दीयते । एतच्छन्द आभीरनामकमिति जल्पति पिङ्गलः । भूषणेऽपि—'एकादशकलधारि कविकुलमानसहारि । इदमाभीरमवेहि जगणमन्तमभिधेहि ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

सुंदरि गुज्जरि णारि लोअण दीहविसारि ।
पीनपओहरभार लोलइ मोत्तिअहार ॥
[सुन्दरी गुर्जरी नारी [3]लोचने दीर्घविसारिणी ।
पीनपयोधरभारे लुठति मौक्तिकहारः ॥]

उद्दवणिका यथा—ऽ।।ऽ।।ऽ।, ऽ।।ऽ।।ऽ।, ऽ।।ऽ।।ऽ।, ऽ।।ऽ।।ऽ।.

अथ दण्डकलाछन्दः—

कुंतअरु धणुद्धरु हअवरु गअवरु छक्कलु विविपाएक्कदले
बत्तीसमत्तह पअसु पसिद्धह जाणह बुहअणा हिअअतले ।
सउवीहट्टग्गलकल संपुणउरूअ फणिभासिअ भुअणे
दंडअल णिरुत्तउ गुरुसंजुत्तउ पिंगलणाअ जवंतं मणे ॥ १३७ ॥
[कुन्तकरो धनुर्धरो हयवरो गजवरः षट्कलः पदातिद्वयमेकदले
द्वात्रिंशन्मात्राः पदेषु प्रसिद्धा जानीत बुधजना हृदयतले ।
अष्टाविंशत्यधिकशतकलं संपूर्णरूपं फणिभाषितं भुवने
दण्डकलं निरुक्तं गुरुसंयुक्तं पिङ्गलनागो जल्पति ······ ॥]

१. 'ग्गरह' रवि०. 'एदा एकादश' इति तदर्थे. २. अस्योदाहरणस्य व्याख्या लक्ष्मीनाथ-रविकरकृतयोर्व्याख्ययोर्नास्ति. ३. अत्र 'यस्याः' इत्यासञ्जनीयम्.

कुन्तकरः, धनुर्धरः, हयवरः, गजवरः, चतुष्कलाश्चत्वारो गणाः ततः षट्कलो गणः, ततः पदातिद्वयं चतुष्कलगणद्वयम्, अन्ते गुरुरिति द्वात्रिंशन्मात्राः पदेषु प्रसिद्धा जानीत बुधजना हृदयतले । समुदितमात्रासंख्यामाह—अष्टाविंशत्यधिकशतकलाः संपूर्णा यस्मिंस्तद्रूपं फणिभाषित भुवने लोके दण्डकलेति निरुक्तं गुरुसंयुक्तमिदं छन्दः पिङ्गलो जल्पति । इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

राअहं भग्गं तादिअ लगंता परिहरि हअगअघरघरिणी
लोरहिं भरु सरवरु रुअइ अरुअवरु लोट्टइ पिट्टइ तणु[1] धरणी।
पुणु उट्ठइ संभलि करदत्तंगुलिबालतनयकरजमलकरे
कासीसर राआ णेहलुकाआ करमाआ पुणु थप्पि धरे ॥

[राजानो भग्ना दिक्षु लग्नाः परिहृत्य हयगजगृहगृहिणीः
अश्रुभिर्भृताः सरोवरा रोदिति[2]......लुठत्याहन्ति तनुं धरण्याम् ।
पुनरुत्तिष्ठत्यवधार्य करदत्ताङ्गुलिबालतनयकरयमलकरा
काशीश्वरो राजा स्नेहलकायः करमायां पुनः स्थापयित्वा धृतवान् ॥]

कश्चिद्बन्दी काशीश्वराहितानां पलायनमनुवर्णयति—हे काशीपते, तवाहिता राजानो भग्नाः पलायिता अतएव दिक्षु लग्नाः । किं कृत्वा । हयगजगृहगृहिणीः परित्यज्य । अथ च तासां पुरंध्रीणां लोहराहिं अश्रुभिः सरोवराः कासारा भृताः पूर्णाः । तन्मध्ये पट्टमहिषी काचिद् धरण्यां लुठति, रोदिति, तनुमाहन्ति, पुनरप्युत्तिष्ठति, संभलिअ अवधार्य । कथंभूता । करे दत्ताङ्गुलेर्बालस्य तनयस्य करयमले करद्वये करो यस्याः । स्वकरेण विधृतबालकरद्वयेत्यर्थः । एवं जाते सति काशीश्वरो राजा स्नेहलः स्नेहयुक्तः कायो यस्य । करेण दण्डेन पुनर्माआं दयां स्थापयित्वा धृतवान् शत्रुराज्यमित्युपरिष्टादेतेन दण्डं गृहीत्वा तांश्च राज्ये प्रतिष्ठापयामास ॥ उद्दवणिका यथा— SISSSIIISSSIIIIIIIIIIS, SIIIIIIIIIIIIIISIISIIIIIS, IISIISIIIISSIISIIIIIIIIS, SSIISSSIISSIISSIISIIS.

अथ दीपकछन्दः—

सिर देहु चउमत्त लहु एक तंसु अंत ।
दंतेक तसु मज्झ दीपक सोइ बुज्झ ॥ १२८ ॥

[शिरसि देहि चतुर्मात्रं लघ्वेकं तस्यान्ते ।
दन्तमेकं तयोर्मध्ये दीपकं तद्बुध्यस्व ॥]

आदौ चतुर्मात्रं गणं देहि । तस्यान्ते एकं लघु देहि । ततस्तयोश्चतुष्कलमध्ये...प्रय-

१. 'कर' रवि०. 'कुरु' इति तच्छाया. २. अत्र त्रुटिता टीकेति भाति.

…पुष्यस्व । तदुक्तं भूषणे—'तुरगैकमुपधाय सुनरेन्द्रमवधाय । इह दीपकमवेहि लघुमन्तमभिधेहि ॥' इदमप्युदाहरणम्—जहा (यथा)—

जसु हत्थ करवाल विप्पक्खकुलकाल ।
सिर सोह वरछत्त संपुण्णससिवत्त ॥

[यस्य हस्ते करवालो विपक्षकुलकालः ।
शिरसि शोभते वरच्छत्रं संपूर्णशशिवत् ॥]

यस्य राज्ञो हस्ते करवालः खड्गः शोभते । कीदृशः । शत्रुकुलकालकल्पः । यस्य च शिरसि वरमुत्तम छत्र शोभते संपूर्णशशिवत् ॥ उद्दवणिका यथा—॥SIIISISSIIISI, ॥SIIISISSIIISI.

अथ सिंहावलोकच्छन्दः—

गण विप्प सगण धरि मत्त कअं
भणु सिंघवलोअणु छंदु धुअम् ।
गुणिगण मण बुज्झहु णाअ भणा
तसु जगणु ण भगणु ण कण्णगणा ॥ १३९ ॥

[विप्रगणसगणौ धृत्वा षोडश मात्रा
भणन्तु सिंहावलोकनं छन्दो ध्रुवम् ।
गुणिगणा मनसि बुध्यध्वं नागो भणति
यस्य जगणो न भगणो न कर्णगणः ॥]

भो गुणिगणाः, विप्रसगणाभ्यामेव प्रतिपद षोडश मात्रा धृत्वा भणन्तु सिंहावलोकनं छन्दः । ध्रुवं निश्चितं बुध्यध्वम् । नागो भणति । अत्र न जगणो न भगणो न च कर्णगणो भवति । व्यस्तसमस्ताभ्यां विप्रगणाभ्यामेव षोडशकल सिंहावलोकनं छन्दो भवति । एतच्च शृङ्खलानन्धनक्रमेण चरणान्तवर्णद्वयावलम्बनेन भवतीति ज्ञेयम् । तथा चोक्तं वाणीभूषणेऽपि—'शृणु सिंहावलोकितवृत्तवर वरयमकमनोहरचरणधरम् । धरणीपतिमानसमधिकलितं किल वेदचतुष्कलगणललितम् ॥' इदमप्युदाहरणम् ॥

उक्तामेवोद्दवणिकां स्पष्टीकरोति—

विप्पसगण पअ वेवि गण अंत विसज्जहि हार ।
पच्छा हेरि कइत्त करु सोलह कल पत्थार ॥ १४० ॥

[विप्रगणसगणौ पदे द्वावप्यन्ते विसृज हारम्।
पश्चाद्दृष्ट्वा कवित्वं कुरु षोडश कलाः प्रस्तारे ॥]

अत्र छन्दसि विप्रगणसगणावेव द्वौ गणौ पदे पततः। ततोऽन्ते हारं गुरुं विसर्जय। सगणस्यान्ते गुरुत्वात् सगण एव पदान्ते देय इत्यर्थः। छन्दसोऽन्वर्थकतामाह—पदान्ते यदक्षरद्वयं तदेवाग्रिमपदादौ देयमित्यर्थः। अत एव सिंहावलोकनमिति ॥

तामुदाहरति—जहा (यथा)—

हणुउज्जरगुज्जरराअदलं
दल दलिअ चलिअ मरहट्ठबलम्।
बल मोलिअ मालवराअकुला
कुल उज्जल कलचुलि कण्ण फुला ॥

[हतमुज्ज्वलगुर्जरराज्यदलं
दलेन दलितं चलितं महाराष्ट्रबलम्।
बलेन मोटितं मालवराजकुलं
कुलोज्ज्वलः कलचुलिः कर्णः स्फुरति ॥]

कश्चित्कर्णमुपवर्णयति—हतमुज्ज्वलमतिस्फीतं गुर्जरराज्यस्य दलं सैन्यम्। येन दलेन स्वसेनासमुदायेन दलितं चूर्णीकृतम्, अत एव चलितं महाराष्ट्राणां बलं कटकम्। येन बलेन बलात्कारेण मोटितमुत्खातं मालवराजस्य कुलम्। एवंविधः कुलोज्ज्वलः कलचुलिवंशोद्भव कर्णः फुला स्फुरति। अथवा स्फुटं सत्यम्। कर्ण एव कलावतीर्ण इति भावः॥ उद्दवणिका यथा—॥ऽ॥ऽ॥ऽ॥ऽ, ॥॥॥॥ऽ॥ऽ, ॥ऽ॥ऽ॥ऽ॥ऽ, ॥ऽ॥॥॥ऽ॥ऽ

अथ प्लवंगमच्छन्दः—

जत्थ पढम छअमत्त पअ प्पअ दीसए
पंचमत्त चउमत्त गणा णहि किज्जिए।
संभलि अंत लहू गुरु एक्क चाहए
मुद्धि पवंगमछंद विअक्खण मोहए ॥ १४१ ॥

[यत्र प्रथमं षण्मात्रः पदे पदे दृश्यते
पञ्चमात्रश्चतुर्मात्रो गणो नहि क्रियते।
संस्मृत्यान्ते लघुर्गुरुरेकोऽपेक्ष्यते
मुग्धे प्लवंगमच्छन्दो विचक्षणान्मोहयति ॥]

एतस्यैव चतुर्थचरणादी परहा इति बन्दिन पठन्ति (?)। हे मुग्धे, यत्र प्रथम पण्मात्रो गण' पदे पदे दृश्यते । ततश्च पञ्चमात्रश्चतुर्मात्रो गणो नान्यत्र क्रियते । अथ सस्मृत्यान्ते पदान्ते लघुर्गुरुश्च एकैकस्य चरणस्यान्ते चाहए अपेक्षते । एवमुक्तलक्षण तत्प्लवगमाख्य छन्दो विचक्षणान्मोहयतीति । भूषणेऽपि—'षट्कलमादिगुरु प्रथम कुरु सतत पञ्चकल च ततोऽपि चतुष्कलमगतम् । नायकमत्र चतुर्थमितो गुरुमन्तके एकाधिकविंशतिः प्लवगमवृत्तके ॥' इदमप्युदाहरणम् ॥

उक्तमेव लक्षण विशदीकृत्याह—

पअ पअ आइहि गुरुआ पिंगलए भणेइ सअलणिब्भंता ।
छंद पवंगम दिट्ठो मत्ताणं एअवीसत्ता ॥ १४२ ॥

[पदे पद आदौ गुरु पिङ्गलो भणति सकलनिर्भ्रान्तः ।
छन्दः प्लवंगम दृष्टं मात्राणामेकविंशतिः ॥]

............... ........सकलेषु सत्कारेषु निर्भ्रम पिङ्गलो भणति । तन्मात्राणामेकविंशत्या दृष्ट प्लवगमाख्य छन्दो भवति । गाथा छन्द ॥

तमुदाहरति—जहा (यथा)—

णच्चइ चंचल विज्जुलिआ सहि जाणए
मम्मह खग्ग किणीसइ जलहरसाणए ।
फुल्ल कलंबअ अंबरडंबर दीसए
पाउस पाउ घणाघण सुमुहि वरीसए ॥

[नृत्यति चञ्चला विद्युत्सखि जानीहि
मन्मथखड्गकणिका सजलधरशाणके ।
पुष्पिताः कदम्बा अम्बरडम्बरो दृश्यते
प्रावृट् प्राप्ता घनाघन सुमुखि वर्षति ॥]

काचित्प्रोषितपतिका सखीमाह—हे सखि, नृत्यति चञ्चला विद्युत् । उतान्यत्किंचिदेतदिति जानीहि । अह लेव मन्ये । मन्मथखड्गकणिका सजलधरशाणके इति । अपि च पुष्पिता कदम्बा । अम्बरडम्बरो मेघाडम्बरो दृश्यते । अतः प्रावृट् प्राप्ता । हे सुमुखि, घनाघनो वर्षुकघनो वर्षतीति वाकोवाक्यम् ॥ उट्टवणिका यथा—SIISII-SIISIISIS, SIISIISIIIIISIS, SIISIISIISIISIS, SIISIISIIIIISIS, इति सोरठा प्रकरणम् ॥

---

१. 'वाकोवाक्यमुक्तिप्रत्युक्ति' इति प्रकृतपदव्याख्याने व्याकरणभाष्यप्रदीपे कैयटः.

अथ लीलावतीछन्दः—

गुरु लहु णहि णिम्म णिम्म णहि अक्खर पलइ पओहर विसम समं
जहि कहू णहि णिम्म तरलतुरअ जिमि पसर विदिस दिस अगमगमम्।
गण पंच चउक्कल पलइ णिरंतर अंत सगण धुअ कण्णगणं
परिचलइ सुपरिलील लिलावइ कलवतीमु विसाम करम् ॥ १४३ ॥

[गुरौ लघौ नहि नियमो नियमो नह्यक्षरे पतति पयोधरो विषमे समे,
यत्र कोऽपि नहि नियमस्तरलस्तुरगो यथा प्रसरति विदिशि दिश्यगम्ये गम्ये।
गणाः पञ्च चतुष्कलाः पतन्ति निरन्तरमन्ते सगणो ध्रुवं कर्णगणः,
परिचलति सुपरिलील्या लीलावती द्वात्रिंशत्कलासु विश्रामं करोति ॥]

यत्र छन्दसि लघौ गुरौ वा नियमो नास्ति। अक्षरेऽपि न नियमः। अत्र विषमे चरणे जगणः समेऽपि पयोधरो जगणः पतति। अत्र कोऽपि नियमो नास्तीत्यर्थः। तरलस्तुरगो यथा प्रसरति दिक्षु विदिक्षु अगम्ये गम्ये च। स्थले इति शेषः। तथा सुतरां परितो लीलया समन्ततः खेलया इयं लीलावती परिचलति। करः कर्णौ द्विजगणो भगणो जगण इति चतुष्कलाः पञ्चापि गणा निरन्तरमेकोपक्रमेण पतन्ति। तत्रान्ते ध्रुवं निश्चित स•••दिव्यगणो भवति। किंच सा लीलावती द्वात्रिंशत्कलासु विश्रामं करोति। लघुगुर्वनपेक्षया गणेऽपि निगमो नास्ति। यथाकथंचिद्द्वात्रिंशत्कलाः पूरयितव्याः। तथा च भूषणे—'लघुगुरुवर्णनियमविरहितमिह हि सुकलय चतुष्कलमष्टगण द्वात्रिंशत्कलविरचितमिदमतिशयसहृदयहृदयदुःखहरणम्। लीलावतिका भवति च करकर्णद्विजगणभगणजगणकलिता फणिनायकपिङ्गलविरचितमद्भुतवृत्तममलगुम्फनललिता ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

घर लग्गइ अग्गि ज्जलइ धहधह कइ णह पह दिगमग अणलभरे
सवदेस पसरि पाइक्क लुरइ धणि थण हरजहण दुहाव करे।
भअ लुक्किअ थक्किअ वैरितरणिगण भेरवभेरिअसद्द पले
महि लुट्टइ पट्टइ रउसिर तुट्टइ जक्खण वीर हमीर चले ॥

[गृहेषु लग्नोऽग्निर्ज्वलति धहधहं कृत्वा नहि पन्था दिङ्मार्गोऽनलभृतः,
सर्वदेशे प्रसृतः पदातिश्चलति धनीनां स्तनौ गृहाज्जघनाद्द्विधा करोति।
भयेन लीनाः श्रान्ता वैरितरुणीगणा भैरवभेरीशब्दे पतिते,
मह्यां लुठति आहन्ति रिपुशिरस्त्रोटयति यस्मिन्क्षणे वीरो हम्मीरश्चलितः]

कश्चिद्वन्दी हम्मीरप्रयाणं वर्णयति—यस्मिन्क्षणे वीरो हम्मीरश्चलितस्तस्मिन्क्षणे शत्रुगृहेषु लग्नोऽग्निः धहधहेति कृत्वा ज्वलति । नास्ति पन्थाः कुत्रापि । दिङ्मार्गोऽनलेन भृतः । 'णह पह' इति क्वाचित्कः पाठः । तत्र नभःपथोऽनलेन भृतः । तस्मिन्नेव च क्षणे सर्वदेशे प्रसृतः पदातिश्चलति । यः पदातिवर्गघनीनां शत्रुवधूनां स्तनौ गृह्णन् जघनादि द्विधाकरोति । 'घण' इति पाठे घण्णं स्तनौ इति सपदातिश्चलतीति । यस्य हम्मीरस्य भैरवभेरीशब्दे पतिते सति पलायमानवैरितरुणीगणाः श्रान्ताः सन्तो भयेन क्वचिन्निलीनाः । रिपुरपि मह्यां लुठति । शिरः पिट्टइ । आहन्तीत्यर्थः । त्रोटयति । केशानिति शेषः ॥ उद्वणिका यथा—IIऽ, IIऽ, IIII, IIII, IIII, IIII, IIII, IIऽ, (३२) IIऽ, IIII, ऽऽ, IIII, IIII, IIII, IIऽ, IIऽ, (३२) IIऽ, IIऽ, IIऽ, IIII, IIऽ, IIऽ, IIऽ, IIऽ, (३२) IIऽ, IIऽ, IIII, IIऽ, IIऽ, IIऽ, IIऽ, IIऽ, (३२) ॥

अथ हरिगीताछन्दः—

गणचारि पंचकल ठविज्जसु बीअठाअहि छक्कलो
पअ पअह अंतहि गुरु करिज्जसु वण्णणेण सुसव्वलो ।
दह चारि दुक्कइ दहहु माणहु मत्त अठइस पाअ भो
हरिगीअ छंद पसिद्ध जाणहुं पिंगलेण पआसिओ ॥ १९४ ॥

[गणांश्चतुरः पञ्चकलान्स्थापयत द्वितीयस्थाने षट्कलः
पदे पदेऽन्ते गुरुं कुरुत वर्णनेन सुसर्वलम् ।
दश चत्वारो द्वौ दश द्वौ मानयत्तु मात्रा अष्टाविंशतिं पादे
हरिगीताछन्दः प्रसिद्धं जानीत पिङ्गलेन प्रकाशितम् ॥]

भोः शिष्याः, गणांश्चतुरः पञ्चकलान् स्थापयत । द्वितीयस्थाने षट्कलं कुरुत । प्रतिपदमन्ते चैकं गुरुं कुरुत । छन्दः वर्णनेन सुतरां सर्वं लातीति तादृशम् । तत्र चरणेषु मात्रानियममाह—दश, चत्वारः, द्वौ, दश, पुनर्द्वौ, एतत्सर्वं मिलित्वा पादे अष्टाविंशन्मात्रा इति मानयन्तु । तदेतच्छन्दो हरिगीतानामकं प्रसिद्धं पिङ्गलेन प्रकाशितं जानीत ॥ भूषणेऽपि—'इन्द्रासनं प्रथमं विसर्जय तदनु संचिनु षट्कलं ननु तदनु पञ्चकलत्रयं किल कुरु विरामे कुण्डलम् । अष्टाधिकामिह विंशतिं च कलाः कलावति सुन्दरं हरिगीतमिति हरिगीतकं वरवृत्तमतिरसमन्दिरम् ॥' इदमप्युदाहरणम् ॥

उक्तलक्षणमेवाह—

बीए छकलु एक कहु चारि पञ्च कल देहु ।
बारहउँत्तर मत्त सउ माणसु अन्त ठवेहु ॥ १४८ ॥

---

१. 'उप्पर मत्त स ए' रवि०.

[द्वितीये षट्कलमेकं कथयन्तु चत्वारः पञ्चकला देयाः।
द्वादशोत्तरं मात्राः शतं मानसमन्ते स्थापयत ॥]

द्वितीयस्थाने एक षट्कलं कथयन्तु। अवशिष्टाश्चत्वारः पञ्चकला गणा देयाः। पिण्डसंख्यामाह—द्वादशोत्तर शत मात्राः। पादचतुष्टयेऽपि मानसमेक गुरुमन्ते स्थापयत। तेन प्रतिपदमष्टाविंशतिर्मात्राः ॥

तामुदाहरति—जहा (यथा)—

गअ गअहि ढुक्किअ तरणि लुक्किअ तुरअ तुरअहि जुज्झिआ
रह रहहि मीलिअ धरणि पीडिअ अप्प पर णहि बुज्झिआ।
बल मिलिअ आइअ पत्ति धाइउ कम्पि गिरिवरसीहरा
उच्छलइ साअर दीण काअर वइर वड्डिअ दीहरा ॥

[गजा गजैर्युक्ता तरणिर्निलीनस्तुरगास्तुरगैर्युयुधिरे
रथा रथैर्मेलिता धरणी पीडिता आत्मीयाः परे नहि बुद्धाः।
बलानि मिलितानि पत्तयो धाविताः कम्पितानि गिरिवरशिखराणि
उच्छलति सागरो दीर्णाः कातरा वैरं वर्धितमतिदीर्घम् ॥]

कश्चिद्बन्दी सकुल युद्धमनुवर्णयति—गजा गजैर्युक्ता., तरणिर्धूलिभरेण निलीनः, तुरगास्तुरगैः सह युयुधिरे, रथा रथैर्योजिताः। अत एव धरणी पीडिता। तस्मिन्समये आत्मीयाः परकीयाश्च न ज्ञाताः। अथ च बलानि मीलिअ परस्परमेकीभूतानि। पदातयस्ततो धाविताः, अत एवातिभरेण कम्पितानि च गिरिवरशिखराणि। उच्छलति च सागरः। कातर्येण दीना दीर्णाः। कातरा इति वा। वैरमतिदीर्घं वर्धितम् ॥ उट्टवणिका यथा—IIII, SIII, SII, IIII, ISII, S, (२८) IIII, SIII, ISII, SIII, IIIS, S, (२८) IIII, SIIS, ISII, SII, IISI, S, (२८) SII, SIIS, ISII, SIS, IISI, S, (२८)॥ यथा वा ग्रन्थान्तरस्थमुदाहरणम्—'सखि यम्भ्रमीति मनो भृश जगदेव शून्यमवेक्ष्यते परिभिद्यते मम हृदयमर्म न शर्म सम्प्रति वीक्ष्यते। परिहीयते वपुषा भृश नलिनीव हिमततिसंगता रुदती परं वदतीति सा सुदती रतीशवशं गता ॥'

अथ तिहभङ्गी(त्रिभङ्गी)छन्दः—

पढमं दह रहणं अट्ठइ रहणं पुणु वसु रहणं रस रहणं
अन्ते गुरु सोहइ तिहुअण मोहइ सिद्ध सराहइ वरतरुणम्।

१. 'णिअ ण पर अ ण' रवि०. २. 'मिल पलाइउ पत्ति जाइउ' रवि०. ३. 'पुणि' रवि०. ४. 'मट्टेअल' रवि०. ५. 'सिद्धसरोह (सिद्धैः सरोवर)' रवि०.

जइ पलइ पओहर किमइ मणोहर हरइ कलेवर तासु कई ।
तिब्भङ्गी छन्दं जाणि आणन्दं भणइ फणिन्दो विमलमई ॥१४६॥

[प्रथमं दशसु विश्रामोऽष्टसु विरतिः पुनर्वसुषु विरती रसेषु विरति-
रन्ते.गुरुः शोभते त्रिभुवनं मोहयति सिद्धः श्लाघते वरतरुणः ।
यदि पतति पयोधरः किमिदं मनोहरं हरति कलेवरं तस्य कवेः
त्रिभङ्गी छन्दो जानीतानन्दं भणति फणीन्द्रो विमलमतिः ॥]

यत्र प्रथमं दशसु मात्रासु रहणं विश्रामः, ततोऽष्टसु विरतिः, पुनरपि वसुषु विरतिः, ततो रसेषु षट्सु विरतिः, अन्ते पदचतुष्टयस्यान्ते यत्र गुरुः शोभते तच्छन्दस्त्रिभुवनं मोहयति । सिद्धोऽपि वरतरुणोऽपि श्लाघते इति तस्य च्छन्दसः प्रशंसा । दोषमप्याह—यद्येतस्मिञ्छन्दसि पयोधरो जगणः पतति तदा किमिदं मनोहरम् । अपितु नेत्यर्थः । किं च यस्य कवित्वं क्रियते तस्य कलेवरं हरति कवेरपि । तस्मादत्र जगणो न कर्तव्यः । एतत्त्रिभङ्गीछन्दः सुखानन्दजनकं विमलमतिः फणीन्द्रो भणति । अत्र चरणे द्वात्रिंशन्मात्रा भवन्ति, अष्टौ चतुष्कला गणा भवन्ति ॥ भूषणेऽपि—'प्रथमं यदि दशमं वदति विरामं तदनु निकामं वसुवसुकं वसुविमलतुरंगममतिहृदयंगम हृषितभुजंगमनृपतिलकम् । त्रिंशद्विकलासंविहितविलासं सततनिवासं हृदयमुदः मदमुदितभुजङ्गी मोहनरङ्गी वदति त्रिभङ्गीवृत्तमदः ॥' इदमप्युदाहरणम् ॥

उदाहरति—जहा(यथा)—

सिरकि[ज्जि]अगङ्गं गोरिअद्धङ्गं हणिअअणङ्गं पुरदहणं
किअफणिवइहारं तिहुअणसारं वंदिअछारं रिउमहणम् ।
सुरसेविअचरणं मुणिअणसरणं भउभअहरणं सूलहरं
साणन्दिअवअणं सुन्दरणअणं गिरिवरसअणं णमअ हरम् ॥

[शीर्षकृतगङ्गं गौर्यर्धाङ्गं हतानङ्गं पुरदहनं
कृतफणिपतिहारं त्रिभुवनसारं विदितक्षारं रिपुमथनम् ।
सुरसेवितचरणं मुनिगणशरणं भवभयहरणं शूलधरं
सानन्दितवदनं सुन्दरनयनं गिरिवरशयनं नमत हरम् ॥]

कश्चिद्भक्तः शिवं स्तौति—भा लोकाः, एतादृशं हरं नमत । कीदृशम् । शीर्षे कृता गङ्गा येन । कृता गौरी अर्धाङ्गे येन । हतोऽनङ्गो येन । पुरस्य त्रिपुरस्य दहनो यस्तम् । कृतः फणिपतेः शेषनागस्य हारो येन । त्रिभुवने सारं श्रेष्ठम् । विदितं भस्म येन

१. 'हणइ (हन्ति)' रवि०. २. 'सुक्खाणन्द' रवि०. ३. 'वंदिअछार' रवि०.

विरचितभस्मालेपपरिपूर्णम्। रिपूणामन्धकगजादीनां मथनम्। सुरैरिन्द्रादिभिः सेवितचरणम्। मुनिगणानां शरणं रक्षितारम्। भवभयहरणं संसारभीतिनाशनमन्ते तारकोपदेशात्। शूलधरम्। आनन्देन सहितं वदनं यस्य। सुन्दरं रमणीयं लोचनं यस्य। गिरिवरः कैलासस्तत्र शयनं यस्य॥ उद्दवणिका यथा—IIS, IIS, SS, IIS, SII, SII, SII, IIS, (३२) IIII, IIS, SII, IIS, SS, IIS, SII, IIS, (३२) IIS, IIII, SII, IIII, SII, IIII, SS, IIS, (३२) SS, IIII, SS, IIII, SII, IIII, SII, IIS, (३२)॥ वाणीभूषणे यथा—'विविधायुधमण्डितसगरपण्डितरणदण्डितपाखण्डभटे चण्डासुरखण्डिनि पुरहरमण्डिनि शशधरखण्डिनि बद्धजटे। भवसागरतारिणि दुर्गतिहारिणि मङ्गलकारिणि मयि सुचिरं गिरिराजसुवासिनि शैलनिवासिनि शम्भुविलासिनि देहि वरम्॥'

अथ डुम्मिल(दुर्मिला)छन्दः—

तीसदुद्दीमत्तह परिसंजुत्तह बुहअण एअ भणंति णरा
विसमत्ति अ ठाअहि एरिसभागहिँ पअ पअ दीसइ कण्णगणा।
ता दह पढमं बे अट्ठाअं तेह चउदह तीअहिँ किअणिलओ
जो परिस्सि छंदे तिहुअणवंदे सो जैणउ उहु डुम्मिलओ॥१४७॥

[द्वात्रिंशन्मात्राभिः परिसंयुक्तं बुधजना एतद्भणति नरा
विश्राम्यति च स्थानेष्वेतादृशभागेषु पदे पदे दृश्यते कर्णगणः।
तद्दशसु प्रथमं द्वितीयमष्टमं ततश्चतुर्दशसु तृतीयया कृतनिलयं
यदेतादृशं छन्दस्त्रिभुवनवन्दितं तद्बुध्यध्वमहो दुर्मिलकम्॥]

हे नरा बुधजनाः, पिङ्गलस्तद्दुर्मिलकानामकं छन्दो भणति। तत्किम्। यद्द्वात्रिंशन्मात्राभिः परिसंयुक्तम्। पाद इति शेषः। यच्च विश्राम्यति त्रिषु स्थानेषु एतादृग्भागेषु विरतिर्भागत्रितयेषु। पदे पदे प्रतिपदं दृश्यते कर्णगणो गुरुद्वयात्मकः। तत्प्रथमं विश्रामस्थानं दशसु, बे द्वितीयं विरतिस्थानं अट्ठाअ अष्टमं स्थानम्। ततश्चतुर्दशसु मात्रासु तृतीयविरत्या कृतनिलयम्। यदेतादृशं त्रिभुवनवन्दितं छन्दः, तद्बुध्यध्वमहो जना इति पिङ्गलो भणति। इति॥ इदमप्युदाहरणम्॥

उक्तलक्षणमेवाह—

दहवसुचउदह विरइ कर विसम कण्णगण देहु।
अंतर विप्पपइक भण डुम्मिल छंद कहेहु॥ १४८॥

१. 'बुहअणराउ (बुधजनराजो)' रवि०. २. 'ठामइ' रवि०. ३. 'जइ पुज्झइ (यदि पुष्यते)' रवि०. ४. रविदासीयपुस्तके नोपलभ्यते.

[दशवसुचतुर्दशसु विरतिं कुर्वन्तु विश्रामे कर्णगणान्दत्थ ।
अन्तरे विप्रपदातिकान्भणन्तु दुर्मिला छन्दः कथयन्तु ॥]

दश-अष्टचतुर्दशमात्रासु विरतिं कुर्वन्तु । तत्र विश्रामे कर्णगणान्दत्त । अन्तराले विप्राश्चतुर्लघुकाः पदातयः साधारणाश्चतुर्मात्रा गणास्तान्भणन्तु । एवं दुर्मिलाछन्दः कथयन्तु ॥ भूषणेऽपि—'द्वात्रिंशन्मात्र भवति पवित्र फणिपतिजल्पितवृत्तवरं दशवसुभुवनैर्यतिरत्र प्रभवति कविकुलहृदयानन्दकरम् । यद्वच्चतुष्कलकलितसकलपदमिति दुर्मिलनामधरं नरपतिवरतोषणवन्दिविभूषणभुवनविदितसतापहरम् ॥' इदमप्युदाहरणम् ॥

तामुदाहरति—जहा (यथा)—

जेइ किज्जिअ धारा जिणु णिव्वाला भोट्टन्ता पिट्टंत चले
भजा वि अ चीणा दप्पहि हीणा लोहावल हाकंद पले ।
ओड्ड उड्डाविअ कित्ती पाविअ मोडिअ मालउराअवले
तैलंग वभग्गिअ बहुरिणलग्गिअ कासीसरराज जॅ क्खणण चले ॥

[येन धारा कृता जिता नृपाला भोटन्त पीडयश्चलित.
भग्ना अपि च चीना दर्पेण हीना लोहाबले हाक्रन्दः पतित ।
ओड्र उड्डायित कीर्ति प्राप्ता च मोटित मालवराजबल
तैलङ्गा भग्ना बहुऋणलग्ना[1] काशीश्वरराजो यत्क्षणे चलित ॥]

कश्चित्कवि काशीश्वरप्रयाणमनुवर्णयति—येन धारा व्यूह कृत । अस्मिनेवान्तरे नृपाला शत्रवो जिता एव । 'णेवाला' इति क्वचित्पाठ । तत्र नेपाला जिता । भोटन्तदेशस्थो लोकः पीड्यतुर शिरश्च ताडयन्निर्गत । भग्नाश्चीनाश्चीनदेशस्था । कीदृशा । दर्पेण हीना । लोहावले देशे हाक्रन्दो हाहाकार पतित । उत्कल उड्डायित । ततश्च कीर्तिरपि प्राप्ता । मोटित च मालवराजस्य बलम् । तैलङ्गास्तु बहुतरऋणग्रस्ता भग्ना पलायिता । एककाशीश्वरो राजा यस्मिन्क्षणे चलित, तस्मिनेव क्षणे इयमवस्था जातेत्यर्थ ॥ उट्टवणिका यथा—ऽऽ ।।ऽ, ।।ऽ, ऽऽ, ।ऽ।, ।ऽ।, ।ऽ।, ।।ऽ, (३२) ऽऽ, ।।ऽ, ऽऽ, ।ऽ।, ऽऽ, ऽ।।, ऽऽ, ।।ऽ, (३२) ऽऽ, ऽऽ, ।।ऽ, ऽऽ, ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, (३२) ऽऽ, ऽऽ, ।।।।, ।।ऽ, ।।ऽ, ऽ।।, ।।।।, ।।ऽ, (३२) ॥

अथ हीरच्छन्द —

णाअ पभण तिणि छ गण अंत कराहि जोहल
हार ठविअ पुण वि सुपिअ विप्पगणहि संवलम् ।

१ 'दप्पविहीणा लोहावल' रवि० २ स्वर्नीयाधगतिविशेषवाचिधाराशब्दस्य स्वगतौ लक्षणया प्रयोग

तिण्णि धरहिँ वे वि करहि अंत रगण लक्खए
क मण जणइ दप्प भणइ हीर सुकइ पक्खए ॥ १४९ ॥
[नागः प्रभणति त्रीन्षट्कलगणानन्ते कुरु जोहलं
हारं स्थापयित्वा पुनरपि सुप्रिय विप्रगणैर्शबलम् ।
त्रीन्धारय द्वावपि कुर्वन्ते रगणं लेखय
को मनुष्यो जानाति दर्पेण भणति हीरः सुकविः प्रेक्षते ॥]

भोः शिष्य, हीरनामकमिदं छन्दो नागः पिङ्गलः प्रभणति तत्त्वं शृणु। तत्र त्रीन् षट्कलगणान्कुरु। तस्यान्ते जोहलं रगणं कुरु। षट्कले विशेषमाह—हारं गुरुं पूर्वे स्थापयित्वा। हे सुप्रिय सुतरां प्रिय शिष्य, हारानन्तरं विप्रगणैश्चतुष्कलैः सर्वलघुकैः शबलमिति च्छन्दोविशेषणम्। पदे कलासंख्यामाह—तिण्णीति त्रीन्धारय द्वौ कुरु 'अङ्कस्य वामा गतिः' इति गणिते त्रयोविंशतिः कलाः पादे भवन्तीत्यर्थः। अन्ते रगणं लेखय करच्छन्दस्कार एतच्छन्दो जानाति। अपि तु न कोऽपि। दर्पेण गर्वेण हीरस्तु कविर्भणति अन्यः कः प्रेक्षते। अद्यावधि कस्यापि नयनगोचरो नाभवदिति भावः। अत्र च्छन्दःकविनाम्नोरैक्यमवगन्तव्यम्॥ इदमप्युदाहरणम्॥

उक्तमेवाह—

हार सुपिअ भण विप्पगण तीए भिण्णसरीर।
जोहल अंते संठवहु तेइस मत्तह हीर॥ १५०॥
[हारं सुप्रिय भण विप्रगणास्त्रिधा भिन्नशरीरः।
जोहलमन्ते संस्थापयतु त्रयोविंशतिमात्रमस्ति हीरम्॥]

हे सुप्रिय शिष्य, पूर्वे हारं गुरुं भण। ततो त्रिप्रगणश्चतुर्लघुकः। स च त्रिधा भिन्नशरीरः। एवं त्रिवारं कर्तव्यः। तदन्ते जोहलं रगणं स्थापय। एवं सति त्रयोविंशतिर्मात्रा हीरच्छन्दसः पदे पतन्ति समुदिता द्विनवतिर्मात्रासंख्या॥ भूषणेऽप्युक्तम्—'वहिरगणमन्त्यरगणमेकचरणशोभितं पश्य सुदति नागनृपतिरत्र वदति नो हितम्। रामभजनकालपठन एव रटनरञ्जनं हीरकमिति नाम भवति काममवति सज्जनम्॥'

हीरमुदाहरति—जहा(यथा)—

धिक्कदलण थोंमदरण तक्क तरुण रिंग ए
नं न इगट दिंग इ गट रंग चल तुरंग ए।
धूलिधवल हक्कसवल पक्खिपवल पत्ति ए
कण्ण चलइ कुम्म ललइ भुम्मि भरइ कित्ति ए॥

१. 'मण' इति पठित्वा 'सुप्रियो द्विलघुर्गणः, तथाविधगणद्वयं विप्रगणो वा' इति रविदासेन व्याख्यायि.

[...........................................

....................रङ्गे[ण] चलन्ति तुरंगा ए ।

धूलिधवला हक्कसबलाः पक्षिप्रबलाः पत्तय ए .

कर्णे चलति कूर्मो ललति भूमिर्भ्रियते कीर्त्या ए ॥]

धिकदलनेत्यादि घोटकगतिशब्दानुकरणम् । एवं रङ्गे युद्धस्थाने रङ्गेण कौतुकेन वा चलन्ति तुरंगा धूलिधवलाः । हक्केण वीरकृतशब्दविशेषेणोपलक्षिताः सबलाः समर्थाः पक्षिण इव प्रबलाः प्रकृष्टबलाः पदातयोऽपि । चलन्तीति शेषः । एवं कर्णे चलति सति कूर्मो ललति स्थानभ्रष्टो भवतीत्यर्थः ॥ भूमिर्भ्रियते कीर्त्या । अत्र चतुर्ष्वपि चरणेषु 'ए ए' इति ससंभ्रमाश्चर्ये ॥ उट्टवणिका यथा—ऽ।।।।, ऽ।।।।, ऽ।।।।, ऽ।ऽ, (२३) ऽ।।।।, ऽ।।।।, ऽ।।।।, ऽ।ऽ, (२३) ऽ।।।।, ऽ।।।।, ऽ।।।।, ऽ।ऽ, (२३) ऽ।।।।, ऽ।।।।, ऽ।।।।, ऽ।ऽ, (२३) ॥ वाणीभूषणेऽपि—'ध्यानमटत साम पठत नाम रटत केशव धर्ममयत शर्म भजत कर्म सृजत शैशवम् । द्वारभवनदाररमणसारचयनवासना तावदयति नावतरति कालनृपतिशासना ॥'

अथ जनहरणच्छन्दः—

पैअ पअ ठइ कल सहि विअचकमलमुहि दह वसु पुणु वसु
विरइ करे

सवपअ मुणिदिअगण दिअ विरम सगण सिरिफणिवइ भण
सुकइवरे ।

दह तिगुण कराहि कल पुण वि धैर जुअल एम परि परिठउ
चतुचरणा

जइ परइ कवहु गुरु क(त)वहु ण परिहर वुहअणमणुहरु जणहरणा ॥ १६१ ॥

[पदे पदे स्थापयित्वा कलाः सुखि विकचकमलमुखि दशसु वसुषु पुनर्वसुषु विरतिं कुरु

सर्वपदेषु मुनिद्विजगणान्देहि विरामे सगणं श्रीफणिपतिर्भणति सुकविवरः ।

१. 'पढम पलइ जहि सुणहि सुमुहि (प्रथमं पतति यत्र शृणु सुमुखि)' रवि०. २. 'दिअ दिअगण तह परहि सगण (दीयते द्विजगणस्ततः परे सगणः)' इति रवि०. ३. 'ठव (स्थापय)' रवि०.

दश त्रिगुणाः कुरु कलाः पुनरपि धर युगलमेवं परिपाट्या परिस्थापय चतुश्चरणेपु

यदि पतति कदाचिद्गुरुः क(त)दापि न परिहर बुधजनमनोहरं जनहरणम् ॥]

हे विकचकमलमुखि, पदे पदे स्थापयित्वा कलाः, तत्र प्रथमं दशसु कलासु विरतिं कुरु । ततो वसुकलासु पुनरष्टसु पुनः षट्सु विरतिं कुरु । सर्वपदेषु मुनिद्विजगणान्देहि । विरामे सप्तगणान्ते सगणं नियमेन देहि । एवमष्टौ गणान् कुरु इति श्रीफणिपतिः सुकविवरो भणति । दश त्रिगुणिताः कलाः कुरु । एवं त्रिंशत् पुनरपि धारय गुरुकलाम् । एवं द्वात्रिंशत्कलाः पदे भवन्ति । एवं परिपाट्या परिस्थापय चतुश्चरणेपु (पाठान्तरे) कलाः परिस्थापय । किंच यदि पतति कदाचिद्गुरुः, तदा कदापि मा परिहर मा त्यज । इदं बुधजनमनोहरं जनहरणनामकं छन्द इति ॥ इदमप्युदाहरणम् ॥

उक्तलक्षणमेव स्पष्टीकृत्याह—

बत्तीस होइ मत्ता अन्ते सगणाइं ठावेहि ।
सव्व लहू जइ गुरुआ एक्को वे वि पाएहि ॥ १५२ ॥

[द्वात्रिंशद्भवन्ति मात्रा अन्ते सगणान्स्थापय ।
सर्वे लघवो यदि गुरुक एको द्वावपि पादेषु ॥]

अत्र द्वात्रिंशन्मात्रा भवन्ति अन्ते सगणान्स्थापय तन्मध्ये एव । अत्र गुरुरेको द्वौ वा पादे भवतः तदा न दोषः । अधिके तु भवत्येव ॥ गाहूछन्दः ॥ भूषणे तु—'लघुगुरुकनियमगतमिह फणिमणिमतमवगतमतिसुखनिगदपदं दशवसुमुथनैर्यतिरिह यदि भवति रसिकजनहृदयविहितमदम् । वसुविमलचतुष्कलगणहतगुणिगणचरणविरामाहितसगणं क्वचिदपि गुरुसहितं भवति कविहितं छन्दः सुन्दरि जनहरणम् ॥'

तमुदाहरति—जहा (यथा)—

खुर खुर खुरि खुल कि महि घघरख कलहि णणण गृदिकरि तुरअ चले

टटट गृदि परइ टप धँसइ धरणि धणु चकमक कर बेहुदिसि चमरे ।

---

१. 'गरु रणरणक गणगृणि गृणि रंगे तुरअ चले' रवि०. २. 'धाइ तुरअ' रवि०. ३. 'चउदिस' रवि०.

चलु दमकि दमकि दलु चलइ पइकबलु घुलकि घुलकि[1] करिवर ललिआ
वरमणुसअलकमलविपखहिअअसिल हमिरवीर जब रण च[2]लिआ ॥
[खुरखुरखुरिखुलकृत्य मह्या घर्घररवं कलयित्वा णणणानुकरणं कृत्वा तुरगाश्चलिता-
ष्टटटेत्यनुकृत्य पतति टापः ध्वंसते धरणिर्धनुश्चकमकार्षीत् बहुदिक्षु चमराः ।
चलितमहमहमिकया दलं चलति पत्तिबलं गम्भीरघोरस्वरं कृत्वा करिवराश्चलिता
वरमानुपसमूहकमलविपक्षहृदयशल्यो हम्मीरवीरो यदा रणाय चलितः ॥]

कश्चिद्वन्दी हम्मीरप्रयाणमनुवर्णयति —खुरेत्याद्यनुकरणम् । मह्यामेतादृशानुकरण कृत्वा घर्घरेत्यादिरवं च कृत्वा णणणेत्याद्यनुकरण कृत्वा तुरङ्गाश्चलिताः । टटटेत्याद्यनुकृत्य पतति टापः खुराघातो येषाम् । अत एव ध्वस्ता भवति धरणि । धनुपश्चकमक करोति । दशदिक्षु चमराश्च वाजिकण्ठेषु बद्धाश्चकमकन्ति । एवंविध दल दमकि दमकि अहमहमिकया चलितम् । ततश्च पत्तिबलमपि चलति । ततः घुलकि घुलकि गम्भीरघोरस्वर कृत्वा करिवरा अपि चलिताः । एव सेनाङ्गे चलिते वरमानुपाः सिंहपराक्रमाः शत्रवस्तेपामलाः समूहाः । अलशब्दः समूहार्थे देशीयः । त एव कमल तस्य विपक्षश्चन्द्रस्तत्संकोचकत्वात् । यद्वा सदा संग्रामसान्निध्याद्दलकेषु मलो मालिन्य येषाम् । एवंविधा ये वरमानुपा विपक्षास्तेषां हृदयशल्यो हम्मीरवीरो यदा रणाय चलितस्तदा पूर्वोक्ता एव चलिता इति ॥ उट्टवणिका यथा—IIII, IIII, IIII, IIII, IIII, IIII, IIII, IIS, (३२) IIII, IIII, IIII, IIII, IIII, IIII, IIII, IIS, (३२) IIII, IIII, IIII, IIII, IIII, IIII, IIII, IIS, (३२) IIII, IIII, IIII, IIII, IIII, IIII, IIII, IIS, (३२) ॥

अथ मअणहरा (मदनगृह)छन्दः—

पिअ भणमि मनोहरु पेल्हि[3] पओहरु सुहअमुहाव सुसिद्ध ग्गणो थिर करहि मणो
जइ गाअ निमत्तिअ अनुसर खत्तिअ कड्ढिअए धहि छन्द भणो जिम खलइ रिणो ।

---

१. 'करिघल' रवि० २. हवीर ज रण' रवि०. ३ 'मेल्हि' इति पठित्वा 'मेलयित्वा' इति व्याख्यातं रविदासेन.

रि वि सल्ल पहिल्लिअ तुरह वहिल्लिअ रहहअगअ पसरन्त धरा
गुरु सज्जि वरा

जइ जग्गि णिरुत्तउ दहगणजुत्त चउसधि हि चालीस धरा भणु
मअणहरा ॥ १५३ ॥

[प्रिये भणामि मनोहर प्रेरयित्वा (?) पयोधर सुभगस्वभाव सुस्निग्ध क्षण
स्थिर कुरु मनो

यदि राज्य विमन्यते अनुसर क्षत्रिय निष्कास्य बहिश्छन्दो भण यथा
स्मर्यते ऋणम् ।

द्वौ द्वौ शल्यौ प्रथम तुरग स्थापयित्वा रथहयगजा प्रसरन्ति धर गुरु
सज्जीकृत्य वर ।

यदि जाग्रन्निरुक्तो दशगणयुक्त चतु सधौ हि चत्वारिंशद्धर भण मदन-
गृहम् ॥]

हे प्रिये, मनोहर मदनगृह नाम छन्दो भणामि । किं कृत्वा । पयोधर प्रेरयित्वा (?) जगण दूरीकृत्येत्यर्थ । त्व सुभगस्वभाव, सुस्निग्ध मन क्षण स्थिर कुरु । दत्तचित्ता भ॰ण्वित्यर्थ । यदि राज्य विमन्यते तदानुसर क्षत्रियजातिम् । तदेवाह—छन्द शास्त्रसागराद्बहिराकृष्येद छन्दो भण । तत्प्रशसामाह—यथा परकायमृर्ण खलु सदा स्मृतिपथमुपैति, तथैतदपि ॥ उद्दवणिकामाह—द्वौ द्वौ शल्यौ लघु प्रथम वहिल्लिअ स्थापयित्वा ततस्तुरगहयगजपदातयो नव चतुष्कला जगणरहिता प्रसरन्ति । शेषे गुरु स॰ज्जीकृत्य स्थापित । कीदृश । अस्मिञ्छन्दसि पदान्ते जग्गि जाग्रत् श्रेष्ठत्वेन सगणत्वेन यदि निरुक्त तदा चतुष्कलगणदशकेन युक्तमिति छन्दोविशेषणम् ॥ चउसधौ पदचतुष्टये चत्वारिंशन्माना । समुदितखण्डचतुष्टयपिण्डसख्यासख्या षष्ठ्युत्तरशतात्मिका भवतीति धरास्थानकानि । एतादृशलक्षणलक्षित दशवसुभुवनाष्टकविरतिर मदनगृह नाम छन्द ॥ इदमप्युदाहरणम् ॥

उक्तलक्षणमेवाह—

वेणि मत्त सिरि ठाउक्हु वलआ अन्तए ठवेहु ।
णव चउक्लगण मज्झ धरि मअणहराइ करेहु ॥ १५४ ॥

[द्वे मात्रे शिरसि स्थापयित्वा वलयमन्ते स्थापयतु ।
नव चतुष्कलगणान्मध्ये धृत्वा मदनगृह कुरुत ॥]

द्वे मात्रे शिरसि आदौ स्थापयित्वा अन्ते पदान्ते वलयं गुरुं स्थापयन्तु । ततो मात्राद्वयगुर्वोर्मध्ये नव चतुष्कलगणान्कृत्वा मदनगृहं नाम छन्दः कुरुत ॥

किं च—

चेउसंधि हि चालीसकल दह गण तत्थ मुणेहु ।
पअहर वज्जिअ हे सुपिअ मअणहराइं कुणेहु ॥ १५९ ॥

[चतुःसंधौ चत्वारिंशत्कला दश गणांस्तत्र जानीत ।
पयोधरं वर्जयित्वा हे सुप्रिया मदनगृहं कुरुत ॥]

पदचतुष्टये चत्वारिंशत्कलाः पदचतुष्टयेऽपि दश गणाञ्जानीत । हे सुप्रियाः, पयोधरं जगणं वर्जयित्वा मदनगृहमिति छन्दः कुरुत ॥ भूषणे त्व[न्य]थोक्तम्—'प्रथमं कुरु पट्कलमन्ते कुण्डलमिह मध्ये वसुतुरगधर संतापहरं दश वसुभुवनाष्टभिरत्र चरणमपि भवति विरामो यदि ललित कविश्रलयहितम् । फणिनायकभणितं जगणविरहितं चत्वारिंशत्कलाकलितं भुवने महित वृत्त रसनिकरं तन्मदनहर नरपतिसंसदि लब्धपद गुरुशोकनुदम् ॥'

मदनगृहमुदाहरति—जहा(यथा)—

जिणि कंस विणासिअ कित्ति पआसिअ मुट्ठिअरिट्ठविणास करू
गिरि[3] हत्त धरू जमलज्जुण भञ्जिअ पअभरगञ्जिअ कालिअकुल
जस भुवन भरे ।
चाणूर विहण्डिअ णिअकुल मण्डिअ राहामुहमहुपाण करे जिमि
भमरवरें
सो तुह्म णराअण विप्पपराअण चित्त हि चिन्तिअ देउ वरा
भउभीतिहरा ॥

[येन कंसो विनाशितः कीर्तिः प्रकाशिता मुष्टिकारिष्टविनाशः कृतः
गिरिर्हस्ते धृतो यमलार्जुनौ भञ्जितौ पदभरगञ्जितं कालियकुलं यशसा
भुवनं भृतम् ।
चाणूरो विखण्डितो निजकुलं मण्डितं राधामुखमधुपानं कृतं यथा भ्रमरवरेण
स तुभ्यं नारायणो विप्रपरायणश्चित्ते चिन्तितं ददातु वरं भवभीतिहरः ॥]

१. इदं लक्षणान्तरं रविदासटीकायां न व्याख्यातम्. २. 'रिट्ठिअमुट्ठिविणा' इति रविदासेन व्याख्यातम्. ३. 'गिरि तोलि धरु' इति पाठो रविदासटीकापुस्तके. ४. 'संहार करु' इत्यधिकमितःपुर पुस्तकत्रयेऽपि.

येन कंसो विनाशित[1], अत एव कीर्तिः प्रकाशिता। येन मुष्टिकारिष्टयोर्विनाशः कृतः। येन च गोवर्धनो गिरिर्हस्तेन धृतः। येन च यमलार्जुनौ भग्नौ। येन च पदभरेण गञ्जितं [कालिय] कुलम्। येन च यशसा भुवनं भृतम्। येन चाणूरोऽपि विखण्डितः। येन च निजकुलं यादववृन्दं मण्डितम्। येन च राधामुख[मधु]पानं कृतं यथा भ्रमरवरेण सरसिजमकरन्दः पीयते। स नारायणो विप्रपरायणो युष्माकं चित्तचिन्तितं ददातु। कीदृशः। भवभीतिहरः संसारभयनाशनः॥ उद्दवणिका यथा—॥ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ, (४०) ॥, ॥॥, ऽ॥ ॥॥, ऽ॥, ऽऽ, ॥॥, ॥॥, ऽ॥, ॥॥, (४०) ऽ, ऽ॥, ऽ॥, ॥॥, ऽ॥, ऽऽ, ॥॥, ऽ॥, ॥॥, ऽ (४०); ऽ, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ,(४०)॥ ग्रन्थान्तरेऽपि—'विरहानलतप्ता सीदति गुप्ता रचितनलिनदलतल्पतले मरकतविमले करकलितकपोलं गलितनिचोलं नयति सततरुदितेन निशामनिमेषदृशा। न सखीमभिनन्दति रुजमनुविन्दति निन्दति हिमकरकरनिकर परितापकरं मनुते हृदि भारं मुक्ताहारं दिवसनिशाकरदीनमुखी जीवितविमुखी॥'

अथ मरहट्ठा छन्दः—

एहु छन्द सुलक्खण भणइ विअक्खण जम्पइ पिङ्गलणाअ
बिसमइ दह अक्खर पुण अठ अक्खर पुण एग्गारहठाउ।
गण आइहि छक्कलु पञ्च चउक्कलु अन्त गुरु लहु देहु
सउ सोलह अगाल मत्त सगाल भणु मरहट्टा एहु॥ १९६॥

[एतच्छन्दः सुलक्षणं भण्यते विचक्षणो जल्पति पिङ्गलनागः
विश्राम्यति दशस्वक्षरेषु पुनरष्टसु पुनरेकादशस्थाने।
गण आदौ षट्कलः पञ्च चतुष्कलाः अन्ते गुरुं लघुं देहि
शतं षोडशाधिकं मात्राः सकलाः भण मरहट्टामेतत्॥]

सुलक्षणमेतच्छन्दो भण्यते यद्विचक्षण. पिङ्गलनागो जल्पति यद्विश्राम्यति पूर्वं दशाक्षरेषु पुनरष्टसु पुनरेकादशस्थाने। अत्राक्षरशब्दो मात्रावाचकः, तद्वृत्तत्वात्॥ [उद्दवणिकाप्रकारमाह—] आदौ षट्कल एकः, ततः पञ्च चतुष्कलाः, तत एको गुरुः, ततो लघुरेक इति प्रकारेण पादे एकोनत्रिंशत्कला देय। खण्डचतुष्टयपिण्डकलासंख्या षोडशाधिकशतकं (११६) मात्रा यत्र तदेतन्मरहट्टानामकं छन्दो भण॥ भूषणेऽपि—'आदौ कुरु षट्कलमत्र चतुष्कलमानन्दमिनोऽपि दशस्वेकादश भवति विरतिविदशमधिकगुचामपलोपि। विंशतिनयसंख्यं केविकुलसंख्यं नन्दितगुणिगणकोटि मरहट्टावृत्तं मिल जयहये(ते)ऽकृतारिपुविनतकरोटि॥'

---

१. 'भवतोपि' इति भूषणपुस्तकपाठः. २. 'भणितगुरुरूयं' भूषणपुस्तकपाठः.

मरहट्टामुदाहरति—जहा (यथा)—

जसु मित्त धणेसा सुसुर गिरीसा तहवि हु पीधण दीस
जइ अमिअहकन्दा णिअरहि चन्दा तहविहु भोअण वीस ।
जइ कणअसुरङ्गा गोरी अद्धङ्गा तहवि हु डाकिणिसङ्ग
जो जसहि दिआवा दैवसहावा कवहु ण हो तसु भङ्ग ॥

[यस्य मित्रं धनेशः श्वशुरो गिरीशस्तथाप्येव पिधानं दिशः
यद्यप्यमृतकन्दो निकटस्थश्चन्द्रस्तथाप्येव भोजनं विषम् ।
यद्यपि कनकसवर्णा गौर्यर्धाङ्गी तथाप्येव डाकिनीसङ्गः
यो यशो ददाति दैवस्वभावः कदापि न भवति तस्य भङ्गः ॥]

यस्य मित्रं धनेशः, श्वशुरो गिरीशः, तथापि खलु पिधान वस्त्रं दिगेव । यद्यप्यमृतकन्दो निकटस्थश्चन्द्रः, तथापि यस्य भोजन विषमेव । यद्यपि कनकसवर्णा गौरी अर्धाङ्गे, तथापि खलु डाकिनीसङ्गः योगिनीसहचरः । यो यशो ददाति । भक्तेभ्य इति शेषः । यश्च दैवस्वभावः कदापि न भवति तस्य भङ्गः ॥ उट्टवणिका यथा—॥S॥, SS, ॥॥, SS, ॥॥, S॥, SI, (२९) ॥॥।, SS, ॥॥, SS, ॥॥, S॥, SI, (२९) ॥॥।, SS, S॥, SS, ॥॥, S॥, SI, (२९) ॥॥S, SS, S॥, SS, ॥॥, S॥, SI, (२९) ॥ वाणीभूषणेऽपि—'अभिमतधनदाता सिद्धिविधाता जगदन्तरगतिशील, दुरितद्रुमदाही विश्वविगाही कल्पक्षयकृतलील । भुवनत्रयवन्दितगिरिजानन्दितहरशिरसि स्थिरवास, दह हुतवह पापं देहि दुरापं वसुहततिमिरविलास ॥'

इति लीलावतीप्रकरणम् ।

प्राकृतसूत्रेणोक्तच्छन्दसा नामान्याह—

गाहू गाहा विगाहा उगाहा गाहिणी सींहिणी खन्धा दोहा उक्कच्छा रोला गन्धाना चउपइआ घत्ता घत्ताणन्द छप्पआ पज्झडिआ अडिल्ला पाआउलअं चउबोला णउपअ पउमावत्ती कुण्डलिआ गअणंगउ दोअई झुल्लणा खञ्जपअ सिक्खा माला चुलिआला सोरट्ठा हाकलि महुआर महारु दंडअरु दीपक सिहालोअ पवङ्गा लीलावइ हरिगीआ तिअभङ्गी दुम्मिला हीरो जनहरणी मअणहग मरहट्टा-पञ्चतालीस धरा ॥

[गाहू गाथा विगाथोद्गाथा गाथिनी सिंहिनी स्कन्धक द्विपथा रसिका रोला गन्धानक चतुष्पदी घत्ता घत्तानन्द षट्पदी पज्झटिका अडिल्ला पादाकुलक चतुष्पदी नवपदी पद्मावती कुण्डलिका गगनाङ्गन द्विपदी झुल्लणा खञ्जा शिखा माला चुलिआला सोराष्ट्रा हाकलि मधुभार आभीर दण्डकला दीपक सिंहावलोक प्लवगम लीलावती हरिगीता त्रिभङ्गी दुर्मिला हीरक जनहरण मदनगृह मरहट्ठा। एतानि पञ्चचत्वारिंशत्स्थानकानि ॥]

एतानि पञ्चचत्वारिंशत्स्थानकानि। अन्यान्यपि प्रस्तारगत्या सुधीभिरूह्यानि॥शिवम्॥

पिङ्गला[चा]र्यविरचितमात्रावृत्तप्रकाशकम्।
छन्दःप्रदीपममलं जगद्भवनदीपकम् ॥
मुनीपुरसभूमीभिर्मितेऽब्दे श्रावणे सिते।
नागराजतिथौ भट्टलक्ष्मीनाथोऽप्यरीरचत् ॥

इत्यालंकारिकचक्रचूडामणिश्रीमद्रायभट्टात्मजश्रीलक्ष्मीनाथभट्टविरचिते पिङ्गलप्रदीपे मात्रावृत्ताख्यः प्रथमः परिच्छेदः ॥

---

द्वितीयः परिच्छेदः।

मदजलपरिमलपरिमिलदलिकलकलरवपटकलितकमलवन।
जय जय निजपदसरसिजनमदभिमतघटनजवन गजवदन ॥

कृत्वा कौतूहलतो मात्रावृत्तस्य पिङ्गले भाष्यम्।
लक्ष्मीनाथस्तनुते सद्भाष्यं वर्णवृत्तस्य ॥

अथैकाक्षरपादादारभ्यैकैकाक्षरवर्धिते पादे षड्विंशत्यक्षरपर्यन्तं वर्णवृत्तान्युच्यन्ते। इतश्च लक्ष्यलक्षणयोरैक्यमवगन्तव्यम् ॥

श्री सा।
जं गो ॥ १ ॥
[श्री सा।
यत्र गुरु ॥]

सा श्री। श्रीनामकं छन्द इत्यर्थः। यत्र गो गुरुर्भवतीत्यर्थः ॥ अत्र सर्वत्र—'गुरुरेको गकारो लघुरेको लकारः' इति संकेतः ॥ भूषणेऽप्युक्तम्—'यद्ग सा श्री ॥'

---

१ भूषणे तु 'उपगीति' इत्यस्य नामान्तरमुक्तम्. २ रविदासेन तु—'चउवाला, झुल्लणा' इति द्वे अनुक्त्वा 'तेआलिस हुआ' इति मूलं पठित्वा 'इति त्रयश्चत्वारिंशच्छन्दांसि भवन्ति' इति व्याख्यातम्.

श्रियमुदाहरति—जहा (यथा)—

गोरी ।
रक्खो ॥ २ ॥
[गौरी ।
रक्षतु ॥]

गौरी युष्मान्रक्षतु ॥

यथा वा—

बे भे ।
द्वे स्तः ॥ ३ ॥
[इह भेदौ ।
द्वौ स्तः ॥]

अत्रैकाक्षरप्रस्तारे द्वौ भेदौ गुरुर्लघुश्च । तत्राद्यो गुरुरुक्तः । द्वितीयः सुधीभिरूह्यः ॥

अथ द्व्यक्षरप्रस्तारे कामछन्दः—

दीहा बीहा ।
कामो रामो ॥ ४ ॥
[दीर्घौ द्वौ ।
कामो रामः ॥]

यत्र द्वौ दीर्घौ तत्कामाख्यं छन्दः । रामोऽभिराम इत्यर्थः ॥ अक्षरद्वयात्मकं पदम् ॥ भूषणेऽपि—'यस्मिन्द्वारौ कामः स स्यात् ॥'

काममुदाहरति—जहा (यथा)—

जुज्झे तुज्झे ।
सुक्खं देऊ ॥ ५ ॥
[युद्धे तुभ्यम् ।
शुभं ददातु ॥]

युद्धे संग्रामे तुभ्यं शुभं ददातु शम्भुरित्यर्थः ॥ यथा वा (भूषणेऽप्युक्तम्)—'येन्स्यान् वः शम्भुर्देयान्' । ग्रन्थान्तरे 'गी छी गी' इति नामान्तरम् ॥ उद्दवणिका यथा—ऽऽ,(८)॥

१. रविदामदीरातुल्यके नोपलभ्यते. २ 'सुद' इति पठित्वा 'सुखं' इति व्याख्यातं रविकरेण. ३. रविदामदीरातुल्यके नोपलभ्यते.

अथ मधुछन्दः—

लहु जुआ।
मद्दु धुअ ॥ ६ ॥
[लघु युगम्।
मधु ध्रुवम् ॥]

यत्र लघुद्वयं तन्मधुनामकं छन्दो निश्चितम् ॥ भूषणेऽपि—'द्विकलतु मधुरिति' ॥
उदाहरति—जहा (यथा)—

हर हर।
मम मेलु ॥ ७ ॥
[हर हर।
मम मलम् ॥]

हे हर, मम पाप हर ॥ उद्दवणिका यथा—॥, (८) ॥
अथ महीछन्दः—

लगो जहीं।
मही कही ॥ ८ ॥
[लगौ यत्र।
मही कथिता ॥

यत्र पूर्वं लघुः, ततो गुरुः, तन्मही कथिता ॥ भूषणेऽपि—'लघुर्गुरुर्मही स्मृता' ॥
तामुदाहरति—जहा (यथा)—

सई उमा।
रखो तुमां ॥ ९ ॥
[सती उमा।
रक्षतु त्वाम् ॥]

उमा गोरी त्वा रक्षतु। कीदृशी। सती पतिव्रतेत्यर्थः ॥ उद्दवणिका यथा—।ऽ,(८)
अथ सारुछन्दः—

सारु एह।
गो वि रेह ॥ १० ॥

---

१. 'मल' इति रविदासटीकापुस्तके.

[सारुरेषः ।
गुरुर्द्वितीयो रेखा ॥]

यत्र पूर्वो गुरुः, द्वितीयो रेखा लघुः, तत्सारुनामकं छन्दः ॥

सारुमुदाहरति—जहा (यथा)—

संभु एउ ।
सुब्भ देउ ॥ ११ ॥

[शंभुरयम् ।
शुभं ददातु ॥]

अयं शंभुर्युष्मभ्यं सुखं ददातु ॥ उट्टवणिका यथा—ऽ।, ८ ॥ अत्र चत्वारो भेदा उदाहृताः ॥

अथ त्र्यक्षरप्रस्तारे तालीछन्दः—

ताली ए जाणीए ।
गो कण्णो तिव्वण्णो ॥ १२ ॥

[ताल्येषा ज्ञायते ।
गुरुः कर्णो त्रिवर्णः ॥]

यत्र पूर्वं गो गुरुः, अनन्तरं कर्णो गुरुद्वयात्मकः । सर्वगुरुः (त्रिवर्णः) सा ताली नामकछन्दः ॥ भूषणेऽपि—'ताली सा निर्दिष्टा ।······मो यत्र' ॥ ग्रन्थान्तरे नारीति ॥

तामुदाहरति—जहा (यथा)—

तुह्माण अह्माण ।
चण्डेसो रक्खे सो ॥ १३ ॥

[युष्मानस्मान् ।
चण्डेशो रक्षतु सः ॥]

स प्रसिद्धचण्डेशः शिवो युष्मानस्मान्रक्षतु ॥ उट्टवणिका यथा—ऽऽऽ. १२ ॥

अथ प्रियाछन्दः—

हे पिए लेक्खिए ।
अक्खरे तिण्णि रे ॥ १४ ॥

[हे प्रिये लक्ष्यते ।
अक्षराणि त्रीणि रे ॥]

---

१. 'अक्षरैस्त्रिभिः' इति व्याख्यातं रविदासेन.

हे प्रिये यत्र रे रगणे त्रीणि अक्षराणि, सा प्रिया लक्ष्यते ॥ भूषणेऽपि—'जोहल द॰ , दृश्यते । सा प्रिया कथ्यते ॥'

तामुदाहरति—जहा (यथा)—

संकरो संकरो ।
पाउ णो पाउ णो ॥ १५ ॥
[शंकरः शंकरः ।
पातु नः पातु नः ॥]

शं सुखं करोतीति तथा शंकरः शिवः नः पातु नः पातु । आदरे वीप्सा ॥ उद्दवणिका यथा—ऽIऽ. १२ ॥

अथ शशीछन्दः—

ससी यो जणीयो ।
फणीन्दो भणीओ ॥ १६ ॥
[शशी यो जनितः ।
फणीन्द्रेण भणितम् ॥]

यत्र पदे यो (यगण) आदिलघुर्यगणो जनित उत्पादितस्तच्छन्दः फणीन्द्रेण भणितम् ॥ भूषणेऽपि—'यकारो यदा स्यात् । शशी कथ्यते तत् ॥'

तमुदाहरति—जहा (यथा)—

भवाणी हसन्ती ।
दुरित्तं हरन्ती ॥ १७ ॥
[भवानी हसन्ती ।
दुरितं हरन्ती ॥]

दुरितं हरन्ती हसन्ती भवानी युष्मानव्यादिति शेषः ॥ उद्दवणिका यथा—Iऽऽ.१२॥

अथ रमणछन्दः—

सगणो रमणो ।
सहिओ कहिओ ॥ १८ ॥
[सगणो रमणः ।
सख्यः कथितम् ॥]

१. 'पावम.' इति व्याख्यात रविदासेन. २. 'ससी णो अणीओ' इति पठित्वा 'यगणेन नीत' इति व्याख्यात रविदासेन. ३. 'हरतु' इति व्याख्यात रविदासेन.

सख्यः यत्र पदे सगणो गुर्वन्तो गणः, तद्रमणाख्यं छन्दः कथितम् ॥ भूषणेऽपि—'सगणो रमणः । कविना कथितः ॥'

रमणमुदाहरति—जहा (यथा)—

ससिणा रअणी ।
पइणा तरुणी ॥ १९ ॥
[शशिना रजनी ।
पत्या तरुणी ॥]

यथा शशिना रजनी शोभते तथैव पत्या संयुक्ता तरुणी राजते ॥ उट्टवणिका यथा—
॥S. १२ ॥

अथ पञ्चालछन्दः—

तक्कार जं दिट्ठ ।
पञ्चाल्ल उक्किट्ठ ॥ २० ॥
[तकारो यत्र दृष्टः ।
पञ्चाल उत्कृष्टः ॥]

यत्र तकारस्तगणोऽन्त्यलघुर्दृष्टः, स पञ्चाल उत्कृष्ट इति ॥ भूषणे तु—'कर्णेन गन्धेन । पाञ्चालमाख्याहि ॥'

तमुदाहरति—जहा (यथा)—

सो देउ सुक्खाइँ ।
संघारि दुक्खाइँ ॥ २१ ॥
[स ददातु सुखानि ।
संहृत्य दुःखानि ॥]

स शिवो दुःखानि संहृत्य सुखानि ददातु ॥ भूषणेऽपि—'शर्माणि सर्वाणि । देयानि शर्वाणि ॥' उट्टवणिका यथा—SSI. १२ ॥

अथ मृगेन्द्रच्छन्दः—

णरेन्द टवेहु ।
मिएन्द करेहु ॥ २२ ॥
[नरेन्द्रं स्थापयन्तु ।
मृगेन्द्रं कुर्वन्तु ॥]

---

१. अयं पाठोऽस्मदुपलब्धलक्ष्मीनाथटीकादर्शे त्रुटितः.

नरेन्द्रं जगणं गुरुमध्यमं गणं स्थापयन्तु मृगेन्द्रनामकं छन्दः कुर्वन्तु ॥ भूषणेऽपि—'नरेन्द्रमुदेहि । मृगेन्द्रमवेहि ॥'

तमदाहरति—

दुन्त वसन्त ।
स कन्त दिगन्त ॥ २३ ॥
[दुरन्तो वसन्तः ।
स कान्तो दिगन्ते ॥]

दुरन्तो वसन्तः, स कान्तो दिगन्ते ॥ उद्दवणिका यथा—।ऽ।. १२ ॥

अथ मन्दरछन्दः—

भो जहिं सो सहि ।
मन्दर सुन्दर ॥ २४ ॥
[भो यत्र स सखि ।
मन्दरः सुन्दरम् ॥]

हे सखि, भो भगणो गुर्वादिगणो यत्र सन्मन्दरनामकमतिसुन्दर छन्दः ॥ भूषणेऽपि—'भो यदि वञ्चति । मन्दरमञ्चति ॥'

मन्दरमुदाहरति—जहा (यथा)—

सो हर तोहर ।
संकट संहर ॥ २५ ॥
[स हरो युष्माकम् ।
संकटं संहरतु ॥]

स प्रसिद्धो हरः शिवो युष्माकं संकटं संहरतु ॥ उद्दवणिका यथा—ऽ॥; १२ ॥ मन्दरो निवृत्तः ॥

अथ कमलच्छन्दः—

कमल पभण ।
सुमुहि णगण ॥ २६ ॥
[कमलं प्रभण ।
सुमुखि नगणः ॥]

हे सुमुखि यत्र नगणस्त्रिलघ्वात्मको गणः क्रियते तत्कमलनामकं वर्णत्रयात्मकं छन्दः ॥ तथा च वाणीभूषणे—'कमलमयतु । नगणमिह तु ॥'

कमलमुदाहरति—जहा (यथा)—

रमण गमण ।
कमण कमण ॥ २७ ॥
[रमण गमनम् ।
............ ॥]

हे रमण, कुत्र गमनं क्रियत इति शेषः ॥ उद्दवणिका यथा—।।।; १२ ॥ कमलं निवृत्तम् ॥ अत्रापि त्र्यक्षरप्रस्तारगत्याष्टौ भेदा भवन्तीति तावन्तोऽप्युदाहृत्य प्रदर्शिताः ॥

अथ चतुरक्षरे प्रस्तारे प्रथमं तीर्णा छन्दः—

चारि हारा इट्ठा कारा ।
बीए कण्णा जाणे तिण्णा ॥ २८ ॥
[चत्वारो हारा इष्टाः कराः ।
द्वौ कर्णौ जानीत तीर्णाम् ॥]

भोः शिष्य, यत्र चत्वारो हारा गुरवो भवन्ति, इष्टाः(?) कराः । तत्र चरणे गणनियममाह—एकस्मिन्पादे द्वौ कर्णौ गुरुद्वयात्मकगणौ भवतः, तत्तीर्णाख्यं छन्दः । वर्णचतुष्टयात्मकं पदम् ॥ वाणीभूषणेऽप्युक्तम्—'यस्मिन्वृत्ते कर्णः कर्णः । वेदैर्वर्णैः सा स्यात्तीर्णा ॥'

तीर्णामुदाहरति—जहा (यथा)—

जाआ माआ धुत्ता पुत्ता ।
इण्णे जाणी किज्जे जुत्ता ॥ २९ ॥
[जाया माया पुत्रा धूर्ताः ।
एवं ज्ञात्वा क्रियतां युक्तम् ॥]

पथिकमिषं प्रति वदति—जाया वधूर्माया महाविचित्रेन्द्रः । पुत्रा अपि धूर्ताः । एवं ज्ञात्वा क्रियतां युक्तम्—इति ॥ उद्दवणिका यथा—SSSS; ॥ तीर्णा निवृत्ता ॥

अथ धारिच्छन्दः—

वण्ण चारि सुद्ध धारि ।
विण्णि हार दो स सार ॥ ३० ॥

---

१.'रमणस्य गमने विदेशगमने कस्मात् मनः अपि तु न कस्मा अपीत्यर्थः.' इति रविकर-व्याख्यादर्शनेन 'रमणगमने । कस्मात् मनः' इति छाया प्रतिभाति. २. 'भद्दा कारा' इति मूलमाश्रित्य 'भद्रौ करौ' इति व्याख्यातं रविकरेण. ३. 'तस्या अन्तरा द्वौ भवतः । हीर मालतिका' इति रविकरव्याख्यानानुसृत्य तु 'द्वावन्तर्गतौ दीर्घं मालतिका' इति छाया प्रतीयते.

[वर्णाश्चत्वारो मुग्धे धारिः।
........................ ॥]

हे मुग्धे यत्र वर्णाश्चत्वारः पदे भवन्ति ता धारी। तस्यामुत्तरोत्तरौ हारौ गुरुद्वयम्, द्वौ शारौ लघुद्वयं च॥ अयमर्थः—चतुर्वर्णात्मकपदे धारीनाम्नि च्छन्दसि प्रथमं गुरुः, ततो लघुः, अनन्तरं गुरुलघू। इत्युक्तं भवति—रगणः, ततश्चैको लघुः—इति॥ त-दुक्तं वाणीभूषणे—'यत्र पक्षि दण्ड लक्षि। वेद वर्ण धारि धारि॥' इति॥

धारीमुदाहरति—जहा (यथा)—

देउदेउ संभु देउ।
जासु सीस चन्द दीस॥ ३१॥

[देवदेवः शंभुर्ददातु।
यस्य शीर्षे चन्द्रो दृश्यते॥]

देवानामपि देवः स शंभुर्युष्मभ्यं शुभं ददातु। यस्य शीर्षे चन्द्रो दृश्यते। चन्द्रशेखर इत्यर्थः। उद्दवणिका यथा—SIS।; ४×४=१६॥ धारी निवृत्ता॥

अथ नगाणी छन्दः—

पओहरो गुरुत्तरो।
नगाणिआ स जाणिआ॥ ३२॥

[पयोधरो गुरूत्तरः।
नगाणिका सा ज्ञायते॥]

यत्र पयोधरो जगणो गुरुमध्यमो गणो गुरूत्तरो गुर्वन्तो भवतीत्यर्थः। वर्णचतुष्टया-त्मकं पदम्। तन्नगाणी छन्दो भवति। अर्थात्—द्वितीयश्चतुर्थश्च वर्णो गुरुर्भवतीति॥ तदुक्तं वाणीभूषणे—'द्वितुर्यके गुरुर्यदा। नगाणिका भवेत्तदा॥'

नगाणीमुदाहरति—जहा (यथा)—

सरस्सई पसण्ण हो।
कवित्तआ फुरत्तओ॥ ३३॥

[सरस्वती प्रसन्नास्तु।
कवित्वं स्फुरतु॥]

सरस्वती प्रसन्ना भवतु, कवित्वं स्फुरतु॥ उद्दवणिका यथा—ISIS; १६॥ नगाणी निवृत्ता॥ अत्रापि चतुरक्षरस्य प्रस्तारगत्या षोडश भेदा भवन्ति। तेषु ग्रन्थविस्तरश-ङ्कया त्रयो भेदाः प्रदर्शिताः॥ अन्यैः(न्ये) सुधीभिरूहनीयाः इति॥

---

१. 'सुम्म' इति पठित्वा 'शुभं' इति व्याख्यातं रविदासेन.

अथ पञ्चाक्षरप्रस्तारे सर्वगुरु समोहाछन्द —

संमोहारूअं दिट्ठो सो भूअम् ।
बे कण्णा हारा भूअत्ता(ला)सारा ॥ ३४ ॥
[संमोहारूप दृष्ट तद्भूमी ।
द्वौ कर्णौ हारो भूतल्सारम् ॥]

यत्र वे द्वौ कर्णौ गुरुद्वयात्मकगणौ पूर्वे भवत । तत एको हारो गुरु । एवमेकस्मिंश्चरणे पञ्चापि गुरवो भवन्ति तत् भूतल्सार समोहानामक छन्द इत्यर्थः ॥ तथा च वाणीभूषणे—'द्वौ कर्णौ हारः समोहा सार' । वर्णाः पञ्चैव नागाभीरोक्तम् ॥'

समोहामुदाहरति—जहा (यथा)—

उद्दण्डा चण्डी दुरित्ता खण्डी ।
तेल्होआ सोक्खं देऊ मे मोक्खम् ॥ ३५ ॥
[उद्दण्डा चण्डी दुरितं खण्डयतु ।
त्रैलोक्यस्य सौख्यं ददातु मे मोक्षम् ॥]

उद्दण्डा महिषासुरादिवधेनोद्भटा चण्डी कात्यायनी दुरित खण्डयतु, (त्रैलोक्यस्य सुखम्,) मे मोक्ष च ददातु' इति कश्चिद्भक्तो देवीं प्रार्थयते इति ॥ उदृवणिका यथा—SSSSS; ५=२० ॥ समोहा निवृत्ता ॥

अथ हारीछन्द —

आईहि अन्ते हारे सुजुत्ते ।
मज्झेक्कगन्धो हारी अछन्दो ॥ ३६ ॥
[आदावन्ते हाराभ्या सुयुक्तम् ।
मध्यैकगन्धा हारी तच्छन्दः ॥]

आदौ हाराभ्यां गुरुभ्या तथा चान्ते हाराभ्यां सुयुक्तम्, तयोर्मध्ये गन्धो लघुरेको यत्र तत् हारी छन्दः । पञ्चाक्षरपदम् । आदावन्ते वर्णौ, मध्ये लघु, एव पञ्चवर्णात्मक पदमित्यर्थ ॥ वाणीभूषणेऽपि—'आद्यन्तकर्णौ पञ्चैव वर्णाः । लघ्वेकधारी वाच्य. स हारी ॥'

हारीमुदाहरति—जहा (यथा)—

जा भत्तिभत्ता धम्मेक्कचित्ता ।
मा होइ णारी धण्णा पिआरी ॥ ३७ ॥

1. 'हारीभयन्थी' इति मु' पठिता 'हारीवन्ध ' इति व्याख्यानं गतिहासेन. २ 'जुत्ता' इति पठित्वा 'भत्तिजुत्ता' इति व्याख्यातं हरिहासेन

[या भर्तृभक्ता धर्मैकचित्ता ।
सा भवति नारी धन्या प्रिया ॥]

या भर्तृभक्ता धर्मैकचित्ता भवति सैव नारी धन्या प्रिया च भर्तुर्भवतीति भावः ॥ उद्दवणिका यथा—SSISS; ५×४=२० ॥ हारी निवृत्ता ॥

अथ हंसच्छन्दः—

पिङ्गलदिट्ठो भ दइ सिट्ठो ।
कण्णइ दिज्जो हंस मुणिज्जो ॥ ३८ ॥
[पिङ्गलदृष्टं भं दत्त्वा सृष्टम् ।
कर्णं दत्त्वा हंसं ज्ञातव्यम् ॥]

भोः शिष्याः पिङ्गलेन दृष्टं भगणं दत्त्वा पूर्वं सृष्टम्, पश्चात्कर्णं गुरुद्वयात्मकगणं दत्त्वा हंसाख्यं पञ्चाक्षरपदं छन्दो भवतीति ज्ञातव्यम् । अत एव वाणीभूषणे—'पिङ्गलदिष्टो भादिविशिष्ट । कर्णयुतोऽसौ भामिनि हंसः ॥'

हंसमुदाहरति—जहा (यथा)—

सो मह कन्ता दूर दिगन्ता ।
पाउस आवे चेउ डुलावे ॥ ३९ ॥
[स मम कान्तो दूरे दिगन्ते ।
प्रावृडागता चेतश्चालयति ॥]

काचित्प्रोषितपतिका सखीमाह—हे सखि, स मम कान्तोऽधुना दूरे दिगन्ते वर्तते। इयं च प्रावृट् आगता चेतश्चालयति । किमिदानीमाचरणीयमिति शिक्षयेति भावः ॥ उद्दवणिका यथा—SIISS, ५×४=२० ॥ हंसो निवृत्तः ॥

अथ यमकच्छन्दः—

सुपिअगण सरसुगुण ।
सरह गण जमअ भण ॥ ४० ॥
[सुप्रियगणो शरसुगुणम् ।
श्लाघ्यमे·····यमकं भण ॥]

---

१. रविदासेन तु 'सरस भण । सर ह गण जमअ गुण' इति पठित्वा 'तद्यमकं जानीत । यत्र सुप्रियो द्विलघुर्गणः । कीदृशः । सरसो रससंपूर्णः इति बुध्यस्व ॥ ततः शरद्विलघुर्गणः समवति' इति व्याख्यातम्.

हे मुग्धे, यत्र सुप्रियगणो द्विलघुक एव गणो भवति । अथ च शरेणैकेन लघुना सुगुण सयुक्त एतादृश [न]गण सरहस्यमध्यमेतस्य गणस्य कुर्वन्त्यर्थः । एतादृश सर्वलघ्वात्मकपञ्चाक्षरप्रस्तारान्त्यभेद पञ्चाक्षरपद यमकाख्य छन्दो भण पठेत्यर्थः । वाणीभूषणेऽप्युक्तम्—'नगणमनु द्विलघु कुरु । फलितमिति यमकमिति ॥'

यमकमुदाहरति—जहा (यथा)—

पवण वह सरिरसह ।

मअण हण तवइ मण ॥ ५१ ॥

[पवनो वहति शरीरमहः ।

मदनो हन्ति तापयति मनः ॥]

पवनो मलयानिलो वहति । कीदृश । शरीरसह शरीर माहयमौ सहः । 'षहम् गतौ' इत्यस्य दिवादेस्य(?) रूपम् । यद्वा तादृश पवन शरीर कर्त सहते । 'साहयलाहअक्षोम महति इवेणन्ययम् । अन्याय सहते नासौ भिन्यति क्षितिरक्षणः ॥' इति कविरहस्ये हलायुधवचनप्रामाण्यादिति । अपि च मदनो हन्ति तापयति च मनः । इति प्रोषितपतिकावचन सखी प्रतीति व्याख्येयमिति ॥ उद्वणिका यथा—।।।।।, ५×४=२०॥ यमक निवृत्तम् ॥ अत्र प्रस्तारगत्या पञ्चाक्षरस्य द्वात्रिंशद्भेदा भवन्ति । तेषु भेदेषु चतुष्यमुक्तम् । शेषभेदा नोदाहृता ग्रन्थविस्तरभीत्या, सुधीभिरूह्या इति ॥

अथ षडक्षरप्रस्तारे सर्वगुरुरूपमाद्य भेद शेषाख्यं छन्दो लक्षयति—

बाराहा मत्ता जं कण्णा तीआ होतम् ।

हारा छक्का बन्धो सेसा राआ छन्दो ॥ ५२ ॥

[द्वादश मात्रा यत्र कर्णास्त्रयो भवन्ति ।

हारैः षड्भिर्बन्धो शेषो राजा छन्द ॥]

यत्र द्वादश मात्रा । शिष्यबोधनार्थं मात्रासख्या ॥ गणनियममाह—यत्र च त्रयः कर्णा गुरुद्वयात्मकास्त्रयो गणा भवन्ति। षडक्षर पदम् । एतदेव द्रढयति—षड्भिर्हारैर्गुरुभिर्बन्धो यत्र तच्छेषाख्यं छन्दःसु राजा । श्रेष्ठ छन्द इत्यर्थः ॥ तदुक्त वाणीभूषणेऽपि—'एषा वर्णे षड्भिः प्रोक्ता छन्दोविद्भि । सर्वे वर्णा यस्यां दीर्घा शेषा सा स्यात् ॥'

शेषामुदाहरति—जहा (यथा)—

जुज्झन्ती उद्दामे कालिआ संगामे ।

णच्चन्ती संहारो दुरिआ हम्मारो ॥ ५३ ॥

१. 'सेमाराजा' इति 'शेषराजछन्दः' इति व्याख्यातं रविकरेण.

[युध्यमानोद्दामे कालिका संग्रामे ।
नृत्यन्ती संहरतु दुरितमस्माकम् ॥]

उद्दामे संग्रामे [युध्यमाना] नृत्यन्ती कालिका हम्मारो अस्माकं दुरितं तापं संहरतु ॥ उद्दवणिका यथा—SSSSSS; ६×४=२४ ॥ शेषा निवृत्ता ॥

अथ तिलकाछन्दः—

पिअ तिल्ल धुअं सगणेण जुअम् ।
छअ वण्ण पओ कल अट्ठ धेओ ॥ ४४ ॥

[प्रिये तिलका ध्रुवं सगणस्य युगम् ।
षड्वर्णाः पदे कला अष्टौ धृताः ॥]

हे प्रिये, तत्तिलकाख्यं छन्दः । यत्र ध्रुवं निश्चितं सगणद्वयमन्त्यगुरुगणद्वय भवति । षड्वर्णात्मकं पदम् । पदे चाष्टौ कला धृता यत्रेति कलासंख्या शिष्यबोधनार्थं पदपूरणार्थं वा । अन्यथाक्षरवृत्ते वर्णसंख्याया एवावश्यकत्वादिति ॥ वाणीभूषणेऽपि—'सखि सद्वितयं सुदतीह यदा । रसवर्णपदा तिलकेति तदा ॥'

तिलकामुदाहरति—जहा (यथा)—

पिअभत्ति पिआ गुणवन्त सुआ ।
धेणमन्त घरा बहुसुक्खकरा ॥ ४५ ॥

[प्रियभक्ता प्रिया गुणवान्सुतः ।
धनवद्गृहं बहुसुखकरम् ॥]

कश्चित्स्वमित्रं प्रत्याह—प्रियभक्ता प्रिया, गुणवान् सुतः, धनवद्गृहं बहुसुखकरमित्येतत्सर्वं यस्य भवति स धन्य इति भावः ॥ उद्दवणिका यथा—IISIIS;६×४=२४ ॥ तिलका निवृत्ता ॥

अथ विज्जोहाछन्दः—

अक्खरा जे छआ पाअ पाअ ट्ठिआ ।
मत्त पञ्च हुणा विण्णि जोहागणा ॥ ४६ ॥

[अक्षराणि यत्र षट् पादे पादे स्थितानि ।
मात्रा पञ्च द्विगुणा द्वौ जोहागणौ ॥]

यत्र पादे पादे षडक्षराणि स्थितानि । यत्र च पञ्च द्विगुणा दश मात्राः । तत्रैव गणनि-

१. 'तिल्ल' इति पठित्वा 'तिल्लानाम छन्दः' इति व्याख्यातं रविदासेन. २. 'ठिओ' इति पदं 'स्थिताः' इति व्याख्यातं रविदासेन. ३. 'धणजुत्त' इति रविदासपुस्तके.

यममाह—विण्णि द्वौ जोहागणौ रगणौ यत्र तत् विज्जोहाछन्दः नामगणयोरैक्यम् ॥ वाणीभूषणे तु 'विमोहा' इति नामान्तरम्—'यत्र पादद्वये दृश्यते रद्वयम् । नागराजोदिता सा विमोहा मता ॥'

विमोहामुदाहरति—

कंससंहारणा पक्खिसंचारणा ।
देवईडिम्भआ देउ मे णिम्भआ ॥ ४७ ॥

[कंससंहारी पक्षिसंचारी ।
देवकीडिम्भो ददातु मे निर्भयम् ॥]

कंससंहारी पक्षिसंचारी देवकीनन्दनो मे मह्यं निर्भयं ददातु । ममाभयप्रदो भवत्वित्यर्थः ॥ उद्दवणिका यथा—ऽ।ऽऽ।ऽ; ६×४=२४ ॥ विजोहा निवृत्ता ॥

अथ चतुरंसाच्छन्दः—

ठउ चउरंसा फणिवइभासा ।
दिअवरकण्णो फुल रसवण्णो ॥ ४८ ॥

[स्थापय चतुरंसां फणिपतिभाषिताम् ।
द्विजवरकर्णौ स्फुटं रसवर्णाम् ॥]

यत्र द्विजवरश्चतुर्लघ्वात्मको गणः प्रथमम्, ततः कर्णो द्विगुरुर्गणः, अत एव स्फुटं रसवर्णं षडक्षरं पदं यत्र तां फणिपतिभाषितां चतुरंसां स्थापय ॥ वाणीभूषणेऽपि—'द्विजवरकर्णाविह रसवर्णा । भवति यदा सा किल चतुरंसा ॥'

चतुरंसामुदाहरति—जहा (यथा)—

गउरिअकन्ता अभिनउ सन्ता ।
जदि परसन्ना दिअमहि धन्ना ॥ ४९ ॥

[गौरीकान्तोऽभिनये सन् ।
यदि प्रसन्नो द्यावापृथिव्योर्धन्यः ॥]

गौरीकान्तो यदि यदा अभिनये संस्ताण्डवे वर्तमानो यस्य प्रसन्नः, स तदा द्यावापृथिव्योर्धन्यः ॥

जहा वा (यथा वा)—

भुअणअणन्दो तिहुअणकन्दो ।
भमरसवण्णो स जअइ कण्हो ॥ ५० ॥

१. रविकरमेन तु पूर्वोदाहरणं न दत्तम्. अत्रापि 'भुअणअणन्दो तिहुअणकन्दो' इति पठितम्.

[भुवनानन्दस्त्रिभुवनकन्दः ।
भ्रमरसवर्णः स जयति कृष्णः ॥]

भुवनानन्दस्त्रिभुवनकन्दो भ्रमरसवर्णो जयति कृष्णः ॥ उद्दवणिका यथा—IIIISS; ६×४=२४ ॥ चतुरंसा निवृत्ता ॥

अथ मन्थाणच्छन्दः—

कामावआरेण अद्धेण पाएण ।
मत्ता दहा सुद्ध मन्थाण सो मुद्ध ॥ ५१ ॥
[कामावतारस्यार्धेन पादेन ।
मात्रा दश शुद्धा मन्थानं तन्मुग्धे ॥]

हे मुग्धे, यत्र कामावतारार्धेन पादेन मात्रा दश: शुद्धाः प्रतिपादमत्र भवन्ति । तन्मन्थाननामकं छन्दः ॥ अयमर्थः—अग्रे वक्ष्यमाणस्य विंशतिकलात्मनः कामावतारस्य छन्दसोऽर्धेन दशमात्रात्मकेन षडक्षरेण पादेन मन्थाननाम छन्दो भवति ॥ तत्र गणनियम उच्यते—'पूर्वं तगणोऽनन्तरमपि स एव' इति ॥ वाणीभूषणे तु—'कर्णध्वजानन्दमाधाय सानन्द । वर्णे रसैर्यत्तु मन्थानमेतत्तु ॥'

मन्थानमुदाहरति—जहा (यथा)—

राआ जहा लुद्ध पंडीअ हो मुद्ध ।
कित्ती करे रक्ख सो वाद उप्पेक्ख ॥ ५२ ॥
[राजा यत्र लुब्धः पण्डितोऽस्ति मुग्धः ।
कीर्तिं करे रक्ष स वाद उपेक्ष्यः ॥]

हे सज्जन, राजा यत्र लुब्धः पण्डितोऽपि मुग्धः । तत्र राजकुले त्वं स्वकीर्तिं करे रक्ष । स्वविद्याप्रकाशं मा कुर्वित्यर्थः । स वादोऽप्युपेक्ष्यताम् । यत्र न ज्ञाता कश्चिदिति भावः । उद्दवणिका यथा— SSISSI; ६×४=२४ ॥ मन्थानं निवृत्तम् ॥

अथ शङ्खनारीछन्दः—

छव्वावण्णबद्धो भुअङ्गापअद्धो ।
पआ पाअ चारी कही संखणारी ॥ ५३ ॥
[षड्वर्णबद्धो भुजङ्गपदार्धः।
..........कथिता शङ्खनारी ॥]

यत्र षड्वर्णाः पदे भवन्ति भुजङ्गप्रयातस्याग्रे वक्ष्यमाणस्य यगणचतुष्टयात्मकस्य च्छन्दसोऽर्धेन यद्वयेनैतस्य चरणो भवति पादे पादे यगणद्वयं भवति तच्छङ्खनारीछन्दः ॥ वाणीभूषणे तु—'ध्वजानन्दकर्णाः षडेवात्र वर्णाः । बुधानन्दकारी भवेच्छङ्खनारी ॥'

शङ्खनारीमुदाहरति—जहा (यथा)—

गुणा जस्स सुद्धा वहू रूअमुद्धा ।
घरे वित्त जग्गा मही तस्स सग्गा ॥ ५४ ॥
[गुणा यस्य शुद्धा वधू रूपमुग्धा ।
गृहे वित्तं जाग्रन्मही तस्य स्वर्गः ॥]

यस्य गुणाः शुद्धाः, यस्य वधू रूपेण मुग्धा सुन्दरी, यस्य गृहे वित्त जाग्रदस्ति तस्य मही पृथ्वी स्वर्गः ॥ उद्दवणिका यथा—ISSISS; ६×४=२४ ॥ शङ्खनारी निवृत्ता ॥

अथ मालतीछन्दः—

धअं सरवीअ मणीगुण तीअ ।
दई लहु अन्त स मालइ कन्त ॥ ५५ ॥
[ध्वजः शरद्वयं मणिगुणस्ततः ।
देयो लघुरन्ते सा मालती कान्ते ॥]

हे कान्ते, यत्र प्रथमं ध्वजो लघ्वादिस्त्रिकलः, ततः शरद्वय लघुद्वयम्, ततश्च मणिगुणो हारो गुरुरित्यर्थः । ततोऽन्ते एको लघुर्देयः । सा मालती मालतीनामकं छन्दो भवतीति जानीहीति जगणद्वयेन मालती छन्द इति फलितोऽर्थः ॥ तथा च वार्णभूषणेऽपि—'यदा जगणद्वि भवेदमलग्रु । फणी वितनोति स मालतिकेति ॥'

मालतीमुदाहरति—जहा (यथा)—

कर पसरंत बहुगुणवन्त ।
पफुल्लिअ कुन्द उगो सहि चन्द ॥ ५६ ॥
[कराः प्रसृताः बहुगुणवन्तः ।
प्रफुल्लिताः कुन्दा उदितः सखि चन्द्रः ॥]

हे सखि, बहुगुणवन्तः प्रसादाद्यनेकगुणयुक्ता किरणाः प्रसृताः, प्रफुल्लिताः कुन्दाः, उदितश्चन्द्र इति कस्याश्चिन्नायिकायाः सखीं प्रति वचः ॥ उद्दवणिका यथा—ISIISI; ६×४=२४ ॥ मालती निवृत्ता ॥

अथ दमनकच्छन्दः—

दिअवर किअ भणहि सुपिअ ।
दमणअ गुणि फणिवइ भणि ॥ ५७ ॥

---

१. 'वित्तजुग्गा' इति पठित्वा 'गृहे वित्तयुक्तं' इति व्याख्यातं रविकरेण.

[द्विजवरः क्रियते भण्यते सुप्रियः।
दमनकं गुणी फणिपतिर्भणति ॥]

यत्र प्रथमं द्विजवरश्चतुर्लघुको गणः क्रियते पश्चात्सुप्रियो लघुद्वयात्मको गणो भण्यते। नगणद्वयेन [दमनकं छन्दः] इति फलितोऽर्थः। तद्दमनकं छन्द इति गुणी फणिपतिर्भणति ॥ वाणीभूषणे तु—'द्विगुणनगणमिह वितनुहि। दमनकमिति [प्रति]गदति हि ॥'

दमनकमुदाहरति—जहा (यथा)—

कमलणयणि अमिअवअणि।
तरुणि घरणि मिलइ जे पुणि ॥ ९८ ॥

[कमलनयना अमृतवचना।
तरुणी गृहिणी मिलति यदि पुनः ॥]

कमलनयना अमृतवचना तरुणी गृहिणी यदि पुनर्मिलति तदा ता विहाय न कुत्रापि गमिष्यामीति कस्यचिद्विदेशस्थस्य कामिनो मित्रं प्रति वचनम् ॥ उद्दवणिका यथा—॥॥॥; ६×४=२४॥ दमनकं निवृत्तम्॥ अत्र प्रस्तारगत्या षडक्षरस्य चतुःषष्टिर्भेदा भवन्ति। तेष्वाद्यन्तभेदसहिता अष्टौ भेदाः प्रोक्ताः। शेषभेदाः सुधीभिरूहनीयाः। ग्रन्थविस्तरशङ्कया नात्रोक्ता इति ॥

अथ सप्ताक्षरप्रस्तारे समानिकाछन्दः—

चारि हार किज्जही तिण्णि गन्ध दिज्जही।
सत्त अक्खरा ठिआ सा समाणिआ पिआ ॥ ९९ ॥

[चत्वारो हाराः क्रियन्ते त्रयो गन्धा दीयन्ते।
सप्ताक्षरा स्थिता सा समानिका प्रिये ॥]

हे प्रिये, सा समानिकाछन्द इत्यर्थः। यत्र पदे चत्वारो हारा गुरवः क्रियन्ते। अन्तरान्तरा च त्रयो गन्धा लघवः क्रियन्ते। एवं सप्ताक्षराणि यस्या गुरुलघुरूपेण स्थितानि सा समानिकेत्यनुपज्यते ॥ तथा च वाणीभूषणे—'हारमेरुगा यदा रज्जुगा भवेत्सदा। सप्तवर्णसंगता सा समानिका मता ॥'

समानिकामुदाहरति—जहा (यथा)—

कुंजरा चलंतआ पव्वला पलंतआ।
कुम्मपिट्ठि कंपए धूलि सूर झंपए ॥ १०० ॥

---

१. वाणीभूषणादर्शानुसारेण लिखितम्. २. 'सुपुण' इति 'सुपुण्यैः' इत्यर्थकं रविदासपुस्तके.

[कुंजराश्चलन्ति पर्वताः पतन्ति ।
कूर्मपृष्ठं कम्पितं धूल्या सूरश्छादितः ॥]

कुंजरा दन्तावलाश्चलन्ति स्म अत एव पर्वताः पतन्ति । यद्वा पर्वतान्प्रेरयन्तो गजाश्चलन्ति स्मेति योजनीयम् । अतश्चादिकूर्मस्यापि पृष्ठं कम्पितं धूल्या सूरस्तरणिः समाच्छादितः । इति कस्यचिद्वन्दिनश्चलति कर्णे राजनि वचनम् ॥ उद्दवणिका यथा—SISISIS; ७×४=२८ ॥ समानिका निवृत्ता ॥

अथ सुवासच्छन्दः—

भणउ सुवासउ लहु सुविसेसनु ।
रैचि चतुमत्तह भगणइ अन्तह ॥ ६१ ॥

[भण सुवासं लघुसुविशेषम् ।
रचयित्वा चतुर्मात्रकं भगणमन्ते ॥]

हे प्रिये, यत्र लघवः सुतरां विशिष्यन्ते । तदेवाह—आदौ चतुर्मात्रिकं विरच्य अन्ते भगणमादिगुरुगणं दत्वा सुवासनामकं छन्दो भण ॥ तदुक्तं वाणीभूषणे—'द्विजगणमाहर भगणमुपाहर । भणति सुवासकमिति फणिनायकः ॥'

सुवासकमुदाहरति—जहा (यथा)—

गुरुजणभत्तउ बहुगुणजुत्तउ ।
जसु णिय पुत्तउ स इ पुणमन्तउ ॥ ६२ ॥

[गुरुजनभक्ता बहुगुणयुक्ताः ।
यस्य त्रयः पुत्राः स एव पुण्यवान् ॥]

गुरुजनभक्ता बहुगुणयुक्ता यस्य त्रयः पुत्राः स एव पुण्यवान् पुरुषः ॥ उद्दवणिका यथा—IIIISII; ७×४=२८ ॥ यथा च वाणीभूषणे—'गिरिवरनन्दिनि दुरितनिकन्दिनि । विदितनतां मयि कुरु करुणामयि ॥' सुवासको निवृत्तः ॥

अथ करहंची—

चरण गण विप्प पढम लइ थप्प ।
जगण तसु अन्त मुँणइ करहंच ॥ ६३ ॥

[चरणे गणो विप्रः प्रथमं⋯⋯स्थाप्यः ।
जगणस्तस्यान्ते जानीत करहञ्चीम् ॥]

१. 'रइ चउमत्तह भगणह अन्तह' इति पाठे 'आदौ चतुर्मात्रं विरच्यान्ते भगणः क्रियते' इति रविकरमतो व्याख्यातवान्. २. 'मुणह' क. 'मणिअ करहंच' इति पठित्वा 'करहंचो भण्यते' इति व्याख्यातं रविकरेण.

भोः शिष्याः, यत्र चरणे प्रथमं विप्रश्चतुर्लघुको गणः स्थाप्यते, तस्यान्ते जगणो मध्यगुरुको गणस्तां करहंचीं जानीत ॥ अत एव वाणीभूषणे—'द्विजगणमनेहि जगणमनुदेहि। विविधरसस्रवि भवति करहञ्चि ॥'

करहञ्चीमुदाहरति—जहा (यथा)—

जिवउ जइ एह तजउ गइ देह ।

रमण जइ सो इ विरह ज णु होइ ॥ ६४ ॥

[जीवामि यद्येषाहं त्यजामि गत्वा देहम् ।

रमणो यदि स एव विरहस्तु न भवतु ॥]

काचिदनुगमनपरा सुभटी विधातारमाह—हे धातरित्युपरिष्टात् । एह एषाहं त्यजामि गत्वा देहम् । यदि कदाचिदतःपरमपि जिवउ जीवामि पुनर्जन्मान्तरं लभेयमि(?)त्यर्थः । तदा मम यदि निर्गुणः सगुणो वा स एव रमणो भवतु, विरहस्तु कदापि मा भवत्विति प्रार्थये त्वामिति भावः ॥ उट्टवणिका यथा—।।।।।ऽ।; ७×४=२८॥ करहंची निवृत्ता ॥

अथ शीर्षरूपक छन्दः—

सत्ता दीहा जाणेही कण्णा तीं गो माणेही ।

चाउद्दाहा मत्ताणा सीसारूअं छंदाणा ॥ ६५ ॥

[सप्त दीर्घा ज्ञायन्ते कर्णास्त्रयो गमानय ।

चतुर्दश मात्रा शीर्षरूपं छन्दः ॥]

हे मुग्धे, यत्र चरणस्थाः सप्तापि वर्णा दीर्घा गुरवो भवन्तीत्यर्थः । तत्र गणनियममाह—कर्णा गुरुद्वयात्मकाः गणास्त्रयस्तेषामग्र एकं गं गुरुमानय । एवं पदे सप्त । मात्रानियममाह—चतुर्दश मात्रा द्विगुणार्थमवगन्तव्या । वर्णवृत्ते वर्णानामेव संख्यानियमनादिति । अत एव भूषणे—'उक्ता वर्णाः सप्ताख्या सर्वे दीर्घाः स्युर्यस्याम् । एषा शीर्षा निर्दिष्टा शेषा हर्षे नादेया ॥'

शीर्षामुदाहरति—जहा (यथा)—

चन्दा कुन्दा ए कासा हारा हीरा ए हंसा ।

जे जे सेता वण्णीआ तुम्हा कीत्ती जिण्णी आ ॥ ६६ ॥

[चन्द्रः कुन्द एते काशो हारो हीर एते हंसः ।

ये ये श्वेता वर्णिता युष्माकं कीर्तिर्जितवती तान् ॥]

कश्चिद्वन्दी कर्णमुपेत्य तत्कीर्तिं वर्णयति—हे राजन्, चन्द्रो धवलकरः, कुन्दो माघ्य

---

१. 'कोइ विरह जाणि होइ' इति पठित्वा 'रमणो योऽपि कोऽपि भवतु' इति व्याख्यातं रविदासेन.

पुष्पम्, काशः शरदि जायमानं तार्णं कुसुमम् । ए इति भाषया एते । किंच हारो मुक्तावली हीरं वज्रं हंसो मराल एते । अनुक्ताश्च जगति ये ये पारदकैलासहरहासशारदनीरदप्रभृतयः श्वेता वर्णितास्तानशेषानेषा युष्मत्कीर्तिर्जितवती ॥ उद्दवणिका यथा—SSSSSSS; ७×४=२८ ॥ यथा वाणीभूषणे—'दृष्टः कृष्णः कालिन्दीतीरे गोगोपानन्दी । वेणुक्वाणैरस्माकं चेतोहर्ता गोपीनाम् ॥' इति ॥ शीर्षा निवृत्ता ॥ अत्र प्रस्तारगत्या सप्ताक्षरस्याष्टाविंशत्यधिकशत(१२८)भेदेषु चत्वारो भेदाः प्रदर्शिताः । ग्रन्थविस्तरभीत्या शेषभेदा नोदाहृताः सुधीभिरूह्यास्त इति ॥

अथाष्टाक्षरप्रस्तारे सर्वगुर्वात्मकमाद्यं(त) विद्युन्मालाछन्दो लक्षयति—

विज्जूमाला मत्ता सोला पाए कण्णा चारी लोला ।
एअंरूअं चारी पाआ भत्ती खत्ती विज्जू राआ ॥ ६७ ॥

[विद्युन्माला मात्राः षोडश पादे कर्णाश्चत्वारो लोलाः ।
एवंरूपं चतुर्षु पादेषु भक्त्या क्षत्रियो वित्थ राजा ॥]

भोः शिष्याः, यत्र पादे चरणे लोलाश्चञ्चलाश्चत्वारः कर्णा द्विगुरवो गणा भवन्ति गुरुद्विगुणाः षोडशमात्राश्च, तद्विद्युन्मालाछन्दो वेदविश्राममेवंरूपं चतुष्पादं वसुगुरुचरणं भवतीति खत्री क्षत्रियजातिनागराजो भत्ती भक्त्या जल्पतीति वित्थ ॥ अत एवोक्तं कालिदासेन—'सर्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः । विद्वद्वृन्दैर्वीणावाणि व्याख्याता सा विद्युन्माला ॥' वाणीभूषणेऽप्युक्तम्—'उक्ता यस्यामष्टौ वर्णाः पादे पादे सर्वे दीर्घाः । विश्रामः स्यात्तुर्ये तुर्ये विद्युन्माला निर्दिष्टा सा ॥' इति ॥

विद्युन्मालामुदाहरति—जहा (यथा)—

उन्मत्ता जोहा ढुक्कन्ता विप्पक्खामज्झे लुक्कन्ता ।
णिक्कन्ता जन्ता धावन्ता णिब्भन्ती कित्ती पावन्ता ॥ ६८ ॥

[उन्मत्ता योधा मिलिता विपक्षमध्ये निलीयमानाः ।
निष्क्रान्ता यान्तो धावन्तो निभ्रान्तां कीर्तिं प्राप्ताः ॥]

कश्चिद्बन्दी समरं वर्णयति—उन्मत्ता वीररसाविष्टा योधाः सुभटा ढुक्कन्ताः परस्परं मिलिता इत्यर्थः । वीरदाः । विपक्षाणामहितानां मध्ये लुक्यन्ता निलीयमानाः । एवं निष्क्रान्ताः परबलं व्यापाद्य निर्गता यान्तो निजबलादराविचरा प्रतीत्यर्थः । धावन्त इतस्ततो धावमाना मरणार्थमित्यर्थः । अत एव निभ्रान्ता भ्रान्ता धैर्योत्कर्षभ्रमन्तीनां कीर्ति प्राप्ताः कीर्तिशेषा जाता इत्यर्थः ॥ उद्दवणिका यथा—SS SS SS SS; ८×४=३२ ॥ यथा वाणीभूषणे—'आगामिन्यो नो यामिन्यो या या याता सुप्तो भव । अभ्यन्तायासास्ताद्यं मानेनानेन म्लायति ते ॥' ग्रन्थान्तरे तु—'मो मो गो गो विद्युन्माला'। मगणद्वयं गुरुद्वयं च यत्रेति विद्युन्मालाछन्द इति गणभेदेन लक्षणमभिहितम् । यथा—'वासो यस्य वि-

द्युन्माला बर्हश्रेणी शाक्रश्चापः । यस्मिन्स स्यात्तापोच्छित्यै गोमध्यस्थः कृष्णाम्भोदः ॥' उद्दवणिका यथा—ऽऽऽ ऽऽऽ ऽऽ; ८×४=३२ ॥ विद्युन्माला निवृत्ता ॥

अथ प्रमाणिकाछन्दः—

लहू गुरू णिरन्तरा पमाणि अट्ठअक्खरा ।
पमाणि दूण क्रिज्जिए णराअ सो भणिज्जए ॥ ६९ ॥

[लघुर्गुरुर्निरन्तरं प्रमाणिकाष्टाक्षरा ।
प्रमाणिका द्विगुणा क्रियतां नराचः स भण्यताम् ॥

यत्र लघुर्गुरुश्च निरन्तरं भवति सा प्रमाणिकाछन्द इत्यर्थः । सा कतिवर्णेत्यपेक्षायामाह—अट्ठअक्खरा । अष्टाक्षरेत्यर्थः । सैवं प्रमाणिका चेद्द्विगुणा क्रियते । षोडशाक्षरपदेत्यर्थः । तदा स नराचो भण्यत इत्युक्तत्र षोडशाक्षरपदच्छन्दसो लक्षणमपि लक्ष्यतेऽनेनेति ॥ वाणीभूषणेऽपि—'प्रसूनकुण्डलक्रमैरिहाष्टवर्णविभ्रमैः । भुजंगराजवर्णिता प्रमाणिकेति सा मता ॥'

प्रमाणिकामुदाहरति—जहा (यथा)—

णिसुंभसुंभखंडिणी गिरीसगेहमंडिणी ।
पअंडमुंडखंडिआ पसण्ण होउ चंडिआ ॥ ७० ॥

[निशुम्भशुम्भखण्डिनी गिरीशगेहमण्डिनी ।
प्रचण्डमुण्डखण्डिका प्रसन्नास्तु चण्डिका ॥]

निशुम्भशुम्भयोर्दैत्ययोः खण्डिनी खण्डयित्री गिरीशस्य रुद्रस्य गेहं मण्डयत्यलंकरोति या सा गेहमण्डिनी कलत्ररूपेणेत्यर्थः । एवंविधा प्रचण्डानां दैत्यभटानां मुण्डखण्डिका चण्डिका कात्यायनी वः प्रसन्नास्तु ॥ ग्रन्थान्तरे तु 'नगस्वरूपिणी' इति नामान्तरम्॥ अत एव कालिदासग्रन्थे—'द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा । तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥' इत्याह ॥ उद्दवणिका यथा—।ऽ।ऽ।ऽ।ऽ; ८×४=३२ ॥ छन्दोमञ्जर्यां तु—'प्रमाणिका जरौ लगौ ।' जगणरगणौ लगौ लघुगुरू च यस्मिंस्तत्प्रमाणिकाछन्द इति गणभेदेन लक्षणमभिहितम् । यथा—'पुनातु भक्तिरच्युता सदाच्युताङ्घ्रिपद्मयोः । श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका ॥' उद्दवणिका यथा—।ऽ। ऽ। ऽ।ऽ; ८×४=३२॥ प्रमाणिका निवृत्ता ॥

अथ मल्लिकाछन्दः—

हारगंधबंधुरेण दिट्ठअट्ठअक्खरेण ।
बारहाहि मत्त जाण मल्लिआसुछंदमाण ॥ ७१ ॥

१. 'बंधणेण' इति पाठं 'बन्धनेन' इति व्याख्यातं रविदासेन.

[हारगन्धबन्धुरेण दृष्टाष्टाक्षरेण ।
द्वादशभिर्मात्राभिर्जानीहि मल्लिकासुच्छन्दोमानम् ॥]

हारो गुरुः, गन्धो लघुः, ताभ्यां बन्धुरेण प्रथमं गुरुरनन्तरं लघुरेवं क्रमेण दृष्टान्यक्षराणि यत्रेति तादृशेन चरणेन द्वादशमात्रेण मल्लिकाख्यं छन्दो जानीहि ॥ तदुक्तं वाणीभूषणे—'हारशङ्खक्रमेण मण्डिताष्टवर्णकेन । वर्णिता कुतूहलेन मल्लिकेति पिङ्गलेन ॥' इयमेव ग्रन्थान्तरे 'समानिका' इत्युच्यते ॥

मल्लिकामुदाहरति—जहा (यथा)—

जेण जिण्ण खत्तिवंस रिट्ठि मुट्ठि केसि कंस ।
बाणपाणि कट्टिएउ सोउ तुम्ह सुक्ख देउ ॥ ७२ ॥

[येन जितः क्षत्रियवंशो रिष्टो मुष्टिः केशी कंसः ।
बाणपाणयः कर्तिताः स युष्मभ्यं सुखं ददातु ॥]

येन भगवता धृतपरशुरामावतारेण क्षत्रियवंशो जितः । अथ च येन कृतकृष्णावतारेण अरिष्टो मुष्टिकः केशी कंसश्च जित इत्यनेनैवान्वयः । येन च बाणासुरस्य सहस्रबाहोः पाणयः कर्तिताश्छिन्नाः । स युष्मभ्यं सुखं ददातु ॥ उट्टवणिका यथा—ऽ।ऽ।ऽ।ऽ।; ८×४=३२॥ मल्लिका निवृत्ता ॥

अथ तुङ्गाछन्दः—

तरलणअणि तुंगो पढमगणसुरंगो ।
णगणजुअलबद्धो गुरुजुअलपसिद्धो ॥ ७३ ॥

[तरलनयने तुङ्गा प्रथमगणसुरङ्गा ।
नगणयुगलबद्धा गुरुयुगलप्रसिद्धा ॥]

हे तरलनयने, यत्र प्रथमगणेन गणः सुरङ्गो भवति । कति गणास्तत्रेत्यपेक्षायामाह—नगणयुगलेन बद्धो गुरुयुगलेन च प्रसिद्धस्तुङ्गाख्य छन्दः । पूर्वं नगणद्वयम्, अनन्तरं गुरुद्वयमिति फलितोऽर्थः । तदुक्तं भूषणे—'द्विगुणनगणकर्णैः सुललितनवसुवर्णैः । रविकृतविहितरङ्गा प्रभवति किल तुङ्गा ॥'

तुङ्गामुदाहरति—

कमलभमरजीवो सअलभुअणदीवो ।
दलिअतिमिरडिंबो उअइ तरणिबिंबो ॥ ७४ ॥

[कमलभ्रमरजीवः सकलभुवनदीपः ।
दलिततिमिरडिम्ब उदेति तरणिबिम्बः ॥]

---

१. 'सोइ देउ सुम्ह देउ' इति पा०. २. 'कट्टिअ (तापिअ)' इति पा०.

कमले बद्धानां भ्रमराणां जीवो जीवनदाता बन्धनमोचनादिति भावः । सकलभुवनदीपस्त्रिभुवनप्रकाशकत्वादिति भावः । दलितस्तिमिरस्य डिम्ब उपप्लवो येन। 'प्रादुर्डिम्ब उपप्लवे' [इति] देशीकोषात् । एतादृशस्तरणिबिम्ब उदेति ॥ उट्टवणिका यथा—॥। ॥। SS; ८×४=३२ ॥ तुङ्गा निवृत्ता ॥

अथ कमलच्छन्दः—

पढम गण विप्पओ बिहु तह णरेंदओ ।
गुरुसहित अंतिणा कमल एम भत्तिणा ॥ ७५ ॥
[प्रथमं गणो विप्रो द्वितीयस्तथा नरेन्द्रः ।
गुरुसहितोऽन्ते कमलमेवं................ ॥]

हे सखि, यत्र प्रथमो विप्रगणश्चतुर्लघ्वात्मको गणः, द्वितीयस्तथा नरेन्द्रो जगणः, तस्यान्ते गुरुः । अनया रीत्या पदेऽष्ट वर्णा भवन्ति तत्कमलनामक छन्दः । उक्तं च भूषणे—'द्विजवरगणान्वितं जगणगुरुसगतम् । फणिनृपतिजल्पितं कमलमिति कल्पितम् ॥'

कमलमुदाहरति—जहा (यथा)—

से जअइ जणद्दणा असुरकुलमद्दणा ।
गरुडवरवाहणा वलिभुवणचाहणा ॥ ७६ ॥
[स जयति जनार्दनोऽसुरकुलमर्दनः ।
गरुडवरवाहनो बलिभुवनापेक्षकः ॥]

असुरकुलमर्दनो गरुडवरवाहनो बलेः सकाशाद्भुवनापेक्षकः स जनार्दनो जयति सर्वोत्कर्षेण वर्तत इति ॥ उट्टवणिका यथा—॥॥ ।ऽ।ऽ; ८×४=३२ ॥ कमल निवृत्तम् ॥

अथ माणवकक्रीडितक छन्दो ग्रन्थान्तरस्थमुच्यते—

भादिगणं कर्णधरं सान्तमिदं वृत्तवरम् ।
पन्नगराजेन कृतं माणवकक्रीडितकम् ॥

यत्र प्रथमं भगणः, ततः कर्णः, ततोऽपि सगणः, तद्वृत्तं माणवकक्रीडितकमिति ॥ यथा—

कोकवधूशोकहरं पद्मवनीबोधकरम् ।
गाढतमोनाशकरं नौमितरामुष्णकरम् ॥

उट्टवणिका यथा—ऽ।। ऽऽ ।।ऽ ८×४=३२ ॥ छन्दोमञ्जर्यां तु—'भात्तलगा माणवकम् ।' भाद्भगणात्तलमात्तगणलघुगुरवो यत्र भवन्ति तन्माणवकं छन्द इति गणभेदेनोक्तम् ॥

१. 'अद्दणा' इति० रा०. २. 'विजभद (विजोन)' इति रा०.

यथा—'पक्ष्मलचूडं चपलैर्वत्सकुलैः केलिपरम् । ध्याय सखे स्मेरमुखं नन्दसुतं माणवकम् ॥' उद्वणिका यथा—ऽ।। ऽऽ। ।ऽ ८×४=३२ ।। माणवकक्रीडितकं निवृत्तम् ॥

अथानुष्टुप्छन्दः—

लघु स्यात्पञ्चमं यत्र गुरु षष्ठं च सप्तमम् ।
द्वितुर्यपादयोर्ह्रस्वमष्टाक्षरमनुष्टुभम् ॥

यत्र च्छन्दसि पञ्चममक्षरं चरणचतुष्टयेऽपि लघु तथैव षष्ठं गुरु द्वितीयचतुर्थयोः पादयोः सप्तमं ह्रस्वं लघ्वित्यर्थः । शेषवर्णा अनियता यत्र । एवमष्टाक्षरं वृत्तमनुष्टुभं जानीयादिति शेषः । अन्यत्रापि—'पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । षष्ठं गुरु विजानीयाच्छेषास्त्वनियता मताः ॥' इति ॥

यथा—

हृदयं मदयन्त्येते मदोन्मत्ताः शिलीमुखाः ।
विपाक्ताः पुष्पधनुषो मूर्ता इव शिलीमुखाः ॥

अत्र क्रमेण 'अलिबाणौ शिलीमुखौ' इत्यमरनिर्देशादर्थोऽवगन्तव्य इति ॥ उद्वणिका यथा—।।ऽ।।ऽऽऽ,।ऽ।ऽ।ऽऽ।,॥ इदमेव हलायुधवृत्त्यादिषु च्छन्दोग्रन्थेषु नानागणभेदेन विभ्रमवृत्तेषु वक्त्रसंज्ञां लभते । सकलपुराणेषु च साधारण्येनाष्टाक्षरपादस्यानुष्टुबिति प्रसिद्धिः । विशेषतस्तु विद्युन्मालादीनि वृत्तान्यष्टाक्षरप्रस्तारे दर्शितानि । अत एव च्छन्दोमञ्जर्यामेकाक्षरादिषड्विंशत्यक्षरपादानां वृत्तानां पृथक्पृथक्साधारणसंज्ञाः प्रोक्ताः ।

यथा—

'आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ।
पादैरुक्थादिसंज्ञा स्याच्छन्दःषड्विंशतिं गता ॥
उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप्च जगती चैव तथातिजगती मता ।
शर्करी चातिपूर्वा स्यादष्टयत्यष्टी ततः स्मृते ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चैव तथातिकृतिरुत्कृतिः ॥
इत्युक्ता छन्दसो संज्ञाः' इति ।

विशेषतस्तु तत्र तत्र प्रस्तारे तत्तत्संज्ञा ज्ञातव्या । इत्यास्तां विस्तरेण ॥ अत्र प्र-

स्तारगताष्टाक्षरस्य पट्पञ्चाशदधिकं द्विशतं भेदाः। तेषु कियन्तो भेदा उदाहृताः। शेषभेदा ऊहनीयाः सुबुद्धिभिरिति॥

अथ नवाक्षरप्रस्तारे महालक्ष्मीछन्दः—

दिट्ठ जोहा गणा तिण्णिआ णाअराएण जा विण्णिआ।
मासअद्धेण पाअ ट्ठिअं जाण मुद्धे महालच्छिअम्॥ ७७॥

[दृष्टा योधा गणास्त्रयो नागराजेन ये वर्णिताः।
मासार्धेन पादे स्थितां जानीहि मुग्धे महालक्ष्मिकाम्॥]

हे मुग्धे, यत्र नागराजेन पिङ्गलेन ये वर्णितास्ते त्रयोऽत्र जोहागणा रगणाः। मध्यलघुका गणा इति यावत्। दृष्टाः। अतो नवाक्षरं पदम्, पदे च मासार्धसंख्याभिः पञ्चदशभिर्मात्राभिः स्थितां महालक्ष्मिकां जानीहि। तदुक्तं वाणीभूषणे—'दृश्यते पक्षिराजत्रयं यत्र वृत्ते मनोहारके। संततं पिङ्गलेनोदिता सा महालक्ष्मिका कीर्तिता॥'

महालक्ष्मीमुदाहरति—जहा (यथा)—

मुण्डमाला गला कण्ठिआ णाअराआ भुआ सट्ठिआ।
वग्घछल्ला किआवासणा चण्डिआ पाउ सिंहासणा॥ ७८॥

[मुण्डमाला गले कण्ठिका नागराजो भुजे संस्थितः।
व्याघ्रकृत्या कृतवसना चण्डिका पातु सिंहासना॥]

सा सिंहासना सिंहाधिरूढा चण्डिका वः पातु। सा का। यस्या गले मुण्डानां माला कण्ठिका कण्ठभूषेत्यर्थः। यस्या नागराजो भुजायां संस्थितः। कथंभूता चण्डिका। व्याघ्रकृत्या पुण्डरीकचर्मणा कृतं वसनं वस्त्रं यया तथाभूता वः पात्विति॥ उद्वणिका यथा—ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, ५×४=३६॥ महालक्ष्मी निवृत्ता॥

अथ सारङ्गिका छन्दः—

दिअवर कण्णो सअणं पअ पअ मत्तागणणम्।
सुरमुणिमत्ता लहिअं सहि सरंगिका कहिअम्॥ ७९॥

[द्विजवरः कर्णः सगणः पदे पदे मात्रागणनम्।
शरमुनिमात्रा लभ्यन्ते सखि सारङ्गिका कथिता॥]

हे सखि, यत्र प्रथमं द्विजवरश्चतुर्लघुको गणः, ततः कर्णो द्विगुर्वात्मको गणः, ततः सगणोऽन्तगुरुर्गणः, एवंप्रकारेण यत्र पदे पदे मात्रागणनं क्रियत इति शेषः। तदेवाह—शराः पञ्च मुनयः सप्त मिलित्वा द्वादश मात्राः पादे लभ्यन्ते यस्याः सा सार-

१. 'मासअद्धेण पाअ ट्ठिअं (पञ्चदशकलया स्थिता यतयतिः)' इति रवि॰.

ङ्किका कथ्यते द्विजवरकर्णसगणैर्नवाक्षरपदसारङ्किका छन्द इति फलितोऽर्थः ॥ तथा च वाणीभूषणे—'द्विजवरकर्णौ सगण विरचय यस्याश्चरणम् । जगदभिराम हि तदा भवति हि सारङ्गिकया ॥'

सारङ्गिकामुदाहरति—जहा (यथा)—

हरिणसरिस्साणअणा कमलसरिस्सावअणा ।
जुअजणचित्ताहरिणी पिअसहि दिट्ठा तरुणी ॥ ८० ॥

[हरिणसदृशनयना कमलसदृशवदना ।
युवजनचित्तहरिणी प्रियसखि दृष्टा तरुणी ॥]

हे प्रियसखि, त्वया सा दृष्टा । कीदृशी । हरिणसदृशं नयनं चञ्चलत्वात्तदुपमा यस्याः सा एणाक्षीत्यर्थः । कमलसदृशं विस्तृतं सुगन्धि च वदनं यस्याः सा तथा पुनर्युवजनानां चित्तं हरति तच्छीला इति कस्याश्चित्सख्याः सखीं प्रति वचनम् ॥ उद्वणिका यथा—॥॥,ऽऽ,॥ऽ, ९×४=३६ ॥ यथा वाणीभूषणे—'प्रणमत राधारमणं नृगनृपबाधाशमनम् । असुरमदापाहरणं यदुकुलचूडाभरणम् ॥' सारङ्गिका निवृत्ता ॥

अथ पाइत्ताछन्दः—

कुन्तीपुत्ताजुअ लहिअं तीए विप्पो धुअ कहिअम् ।
अन्ते हारो जह जणिअं पाइत्तारू फणिभणिअम् ॥ ८१ ॥

[कुन्तीपुत्रयुग लभ्यते ततो विप्रो ध्रुव कथितम् ।
अन्ते हारो यत्र जन्यते पाइत्ताख्य फणिभणितम् ॥]

भोः शिष्याः, यत्र कुन्तीपुत्र कर्णस्तयोर्युगं तेन गुरुचतुष्टयं पूर्वं यत्र लभ्यते तीए ततस्तृतीये वा स्थाने ध्रुवं निश्चितं विप्रश्चतुर्लघुको गणः कथ्यते । यत्र चान्ते चरणान्ते हारो गुरुर्जन्यते तदेतत् 'पाइत्ता' छन्दसो रूपं फणिना पिङ्गलेन भणितम् ॥ तथा चोक्तं भूषणे—'आदौ कर्णद्वयमुदितं कृत्वा विप्रं गुरुसहितम् । तद्वृत्तं पिङ्गलभणितं पाइत्तेति श्रवणहितम् ॥'

पाइत्तामुदाहरति—जहा (यथा)—

फुल्ला णीवा भम भमरा दिट्ठा मेहा जलसभरा ।
णच्चे विज्जू पिअसहि आ आवे कन्ता मह्हि कहिआ ॥ ८२ ॥

[फुल्ला नीपा भ्रमन्ति भ्रमरा दृष्टा मेघा जलसभराः ।
नृत्यति विद्युत्प्रियसख्यन आगमिष्यति कान्तः सखि कथय ॥]

---

१. 'पाइत्ताख्अ उ थहिअम् (पाइत्ताख्यं तु कथितम्)' इति ग०. २. 'पिअसहिआ (प्रियसहिता)' इति ग०.

काचित्प्रोषितपतिका निजसखीमाह—हे प्रियसखि, 'वर्षासमयेऽहमागमिष्यामि' इति प्रतिज्ञाय प्रस्थितो वल्लभः। तदिदानीं नीपाः कदम्बाः पुष्पिताः, भ्रमरा द्विरेफा भ्रमन्ति, मेघा अपि जलसभरा नीरमिश्रिता दृष्टाः, विद्युत्सौदामन्यपि नृत्यति। अतः परमपि कथय कान्तः कदायास्यतीति। एतादृशेऽपि समये नागतश्चेच्छिथितं स कान्त एव सुखनाशकत्वात्, न तु वल्लभ इति भावः॥ उद्दवणिका—SS,SS,IIII,S; ९×४=३६॥ पाइत्ता निवृत्ता॥

अथ कमलच्छन्दः—

सरसगणरमणिआ दिअगणजुअ पलिआ।
गुरु धरिअ पइपउ दहकलअ कमलउ॥ ८३॥

[सरसगणरमणीयं द्विजगणयुगं पतितम्।
गुरुर्ध्रियते प्रतिपदं दशकलकं कमलम्॥]

[1] भोः शिष्याः, यत्र सरसौ रमणीयौ द्विजगणौ चतुर्लघुकगणौ पतितौ। पदान्ते च गुरुर्ध्रियते। एवं पदे नव वर्णाः दश कलाश्च प्रतिपदं यत्र पतिताः, तत्कमलनामकं छन्द इति॥ तथा च वाणीभूषणे—'द्विजवरकगणयुग कलय गुरुविरतिगम्। भणति फणिपतिरिदं कमलपतिरतिपदम्॥'

कमलमुदाहरति—जहा (यथा)—

चल कमलणअणिआ खलइ थणवसणिआ।
हसइ परणिअलआ असइ धुअ वहुलिआ॥ ८४॥

[चलति कमलनयना स्खलति स्तनवसनम्।
हसति परनिकटेऽतोऽसती ध्रुवं वधूटिका॥]

चलति कमलनयना, स्खलति स्तनवसनम्, हसति परनिकटे, अत एव ध्रुवं निश्चितमियं वहुलिआ वधूटी असतीत्यहं मन्ये इति शेषः॥ उद्दवणिका यथा—IIII, IIII, S, ९×४=३६ कमलं निवृत्तम्॥

अथ बिम्बच्छन्दः—

रइअ फणि बिम्ब एसो गुरुजुअल सव्वसेसो।
सिरहि दिअ मज्झ राओ गुणह गुणि एसहाओ॥ ८५॥

[रचितं फणिना बिम्बमेतद्गुरुयुगलं सर्वशेषे।
शिरसि द्विजो मध्ये राजा गुणयत गुणिन एवंस्वभावम्॥]

भो गुणिनः, रचमायातैं गुणयत नात्र फणिरियं विधिरिति भावः। यत्र गुरुयुगलं

1. 'सगण गन (सगणगुणम्। चतुर्लघुद्वयानन्तरं गुरुरिति यावत्) इति रवि०.

सर्वशेषे पादान्ते शिरसि आदौ द्विजश्चतुर्लघुर्गणः, मध्ये विप्रकर्णयोर्मध्ये राजा जगणो गुरुमध्यो गणो यस्मिस्तत्फणिना पिङ्गलेन रचित बिम्बनामक छन्द इति ॥ भूषणे तु गणभेदेनोक्तं यथा—'नगणकरगन्धकर्णं भवति नववर्णपूर्णम् । फणिवदनभूषणं यद्भवति किल बिम्बमेतत् ॥'

निम्बमुदाहरति—जहा (यथा)—

चलइ चल वित्त एसो णसइ तरुणत्तवेसो ।

सुपुरुसगुणेण बद्धा थिर रहइ कित्ति सुद्धा ॥ ८६ ॥

[चलति चलं वित्तमेतन्नश्यति तरुणत्ववेशः ।

सुपुरुषगुणेन बद्धा स्थिरावतिष्ठते कीर्तिः शुद्धा ॥]

हे वयस राजन् वा, एतच्चलं वित्तं चलति । किं च तरुणत्ववेशस्तारुण्यरूपं नश्यति । अतः कारणात्सुपुरुषस्य शौर्यौदार्यगाम्भीर्यमर्यादया प्रभृतिगुणेन बद्धा नद्धा शुद्धा शरच्चन्द्रावदाता स्थिरा कल्पान्तस्थायिनी कीर्तिरवतिष्ठते । वित्तयौवनादिकमतिचञ्चलत्वान्नश्वरमित्य[तः] कीर्तिमेनामुपार्जयेति राजानं प्रति मित्रं प्रति वा कस्यचिन्निपुणमतेर्वचनमिदम् ॥ उट्टवणिका यथा—॥॥, ।ऽ।, ऽऽ, ९×४=३६॥ बिम्बो निवृत्तः ॥

अथ तोमरच्छन्दः—

जसु आइ हत्थ विआण तह घ पओहर जाण ।

पभणेइ णाअणरिन्द इम माणु तोमरछन्द ॥ ८७ ॥

[यस्यादौ हस्तं विजानीहि तथा द्वौ पयोधरौ जानीहि ।

प्रभणति नागनरेन्द्र एवं मानय तोमरछन्दः ॥]

हे कान्ते, यस्यादौ हस्तं सगणं गुर्वन्तं गणं विआण विजानीहि । तथा द्वौ पयोधरौ जगणौ गुरुमध्यमौ गणौ जानीहि । नागनरेन्द्रो दर्वीकराधारः प्रकर्षेण भणतीति तत्प्रामाण्यादेवं तोमराख्यं छन्दो मानय ॥ वाणीभूषणेऽप्युक्तम्—'प्रथमं करं विनिधाय जगणद्वयं च निधाय । इति तोमरं भुजगारि फणिराजवक्त्रविहारि ॥'

तोमरमुदाहरति—जहा (यथा)—

चलि चूअ कोइलसाव महुमास पचम गाव ।

मणमज्झ वम्मह ताव ण हु कन्त अज्जु वि आव ॥ ८८ ॥

[चलिताश्चूतं कोकिलशावा मधुमासे पञ्चमं गायन्ति ।

मनोमध्ये मन्मथस्तपति न खलु कान्तोऽद्याप्यायाति ॥]

चलितश्चोणितचरिरा वसन्तसमयेऽपि कान्तमनागतं मत्वातिनिर्विण्णमानसा साकूतं सखीमाह—हे सखि, कोकिलशावकाः विरहोद्दीपकं रसाले प्रति चलिताः । अपि च

मधुमासेऽस्मिन्पञ्चमं स्वरं च गायन्ति। अतः प्राप्ते वसन्ते मनोमध्ये मन्मथस्तपति। यद्वा मम मनो मन्मथस्तापयति। न खलु कान्तोऽद्याप्यायातीति॥ यथा वा[णीभूषणे]—'सखि मादके मधुमासि व्रज सत्वरं किमिहासि। सह तेन किं विहरामि किमु पावकं प्रविशामि॥' उद्दवणिका यथा—॥ऽ, ।ऽ।, ।ऽ।, ९×४=३६॥ तोमरं निवृत्तम्॥

अथ रूपामालीछन्दः—

णाआराआ जप्पे सारा ए चारी कण्णा हन्ते हारा ए।
अट्ठादाहा मत्ता पीआए रूआमाली छन्दा जम्पीए॥ ८९॥
[नागराजो जल्पति सारमिदं चत्वारः कर्णा अन्ते हार एकः।
अष्टादश मात्रा पादे रूपामालाछन्दो जल्प्यते॥]

भोः शिष्याः, नागराजः पिङ्गलः सारमत्युत्कृष्टमिदं छन्दो जल्पति। यत्र च चत्वारः कर्णा द्विगुरवो गणाः, अन्ते पदान्ते हारो गुरुः। ए एकः इत्यर्थः। एवं नवाप्यक्षराणि गुरूणि मात्राश्चाष्टादश द्विगुणाभिप्रायेण गुरूणां यत्र पादे तद्रूपमालीनामकच्छन्दः कथ्यते इति॥ अयं च नवाक्षरप्रस्तारे प्रथमो भेदः। अत एव वाणीभूषणे—'चत्वारोऽस्मिन्कर्णा जायन्ते छन्दस्येकं हारं कुर्वन्ते। रम्या वर्णाः पादे राजन्ते रूपामालीवृत्तं तत्कान्ते॥'

रूपामालीमुदाहरति—जहा (यथा)—

जं णच्चे विज्जू मेहंधारा पंफुल्ला णीवा सद्दे मोरा।
वाअन्ता मन्दा सीआ वाआ कम्पन्ता गाआ कन्ता णा आ॥९०॥
[यन्नृत्यति विद्युन्मेघान्धकारः प्रफुल्लिता नीपाः शब्दायन्ते मयूराः।
वान्ति मन्दाः शीता वाताः कम्पन्ते गात्राणि कान्तो नायातः॥]

काचित्प्रोषितपतिका सखीमाह—यद्यस्माद्विद्युत्तडिन्नृत्यति। मेघा अन्धकाराश्च ह-रितो यस्मात्। यतश्च नीपाः कदम्बाः प्रफुल्लिताः। किं च मयूराः कूजन्ति। केकारवं कुर्वन्तीत्यर्थः। वान्ति मन्दाः शीता वाताः। कम्पन्ते गात्राणि। अतः प्राप्ता प्रावृट्। कान्तः परं नागत इति॥ यथा वा[णीभूषणे]—'हत्वा शत्रु नृत्यन्ती चण्डं सा चण्डी नः कल्याणं कुर्यात्। देवेन्द्राद्याः प्रीत्या संप्राप्ताः संसेवन्ते यत्पादाम्भोजम्॥' उद्दवणिका यथा—ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽ, ९×४=३६॥ रूपामाली निवृत्ता॥ अत्रापि प्रस्तारगत्या नवाक्षरस्य द्वादशाधिकपञ्चशतभेदेषु सप्त भेदा दर्शिताः। शेषभेदा ऊहनीयाः सुमतिभिरिति॥

अथ दशाक्षरप्रस्तारे संयुताछन्दः—

जसु आइ हत्थ विआणिओ तह बे पओहर जाणिओ।
गुरु अन्त पिङ्गलजम्पिओ सहि छन्द संजुत थप्पिओ॥ ९१॥

---

१. 'अट्ठाहा' इति रवि०. २. 'जा पाए (यत्र पादे) इति रविदासपाठः सम्यक्. ३. 'वाआ (वायाः) इति रवि०.

[यस्यादौ हस्तो विज्ञातस्तथा द्वौ पयोधरौ ज्ञातौ ।

गुरुरन्ते पिङ्गलजल्पितं सखि छन्दः संयुता स्थापितम् ॥]

हे सुन्दरि, यस्यादौ हस्तः सगणो गुर्वन्तो गणो विज्ञातः । तथा ये द्वौ पयोधरौ जगणौ मध्यगुरुकगणौ ज्ञातौ अन्ते पादान्ते गुरुः । तत्पिङ्गलेन जल्पितं संयुतेति छन्दः स्थापितम् । लोके इति शेषः ॥ सगणजगणद्वयगुरुभिः संयुतेति फलितोऽर्थः ॥ तथा च भूषणे—'सगणं पुरः कुरु शोभितं जगणद्वय गुरुसगतम् । फणिनायकेन निवेदिता भवतीह संयुतका हिता ॥'

संयुतामुदाहरति—जहा (यथा)—

तुह जाहि सुन्दरि अप्पणा परितज्जि दुज्जणथप्पणा ।

विअसन्तकेअइसंपुला णं हु ए वि आविअ वप्पुला ॥ ९२ ॥

[त्वं याहि सुन्दर्यात्मनैव परित्यज्य दुर्जनस्थापनाम् ।

विकसत्केतकीसंपुटा न खल्वद्याप्यागतो वराकः ॥]

काचित्सखी प्रोषितपतिकां नायिकामभिसारार्थं प्रेरयन्त्याह—हे सुन्दरि सर्वावयवरमणीये, दुर्जनस्थापनां कुलीनतारूपव्यवस्था परित्यज्य अप्पणा आत्मनैव याहि । संकेतनिकुञ्जगमनमभिमतमिति भावः । यतः—विकसत्केतकीसंपुटे प्रावृट्काले न खल्वद्याप्यागतः स वराक इति ॥ उद्दवणिका यथा—IIS, ISI, ISI, S, १०×४=४०॥ [संयुता निवृत्ता ॥]

अथ चम्पकमालाछन्दः—

हार ठवीजे काहलदुज्जे कुन्तिअपुत्ता ऐगुरुजुत्ता ।

हत्थ करीजे हार ठवीजे चम्पकमाला छन्द कहीजे ॥ ९३ ॥

[हारः स्थाप्यते काहलद्वयं कुन्तीपुत्र एकगुरुयुक्तः ।

हस्तः क्रियते हारः स्थाप्यते चम्पकमाला छन्दः कथ्यते ॥]

भो शिष्याः, यत्र प्रथमं हारो गुरुः स्थाप्यते । ततः काहलद्वयम् । लघुद्वयमित्यर्थः । ततः कुन्तीपुत्रः कर्णो द्विगुरुको गणः । कीदृशः कर्णः । एगुरुजुत्ता एकगुरुयुक्तः । ततो हस्तः सगणो गुर्वन्तगणः क्रियते । पदान्ते हारो गुरुः स्थाप्यते । एवं दश वर्णाः पादे यत्र क्रियन्ते तच्छन्दश्चम्पकमालेति कथ्यते ॥ वाणीभूषणे प्रकारान्तरेणोक्तम्—'पादविराजन्नूपुरयुग्मा कुण्डलशोभामांशुगुणा । उद्भवती हारद्वयपूर्णा चम्पकमाला भाति गुणा ॥' कश्चिदियमेव रुक्मवती, कश्चित् रूपवतीति ॥

१. 'णिहु एहि आइहि (निभृतमेवागमिष्यति)' इति रवि०. २. 'गुरुमेजुत्ता' इति रवि०. ३. 'करीजे' इति रवि०.

चम्पकमालामुदाहरति—जहा (यथा)—

ओगरभत्ता रम्भअपत्ता गाइक घित्तादुद्धसजुत्ता ।
मोइणिमच्छा णालिचगच्छा दिज्जइ कन्ता खा पुणमन्ता ॥ ९४ ॥

[शाक्तिभक्तः रम्भापत्रे गोघृतदुग्धसंयुक्तः ।
मोइणिमत्स्यो नालिचगुच्छो दीयते कान्तया खाद्यते पुण्यवता ॥]

शाल्योदनं गोघृतदुग्धसंयुक्तम्, किच मोइणिमच्छा मत्स्यविशेषः, नालिचः शाकः, एतत्सर्वं कान्तया स्वहस्तेन रम्भापत्रे कदलीदले दीयते पुण्यवता भुज्यते इति कस्यचिदाढ्यस्य विदूषकस्य वा सोपहासं वचनमिति ॥ उट्टवणिका यथा—ऽ॥, ऽऽ, ऽ, ।।ऽ, ऽ; १०×४=४०॥ चम्पकमाला निवृत्ता ॥

अथ सारवतीछन्दः—

दीह लहूजुअ दीहलहू सारवई धुअ छन्द कहू ।
अन्त पओहर ठावु धआ चोदहमत्तविरामकआ ॥ ९५ ॥

[दीर्घो लघुयुगं दीर्घलघू सारवतीं ध्रुवं छन्दः कथय ।
अन्ते पयोहरं स्थापय ध्वजं चतुर्दशमात्राविरामं····॥]

भोः शिष्याः, यत्र प्रथमं दीर्घो गुरुः, तदनन्तरं लहूजुअ लघुद्वयमित्यर्थः । ततोऽपि दीर्घो गुरुः, तदनन्तरमेको लघुः, ततश्चान्ते दीर्घलघ्वोरन्ते पयोधरो जगणो गुरुमध्यमो गणो यत्र । ततोऽपि ध्वजो लघ्वादिस्त्रिकलः । एवं दश वर्णाः पादे मात्राश्चतुर्दश च यत्र भवन्ति तद्ध्रुव निश्चितं सारवतीति छन्दः कथितमिति गुरुर्लघुद्वयं गुरुलघू जगणलघ्वादित्रिकलौ च यत्र तत्सारवतीछन्द इति फलितोऽर्थः॥ वाणीभूषणे तु प्रकारान्तरेण लक्षणमभिहितं यथा—'दीर्घलघुद्वयमादिगणा हारविराजितचरणा । पिङ्गलनागमते भणिता सारवती कविसार्थहिता ॥'

सारवतीमुदाहरति—जहा (यथा)—

पुत्त पवित्त बहुत्त धणा भत्ति कुटुम्बिणि सुद्धमणा ।
हक्क तरासइ भिच्चगणा को कर बब्बर सग्ग मणा ॥ ९६ ॥

[पुत्रः पवित्रो बहु धनं भक्ता कुटुम्बिनी शुद्धमनाः ।
हक्कारेण त्रस्यति भृत्यगणः कः करोति बर्बरः स्वर्गे मनः ॥]

कश्चिच्छालीनगृहस्थः स्वगार्हस्थ्येन सतुष्टो गर्वायते—भो अनुजीविनो लोका हे मित्रेति वा । यस्य मम पवित्राः शुद्धाः । पितृभक्ता इति यावत् । एवंविधाः पुत्राः पुत्रास्रो नरकात्त्रातारस्तनयाः सन्ति । अथ च यस्य ममात्मजाः पवित्राः पतिः कुलितं तस्मादपि

त्रायन्ते वज्रादपि रक्षका महावीरपराक्रमाः सन्ति । अथ च यस्य मम बहुलं धनं धनाधीशप्रतिस्पर्धि । वित्त इति शेषः । अपि च कुटुम्बिनी वधूः शुद्धमना अकुटिलान्तःकरणा सती भक्ता भर्तृजनतत्परा वास्ति । यस्य च मम हक्केण अमुकेति वाङ्मात्रेण भृत्यगणः सेवकवर्गः त्रसति । एवं सकलसुखानुभवे सति को वा वर्वरोऽतिवाचाटः स्वर्गे मनः करोति । महीतल एव स्वर्गसुखादपि बहुलतरशर्मलाभादिति भावः ॥ उट्टवणिका—यथा—ऽ, ॥, ऽ, ।, ।ऽ।, ।ऽ, १०×४=४० ॥ यथा वा[णीभूषणे]—'माधवमानय मत्सविधं किं सखि चिन्तय मित्रवधम् । यत्र करिष्यसि मत्प्रणयं नो मम याति तदासमयम् ॥' एतदनुसारेणोट्टवणिकापि प्रदर्श्यते—ऽ, ॥, ऽ॥, ऽ॥, ऽ, १०×४=४०॥ सारवती निवृत्ता ॥

अथ सुषमाछन्दः—

कण्णो पढमो हत्थो जुअलो कण्णो तिअलो हत्थो पअलो ।
सोला कलआ छक्का वलआ एसा सुसमा दिट्ठासुसमा ॥ ९७ ॥

[कर्णः प्रथमो हस्तो द्वितीयः कर्णस्तृतीयो हस्तः प्रकटः ।
षोडश कलाः षड् वलया एषा सुषमा दृष्टासुसमा ॥]

हे मुग्धे, यत्र प्रथमः कर्णो द्विगुरुगणः, जुअलो द्वितीयो हस्तः सगणो गुर्वन्तगणो भवति । ततस्तिअलो तृतीयः कर्ण एव, सर्वशेषे हस्तः सगण एव प्रकटो यत्र दशाक्षरचरणे षोडश कला भवन्ति अथ छक्का वलयाः षड् गुरवश्चरणेषु शेषाः रेखा चेत्येवं षोडश मात्रा यत्र सासुसमा प्राणसमा । अतिप्रियेत्यर्थः ॥ भूषणे त्वन्यथोक्तम्—'कर्णो द्विलघुः कर्णो भगणः शेषे गुरुणा पूर्णश्चरणः । यस्यां भवति मुग्धे परमा सैषा सुषमा दीव्यत्सुषमा' ॥

सुषमामुदाहरति—जहा (यथा)—

भोंहा कविला उच्चा णिअला मज्झे पिअला णेत्ताजुअला ।
रुक्खा वअना दन्ता विरला कैसें जिविआ जाकी पिअला॥९८॥

[भ्रुवः कपिला उच्चं ललाटं मध्ये पीतं नेत्रयुगलम् ।
रूक्षं वदनं दन्ता विरला कथं जीवति यस्य प्रिया ॥]

यस्या भ्रूः कपिला, उच्चं ललाटम्, यस्याश्च नेत्रयुगलं मध्ये पीतम् । विद्रालसदृशमित्यर्थः । अथ च रूक्षं वदनं दन्ताश्च विरला दृश्यन्ते कथं जीवति यस्य त्वमपीदृशी प्रिया मवसीति परमकुत्सितरूपां करालां प्रति कस्याश्चित्कान्तसकलावयवाया वचनम् ॥ उट्टवणिका यथा—ऽऽ, ॥ऽ, ऽऽ, ॥ऽ, १०×४=४०॥ यथा वा[णीभूषणे]—'एणीनयने केलीकलहे प्रेयान्वद किं कि नो कुरुते । धन्या रमणी सर्वं सहते दुःखं सुखवत्स्वान्ते मनुते ॥' तदनुसारेणोट्टवणिका यथा—ऽऽ, ॥, ऽऽ, ऽ॥, ऽ, १०×४=४०॥ सुषमा निवृत्ता ॥

अथामृतगतिछन्दः—

दिअवर हार पअलिआ पुण वि तह ट्ठिअ करिआ।
वसुलहु वे गुरुसहिआ अमिअगइ धुअ कहिआ॥ ९९॥

[द्विजवरो हारः प्रकटितः पुनरपि तथास्थितं कुरु।
वसुलघुद्विगुरुसहितामृतगतिर्ध्रुवं कथिता॥]

भोः शिष्याः, सा अमृतगतिरिति ध्रुवं निश्चितं कथिता। सा का। यत्र प्रथमं द्विजवरगणश्चतुर्लघ्वात्मको गणः, ततो हारो गुरुः प्रकटितः, पुनरपि तथा स्थितं कुरु द्विजगणानन्तरं गुरुं कुर्वित्यर्थः। एवं सत्यष्टौ लघवो द्विगुरुसहिताश्चरणे यस्याः सामृतगतिरिति॥ वाणीभूषणे तु—'नगणपयोधररुचिरा कुसुमविराजितसुकरा। वसुलघुदीर्घयुगलका भवति सखेऽमृतगतिका॥' क्वचिदियमेव त्वरितगतिरिति॥

अमृतगतिमुदाहरति—जहा (यथा)—

सरदसुधाअरवअणा विअसरोरुहणअणा।
मअगलकुञ्जरगमणी पिअसहि दिट्ठिअ तरुणी॥ १००॥

[शारदसुधाकरवदना विकचसरोरुहनयना।
मदगलकुञ्जरगमना प्रियसखि दृष्टा तरुणी॥]

हे प्रियसखि, त्वया सा तरुणी दृष्टा। कीदृशी। शारदसुधाकरवदना। पुनः कीदृशी। विकचसरोरुहनयना। मदकलकुञ्जरगमना। इति॥ उट्टवणिका यथा—॥॥,ऽ,॥॥,ऽ, १०×४=४०॥ अमृतगतिर्निवृत्ता॥ अत्र प्रस्तारगत्या दशाक्षरस्य चतुर्विंशत्यधिकसहस्रं १०२४ भेदा भवन्ति॥ तेषु पञ्च भेदाः प्रोक्ताः। शेषभेदाः सुधीभिरूहनीया इति॥

अथैकादशाक्षरप्रस्तारे बन्धुच्छन्दः—

णीलसरूअह एक करीजे तिण्णि भआगण तत्थ भणीजे।
सोलह मत्तह पाअ ठवीजे दुग्गुरु अन्तहि बन्धु कहीजे॥१०१॥

[नीलस्वरूपादेकः कर्तव्यस्त्रयो भगणास्तत्र भण्यन्ते।
षोडश मात्राः पादे स्थाप्यन्ते द्विगुरुरन्ते बन्धुः कथ्यते॥]

षोडशवर्णात्मकैर्भगणपञ्चकयुक्तैः षोडशभिश्चरणैश्चतुरछन्दोभिप्रायेण नीलस्वरूप छन्दो भवति। अतश्च नीलस्वरूपादेकश्चरणः कर्तव्यः। तत्र चरणे षोडशवर्णपञ्चभगणगुर्वात्मके त्रयो भगणा गुर्वादिका गणा भण्यन्ते। अन्ते भगणत्रयान्ते द्विगुरुः कर्णो दीयते पादे च षोडश मात्राः स्थाप्यन्ते यत्र तद्बन्धुः नामक छन्दः कथ्यते॥ भूषणेऽप्युक्तम्—'भत्रयशोभितसंगतकर्ण एकसुसंगतपङ्क्तिकवर्णः। पन्नगराजनिवेदितबन्धू राजति भूपतिसमदि बन्धुः॥'

बन्धुमुदाहरति—जहा (यथा)—

पाण्डववंसहि जन्म करीजे संपअ अज्जिय धम्मक दीजे ।

सो उ जुहिट्ठिर संकट पाआ देवक लेखिअ केण मिटाआ॥१०२॥

[पाण्डोर्वंशे जन्म कृतं संपदमर्जयित्वा धर्मार्थं दत्तम् ।

तेनापि युधिष्ठिरेण संकटं प्राप्तं देवेन लिखितं कः प्रमार्ष्टि ॥]

पाण्डववंशे जन्म कृतम् । संपदमर्जयित्वा धर्मार्थे दत्तम् । तेनापि युधिष्ठिरेण संकटो वनवासाज्ञातवासलक्षणः प्राप्तः । अतः कारणाद्देवेन विधात्रा लिखितं कः प्रमार्ष्टि । न कोऽपीत्यर्थः ॥ उद्दवणिका यथा—ऽ।।,ऽ।।, ऽ।।,ऽऽ, ११×४=४४॥ यथा वा[णीभूषणे]—'भक्षितवासरनायकचन्द्रः कामिसहस्तसमाहिततन्द्रः । दर्शितलोलतडित्करवालः सोऽयमुपैति घनागमकाल. ॥' [बन्धुर्निवृत्तः ॥]

अथ सुमुखीछन्दः—

दिअवर हार लहूजुअला वलअ परिट्ठिअ हत्थअला ।

पअ कल चोद्दह जम्प अही कइवर जाणइ सो सुमुही ॥ १०३ ॥

[द्विजवरो हारो लघुयुगलं वलयः प्रतिष्ठितं हस्ततलम् ।

पादे कलाश्चतुर्दश जल्पत्यहिः कविवरा जानीत सा सुमुखी ॥]

भोः कविवराः, यत्र प्रथम द्विजवरश्चतुर्लघुको गणः, ततो हारो गुरुः, ततो लघुयुगलम्, अनन्तरं वलयो गुरु, ततः प्रतिष्ठित हस्ततल सगणो गुर्वन्तगणो यत्र एवं पदे चतुर्दशमात्रा रुद्रवर्णाश्च यत्र तां सुमुखीं जानीतेति जल्पत्यहिः शेषनाग इति ॥ वाणीभूषणे तु प्रकारान्तरेण लक्षणमभिहितम् । यथा—'नगणचिरालयसहितयं कविजनभाषितवृत्तचयम् । प्रभवति शेषसहस्रमुखी विनिगदितेह तदा सुमुखी ॥'

सुमुखीमुदाहरति—जहा (यथा)—

अइचल जुव्वणदेहधणा सिविअणसोअर बन्धुजणा ।

अवसउ कालपुरीगमणा परिहर बव्वर पापमणा ॥ १०४ ॥

[अतिचलानि यौवनदेहधनानि स्वप्नसोदरा बन्धुजनाः ।

अवश्यं कालपुरीगमनं परिहर बर्बर पापमनः ॥]

कश्चिदतिदुराचारिणं मित्रमुपदिशति—एतानि यौवनदेहधनान्यतिचपलानि, स्वप्र-

---

१. 'करीजे (कृतः)' रवि०. २. 'सोइ (सोऽपि युधिष्ठिरः संकटं प्राप्तः)' रवि०. ३. 'लिक्खअ' रवि०. ४. 'समूहसमाहिततन्त्रः' भूषणपुस्तकपाठः. ५. परिकलयाद्विलघुद्वितय कुरु सगणनितयं विमलम्' इति भूषणस्थपाठः. ६. 'सिविणअ-' (श्रीईहे सोदराः) इति रवि०.

सहोदराः स्वप्नतुल्या बन्धुजनाः। अथ च अवश्यं कालपुरीगमनम्। अतः कारणाद्वे वर्बर वितथभाषिन्, पापे मनः परिहर॥ उद्दवणिका यथा—॥॥,ऽ,॥,ऽ,॥ऽ,११×४=४४॥ सुमुखी निवृत्ता॥

अथ दोधकच्छन्दः—

चामर काहलजुग्ग ठवीजे हार लहूजुअ तत्थ धरीजे।
कण्णगणा पअअन्त करीजे दोधकछन्दहें णामँ कहीजे॥१०५॥

[चामरं काहलयुगं स्थाप्यते हारो लघुयुगं तथा धरणीयम्।
कर्णगणः पदान्ते कर्तव्यो दोधकछन्दो नाम कथ्यते॥]

भोः शिष्याः, यत्र प्रथमं चामरं गुरुः, अनन्तरं काहलयुगं लघुद्वयं स्थाप्यते, ततो हारो गुरुः, तदनन्तरं लघुद्वयम्, ततः तत्र तथा धारणीयम्। हारानन्तरं लघुद्वयं पुनः स्थापनीयमित्यर्थः। पदान्ते च कर्णगणः कर्तव्यः, तद् दोधकमिति छन्दसो नाम कथ्यते। भगणत्रयगुरुद्वयाभ्यां दोधकमिति फलितोऽर्थः॥ अत एव भूषणे—'भत्रितयं यदि कर्णसमेतं पिङ्गलनागसुभाषितमेतत्। पण्डितमण्डलसंहृतचित्तं भामिनि भावय दोधकवृत्तम्॥' 'दोधकमिच्छति भत्रितयाद्गौ' इति छन्दोमञ्जर्यामप्युक्तम्॥

दोधकमुदाहरति—(जहा) यथा—

पिङ्गजटावलिठाविअगङ्गा धारिअ णाअरि जेण अधङ्गा।
चन्दकला जसु सीसहि णोक्खा सो तुह संकर दिज्जउ सोक्खा१०६

[पिङ्गजटावलिधारितगङ्गा धारिता नारी येनार्धाङ्गे।
चन्द्रकला यस्य शिरसि रमणीया स तुभ्यं शंकरो ददातु सुखम्॥]

स शंकरस्तुभ्यं सुखं ददातु। स कः। पिङ्गजटावलीषु स्थापिता गङ्गा येन सः। तथा येनार्धाङ्गेन नारी पार्वती धृता। यस्य शीर्षे [अति]णोक्खा परमरमणीया चन्द्रकला। राजत इति शेषः॥ उद्दवणिका यथा—ऽ॥,ऽ॥,ऽ॥,ऽऽ,११×४=४४॥ दोधकं निवृत्तम्॥

अथ शालिनीछन्दः—

कण्णो दुण्णो हार एक्को विसज्जे सल्ला कण्णा गन्ध कण्णा सुणिज्जे।
वीसा रेहा पाअ पाए गणिज्जे सप्पाराए सालिणी सा भणिज्जे१०७

[कर्णो द्विगुणो हार एको विसृज्यते शल्यः कर्णो गन्धः कर्णः श्रूयते।
विंशती रेखाः पादे पादे गण्यन्ते सर्पराजेन शालिनी सा ज्ञाप्यते॥]

१. 'फणिन्द भणीजे (फणीन्द्रो भणति) इति रवि०. २. 'ठाविअ (स्थापित)' इति रवि०. ३. 'ठाविअ (स्थापिता)' इति रवि०. ४. 'मद्दु (मह्यम्)' इति रवि०. ५. 'मुणिज्ज (ज्ञायते)' इति रवि०. ६. 'भणिज्ज (भण्यते)' इति भण्यते.

मोः शिष्याः, सर्पराजेन पिङ्गलेन सा शालिनी आज्ञप्ता । सा का । यत्र कर्णौ द्विगुणौ भवति प्रथम द्वौ कर्णौ द्विगुरुकगणौ, तत एको हारो गुरुर्विधज्यते । ततश्च शल्यो लघुः, ततोऽपि कर्णः, तदनन्तर गन्धो लघुः, अनन्तर कर्ण एव श्रूयते । एव पदे रुद्रसंख्या वर्णा विंशती रेखाः कलाः पादे पादे यत्र गण्यन्ते । सा शालिनीति ॥ वाणीभूषणेऽपि—'कृत्वा कर्णौ मण्डितौ कुण्डलेन शङ्ख हार नूपुर रावयुक्तम् । धृत्वा युग्म चामर चातिभाति शालिन्येषा प्रेयसी पिङ्गलस्य ॥' द्वितीयोऽर्थः स्पष्टः ॥ छन्दोमञ्जर्या तु सयतिनियम गणान्तरेण लक्षणमुक्त यथा—'मात्तौ गौ चेच्छालिनी वेदलोकैः' इति ॥

शालिनीमुदाहरति—

रण्डा चण्डा दिक्खिदा धम्मदारा मज्जं मांसं पिज्जए खज्जए अ ।
भिक्खा भोज्जं चम्मखण्डं च सेज्जा कोलो धम्मो कस्स णो भादि रम्मो ॥

[रण्डा चण्डा दीक्षिता धर्मदारा मद्यं मांसं पीयते खाद्यते च ।
भिक्षा भोज्यं चर्मखण्डं च शय्या कौलो धर्मः कस्य नो भाति रम्यः ॥]

कर्पूरमञ्जरीसाट(सट्ट)कस्य कापालिकभैरवानन्दस्य वचन राजान प्रति—रण्डा विधवा चण्डा परमकोपना दीक्षिता दीक्षितपत्नी अस्माश्च धर्मदाराः । भवाम इति शेषः । मद्य मास पीयते खाद्यते च । भिक्षया भोजनम्, चर्मखण्डः शय्या । कौलो धर्मः कापालिकधर्मः कस्य रम्यो रमणीयो न भातीति ॥ उट्टवणिका यथा—ऽऽ, ऽऽ, ऽ, ।, ऽऽ, ।, ऽऽ, ११×४=४४ ॥ यथा वा[णीभूषणे]—'आरभ्यन्ते शर्मकर्माणि नून प्राज्ञैर्लोके वाच्यतामात्रभीतैः । तन्निष्पत्तौ वासुदेवः प्रमाण को वा वक्ता कृत्यकर्ताहमस्मि ॥' शालिनी निवृत्ता ॥ अत्रैव 'वातोर्मीयं गदिता म्भौ तगौ गः' इति ग्रन्थान्तरे ॥ तत्र यदि पूर्वे म्भौ मगणभगणौ, अथ च तगौ तगणगुरू भवतः, ततश्च गो गुरुर्भवति । तदा इय वातोर्मी गदिता तनाम वृत्तमुक्तमित्युक्तम् ॥ यथा—'ध्याता मूर्तिः क्षणमप्यच्युतस्य श्रेणी नाम्ना गदिता हेल्यापि । ससारेऽस्मिन्दुरित हन्ति पुसा वातोर्मी पोतमिवाम्भोधिमध्ये ॥' उट्टवणिका यथा—ऽऽऽ, ऽ।।, ऽऽ।, ऽऽ, ११×४=४४ ॥ अत्रानयोर्वृत्तयोरेकत्र पञ्चमो वर्णो गुरुरन्यत्र च लघुरिति स्वल्पो भेद इति कृत्वा चतुर्दशोपजातिभेदा उत्तरत्र दर्शयिष्यमाणपरिपाट्या विज्ञातव्या इति सूच्यत इत्यलमतिविस्तरेणेति ॥

अथ दमनकच्छन्दः—

दिअवरजुअ लहुजुअलं पअ पअ पअलिअवलअम् ।
चउपअ चउचलुकलअं दमणअ फणि भण ललिअम् ॥ १०९ ॥

[द्विजवरयुग लघुयुगलं पदे पदे प्रकटितवलयम् ।
चतुष्पदेऽष्टचत्वारिंशत्कल दमनक फणी भणति ललितम् ॥]

१. 'भण फणिमणिअम्' इति रवि०.

भो: शिष्या', यत्र प्रथम द्विजवरयुग चतुर्लघुकगणद्वयम्, ततो लघुद्वय पदे पदे अन्ते प्रकटितो वलयो गुरुर्यत्र । एव पदचतुष्टयेऽष्टचत्वारिंशत् ४८ कला यत्र, तद्दमनकमतिललित छन्दो भवतीति फणिपति· पिङ्गलो भणति । द्विजवरद्वयसगणाभ्या दमनक छन्द इति फलितोऽर्थः ॥ तथा च भूषणे—'द्विजवरगणयुगममल तदनु च वलय करतलम् । फणिपतिवरपरिगणितं दमनकमिदमतिललितम् ॥' इति ॥

दमनकमुदाहरति—जहा (यथा)—

परिणअससहरवअणं विमलकमलदलणअणम् ।
विहिअअसुरकुलदलणं पणमह सिरिमहुमहणम् ॥ ११० ॥

[परिणतशशधरवदनं विमलकमलदलनयनम् ।
विहितासुरकुलदलनं प्रणमत श्रीमधुमथनम् ॥]

भो लोकाः, श्रीमधुमथन कृष्ण प्रणमत । कीदृशम् । परिणतस्य परिपूर्णषोडशकलस्य शशधरस्येव वदन यस्य तम् । पुन विमलकमलदलवनयन लोचन यस्य तम् । विहितम· सुरकुलाना दनुजकुलाना दलन कृत येन तम् ॥ यथा ना[णीभूषणे]—'प्रणमत मधुरिपु· चरण भवजलनिधिपरितरणम् । अभिनवकिसलयरुचिर सुरपतिसकलभयहरम् ॥' इति ॥ उट्टवणिका यथा—॥॥, ॥॥, ॥S, ११×४=४४ ॥ दमनक निवृत्तम् ॥

अथ सेनिकाछन्द —

ताल णन्दएसमुद्दतूरआ जोहलेण एहु छन्द पूरआ ।
गारहाइ अक्खराइ जाणिआ णाअराअजम्पिएअ सेणिआ॥१११॥

[ताल आनन्दसमुद्रतूर्यो जोहलेनैतच्छन्दः पूरणीयम् ।
एकादशाक्षरा जानीत नागराजजल्पिता सेनिकाम् ॥]

भो शिष्या , यत्र प्रथम ताल आदिगुरुस्त्रिकल S। तत एव णन्दसमुद्दतूरआ आनन्दसमुद्रतूर्याख्या आदिगुरवस्त्रिकला एव ततश्च जोहलेन रगणेन मध्यलघुकगणेनैतच्छन्द· पूरणीयम् । अत्र च—एकादशाक्षराणि पादे ज्ञातव्यानीति नागराजेन पिङ्गलेन जल्पितां सेनिका जानीत इति ॥ 'श्रेण्युदीरिता रजौ रलौ गुरु' इति छन्दोमञ्जर्यां गणभेदेन नामान्तरमुक्तम् ॥ वाणीभूषणे तु—'हारशङ्खमण्डनेन मण्डिता या पयोधरेण वान्त्य अङ्किता । रूपनूपुरेण चातिदुर्लभा सेनिका भुजङ्गराजवल्लभा ॥' गुरुलघुक्रमेणैकादशापि वर्णा यत्र सा सेनिका । सैव च यदा हारशङ्खविपरीताभ्या रूपनूपुराभ्या लघुगुरुभ्या क्रमशो मण्डिता सती वसुवर्णानन्तरं च यदि रगणविपरीतेन पयोधरेण जगणेनाङ्किता भवति तदा सा भुजङ्गराजवल्लभातिदुर्लभा सेनिका भवतीति विपर्ययेण सेनिकाच्छन्दोद्वयमुक्तमिति ॥

१ 'यस्या तालो गुरुनन्दो लघु समुद्रसख्यस्थाने स्थानचतुष्टये' इति रवि०

सेनिकामुदाहरति—जहा (यथा)—

झत्ति पत्तिपाअ भूमि कम्पिआ टप्पु खुन्दि खेह सूर झम्पिआ ।
गौडराअ जिण्णि माण मोलिआ कामरूअराअवन्ध लोडिआ ११२

[झटिति पत्तिपादैर्भूमिः कम्पिता टापोत्खातधूलिभिः सूर्यश्छादितः ।
गौडराजं जित्वा मानो मोटितः कामरूपराजबन्दी मोचिता ॥]

कश्चिद्बन्दी कर्णनरपतिं स्तौति—स कर्णो जयतीति युग्मकेनान्वयः । स कः । झटिति पत्तीना पतत्पादाघातेन भूमिः कम्पिता । यस्य । तथा यः स्वतुरगाणां टापोत्खातधूलीजालैः सूर्योऽपि समाच्छन्नः । येन च गौडराजं जित्वा तस्य मानोऽहंकारो मोटितः । येन कामरूपराजस्य बन्दीकृता वनिता मोचिता ॥ यथा वा[णीभूषणे]—'साधुधाष्टयाहुराजिमण्डिता रक्तबीजरक्तपानपण्डिता । चण्डमुण्डशुम्भदम्भखण्डिका मङ्गलानि नो ददातु चण्डिका ॥' उद्वणिका यथा—ऽ।, ऽ।, ऽ।, ऽ।, ऽ।, ऽ।, ११×४=४४॥ हारशङ्खविपरीतरूपनूपुररूपः सेनिका यथा—'मुदा पदं सदा वहे महेश तवापि काममद्भुतं गणेश । करालभालपट्टिकाविशाल भजे मदीयहृत्सरोमराल ॥' उद्वणिका यथा—। ऽ । ऽ । ऽ । ऽ । ऽ ।, ११×४=४४ ॥ सेनिका निवृत्ता ॥

अथ मालतीछन्दः—

कुन्तीपुत्ता पञ्चा दिण्णा जाणीआ अन्ते कन्ता एक्का हारा माणीआ ।
पाआ पाआ मत्ता दिट्ठा बाईसा मालत्तीछन्दा जम्पन्ता णाएसा ११३

[कुन्तीपुत्राः पञ्च दत्ता ज्ञायन्ते अन्ते कान्त एको हारो मान्यते ।
पादे पादे मात्रा दृष्टा द्वाविंशतिर्मालतीछन्दो जल्पति नागेशः ॥]

भोः शिष्याः, यत्र कुन्तीपुत्राः पञ्च कर्णाः शरसंख्यया दत्ता ज्ञायन्ते, अन्ते च कर्णानामवसाने कान्तः सुन्दर एको हारो गुरुर्मान्यते अभ्यर्हितः क्रियते । एवमेकादशापि वर्णा यत्र गुरवः क्रियन्ते । अत एव पादे पादे गकारद्वैगुण्येन द्वाविंशतिर्मात्रा दृष्टाः । तन्मालतीनामकं छन्दो नागेशः शेषः पिङ्गलो जल्पतीति ॥ भूषणे तु—'आदौ चत्वारोऽस्या कर्णा दृश्यन्ते शेषे यस्यां रामा हारा जायन्ते । रुद्रैर्वर्णैः पादे पादे सख्याता मालत्येषा वाणीभूषा विख्याता ॥'

मालतीमुदाहरति—जहा (यथा)—

ठामा ठामा हत्थीजूहा देक्खीआ णीला मेहा मेरुसिङ्गा पिक्खीआ ।
वीरा हत्थे अग्गे खग्गा रज्जन्ता णीलामेहामज्झे विज्जू णच्चन्ता ॥

१. अस्य चरणस्य लक्ष्मीनाथीव्याख्यायुतपुस्तके त्रुटितत्वाद्रविदासीव्याख्यापुस्तकानुसारेण लेखनं कृतमिति ज्ञेयम्. २. 'कामरूपराजबन्धो मोचित.' इति रवि०. ३. 'जायन्ते' इति भूषणपुस्तकपाठः. ४. 'राजन्ते' इति भूषणपुस्तके.

[स्थाने स्थाने हस्तियूथा दृश्यन्ते नीला मेघा मेरुशृङ्गे प्रेक्ष्यन्ते ।
वीराणां हस्ताग्रे खड्गो राजते नीलमेघमध्ये विद्युन्नृत्यन्ती ॥]

स्थाने स्थाने हस्तियूथा दृश्यन्ते यथा मेरुशृङ्गे नीला मेघाः प्रेक्ष्यन्ते । अपि च वीराणां हस्ताग्रे खड्गो राजते नीलमेघमध्ये नृत्यन्ती विद्युदिवेति ॥ यथा वा[णीभूषणे]—'पाथाम्भाथामीनो लीनः कल्पान्ते प्रागिन्द्रक्षोणीमर्तुः पाणिक्रोडे यः । व्यासाम्भोधिस्तस्मिन्काले लीलाभिः सम्यक्सर्वौषध्या यत्पृष्ठे तिष्ठन् ॥' उद्दवणिका यथा—SS, SS, SS, SS, SS, S, ११×४=४४ ॥ मालती निवृत्ता ॥

अथेन्द्रवज्राछन्दः—

दिज्जे तआराजुअला पएसु अन्ते णरेन्दो गुरुजुग्ग सेसम् ।
जम्पे फणिन्दा धुअ इन्दवज्जा मत्ता दहा अट्ठ समा सुसज्जा॥ ११५

[दीयते तकारयुगलं पदेषु अन्ते नरेन्द्रो गुरुयुगं शेषे ।
जल्पति फणीन्द्रो ध्रुवमिन्द्रवज्रा मात्रा दशाष्ट समा सुसज्जा ॥]

भोः शिष्या., यत्रादौ दीयते तकारयुगलं तगणयुगलं पदेषु चतुर्ष्वपीत्यर्थः । अन्ते तकारयुगलावसाने नरेन्द्रो जगणो गुरुमध्यमो गणस्तस्यापि शेषे गुरुयुगं तद्ध्रुवं निश्चितमिन्द्रवज्राख्यं छन्दः इति फणीन्द्रो जल्पति । मात्राश्चाष्टादशात्र पादे भवन्ति । समा नाधिका इत्यर्थः । सुसज्जा शोभनीकृत्य लिखिता इत्यर्थः ॥ अत एव छन्दोमञ्जर्याम्—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इत्युक्तम् ॥ वाणीभूषणे तु—'कर्णध्वजौ गण्डनृगेन्द्रहारा भवन्ति तस्याश्चरणे समाप्ते । तामिन्द्रवज्रामतिमात्रकान्ता भोगीन्द्रवक्त्राब्जमरन्दधाराम् ॥'

इन्द्रवज्रामुदाहरति—जहा (यथा)—

मन्तं ण तन्तं ण हु किं पि जाणे ज्झाणं च णो किं पि गुरुप्पसाओ।
मज्जं पिआमो महिलं रमामो मोक्खं च जामो कुलमग्गलग्गा ११६

[मन्त्रं न तन्त्रं न खलु किमपि जाने ध्यानं च न कोऽपि गुरुप्रसादः ।
मद्यं पिबामो महिलां रमामो मोक्षं च यामो कुलमार्गलग्नाः ॥]

कर्पूरमञ्जरीसाटकस्थं भैरवानन्दकापालिकस्य राजानं प्रति वचनम्—अहं मन्त्रं तन्त्रं वा खलु निश्चयेन उभयोर्मध्ये किमपि न जाने, ध्यानं च न जाने, कोऽपि गुरुप्रसादो नो नास्तीत्यर्थः । तर्हि किं जानासीत्यत आह—मद्यं पिबामः, महिलां रमामः, कौलमार्गलग्ना मोक्षं व्रजाम इति ॥ यथा वा[णीभूषणे]—'रक्ताम्बुदेनोदितलम्बमाला शीतांशुचण्डातपकुण्डलाभ्याम् । ताराद्युताराबलिहृद्यहारैः स्वीयां श्रियं भूषयतीव सन्ध्या ॥' उद्दवणिका यथा—SSI, SSI, ISI, SS, ११×४=४४ ॥ इन्द्रवज्रा निवृत्ता ॥

१. 'दिज्जेइहीराजुअला पआसु (हीरकयुगलं पदेषु दीयते। हीर इति पञ्चकलगणस्य नाम)' इति रवि०.

अथोपेन्द्रवज्राछन्दः—

णरेन्द एक्का तअणा सुसज्जा पओहरा कण्णगणा मुणिज्जा ।
उविन्दवज्जा फणिराअदिट्ठा पढन्ति छेआ सुहवण्णसट्ठा ॥११७॥

[नरेन्द्र एकस्तगणः सुसज्जः पयोधरः कर्णगणो ज्ञातव्यः ।
उपेन्द्रवज्रां फणिराजदृष्टां पठन्ति छेका शुभवर्णसाटकम् ॥]

भोः शिष्याः, यत्रादावेको नरेन्द्रो जगणो गुरुमध्यमो गणः, ततः सुतरां सज्जस्तगणोऽन्तलघुर्गणः, तदनन्तरं पयोधरो जगण एव । ततः कर्णगणो ज्ञातव्यः । तदुपेन्द्रवज्रानामकं फणिराजेन पिङ्गलेन दृष्टं शुभं वर्णसाटकं वर्णरचितपद्यं छेका विदग्धाः पठन्ति । प्राकृते साटकं पद्यपर्यायम् ॥ अत एव छन्दोमञ्जर्याम्—'उपेन्द्रवज्रा प्रथमे लघौ सा' इत्युक्तम् ॥ वाणीभूषणे तु—'पयोधरं हारयुगं दधाना करं सशङ्खं वलयद्वयं च । उपेन्द्रवज्रा भुजगैकसारा विराजते पन्नगराजकान्ता ॥' द्वितीयोऽर्थः स्पष्टः ॥

उपेन्द्रवज्रामुदाहरति—जहा (यथा)—

सुधम्मचित्ता गुणमन्त पुत्ता सुकम्मरत्ता विणआ कलत्ता ।
विसुद्धदेहा धणमन्तगेहा कुणन्ति के वव्वर सग्गणेहा ॥११८॥

[सुधर्मचित्ता गुणवन्तः पुत्राः सुकर्मरक्तं विनीतं कलत्रम् ।
विशुद्धदेहा धनवद्गेहाः कुर्वन्ति के वर्वराः स्वर्गस्नेहम् ॥]

यस्य सुधर्मे चित्तं येषामेवंविधा गुणवन्तः पुत्राः सुकर्मरक्तं विनीतं कलत्रं चेद्भवति, स्वयं च विशुद्धदेहा नीरोगशरीराश्च भवन्ति चेत् । धनयुक्तगृहाश्चेत्, तदा कुर्वन्ति के वा वर्वराः स्वर्गाकाङ्क्षा स्वर्गे स्नेहं कुर्वन्ति । एतादृशसामग्रीयुक्तानां पुरुषाणां भूलोकः स्वर्गादप्यतिरिच्यते इति ॥ यथा वा[णीभूषणे]—'न षट्पदश्रेणिभिरेणदृष्टेर्न वा नवाम्भोधरकन्दलीभिः । अतुल्यता स्यात्कबरीलतेति दिवा समुन्मीलति नान्धकारः ॥' उद्दवणिका यथा—।ऽ।, ऽऽ।, ।ऽ।, ऽऽ, ११×४=४४ ॥ उपेन्द्रवज्रा निवृत्ता ॥ .

अथोपजातयः—

ईन्द[1] उविन्दा एक्क करिज्जसु चउअग्गल दह णाम मुणिज्जसु ।
समजाइहिं समअक्खर दिज्जसु पिङ्गल भण उवजाइहि किज्जसु ॥११९॥

[इन्द्रोपेन्द्रे एकं कुरु चतुरधिकं दश नाम जानीहि ।
समजातौ समान्यक्षराणि देहि पिङ्गलो भणत्युपजातिं कुरु ॥]

इन्द्रवज्रोपेन्द्रवज्रे छन्दसी एकं कुरु चतुरधिकं दश नाम १४ जानीहि । समजातौ समान्येवाक्षराणि देहि पिङ्गलो भणति । एवमुपजातिं कुर्विति । पाठाकुलकं छन्दः ॥

---

१. रविदासेन न व्याख्यातम्.

तत्र चतुर्दशोपजातिभेदानयनप्रकारमाह—

चउअक्खरके पत्थर किज्जसु इन्दउविन्दा गुरुलहु बुज्झसु ।
मज्झहिँ चउदह हो उवजाइ पिङ्गल जम्पइ किति वेलाइ ॥१२०॥

[चतुरक्षरस्य प्रस्तारं कुरु इन्द्रोपेन्द्रयोर्लघुगुरू ज्ञानीहि ।
मध्ये चतुर्दश भवन्त्युपजातयः पिङ्गलो जल्पति किमिति व्याकुलाः॥]

चतुरक्षरस्य प्रस्तारं कुरु इन्द्रोपेन्द्रवज्रयोः लघुगुरूंश्च जानीहि । मध्ये सर्वगुरुसर्वलघ्वोरन्तराले चतुर्दशोपजातयो भवन्तीति पिङ्गलो जल्पति किमिति व्याकुलीभवथ शिष्या इति॥ अयमर्थः—चतुरक्षरप्रस्तारस्तावत्षोडशविधः । तत्र गुरुचतुष्टयेनेन्द्रवज्रायाश्चतुष्पादज्ञानम् । चतुर्ष्वपि पादेष्विन्द्रवज्राया आदौ गुरुरिति शेषे नलघुचतुष्टयेनोपेन्द्रवज्रायाश्चतुर्ष्वपि पादेष्वादौ लघुरिति पादचतुष्टयज्ञानं भवति । मध्ये चोपेन्द्रवज्रापादमादिं कृत्वा चतुर्दशोपजातयो भवन्तीति ॥ पादाकुलकं छन्दः ॥ वाणीभूषणेऽपि—'उपेन्द्रवज्रापदसंगतानि यदीन्द्रवज्राचरणानि च स्युः । तदोपजातिः कथिता कवीन्द्रैर्भेदा भवन्तीह चतुर्दशास्याः ॥' इति ॥

उपजातिमुदाहरति जहा (यथा)—

बालो कुमारो स छमुण्डधारी उप्पाअहीणा हउँ एक णारी ।
अहण्णिसं खाहि विखं भिखारी गइ भवित्ती किल का हमारी१२१

[बालः कुमारः स षण्मुण्डधारी उपायहीनास्म्येका नारी ।
अहर्निशं खाद विषं भिक्षुकगतिर्भवित्री किल कास्माकम् ॥]

गौरी शिवं प्रत्याह—बालः कुमारः स्कन्दः स षण्मुण्डधारी । षण्मुख इत्यर्थः । उपायहीना अर्जनासमर्थाहमेकला नारी । हे भिक्षुक शिव, त्वमहर्निशं विषं खाद भक्षय । गतिर्भवित्री किल का । अस्माकं षण्मुखधारिणो बालकस्य भोजनमत्यावश्यकमित्येकलाया मम का वा गतिर्भविष्यति तन्न वेद्मि । तत्र तु भिक्षुकस्य गरलभोजनेनापि क्षुत्प्रतिकारदर्शनादिति भावः । 'बालो–' इत्यत्र 'उप्पाअ–' इत्यत्र च पादद्वये इन्द्रवज्राया लक्षणम्, पादद्वये चोपेन्द्रवज्राया लक्षणमिति द्वादशी रामाख्येयमुपजातिरिति । अन्याश्चोपजातयः सुबुद्धिभिराकरेषु मत्कृतोदाहरणमञ्जर्यां च द्रष्टव्या इति॥ अत्र च 'बालः कुमारः' इति 'गतिर्भवित्री' इति सविसर्गं केचित्पठन्ति । स च विसर्गो न दोषाय लौकिकभाषाया अनियमात् । संस्कृतमिश्रणाद्वेति सिद्धान्तः ॥

चतुर्दशानामप्युपजातीनां नामान्याह—

कित्ती वाणी माला साला हंसी माआ जाआ बाला ।
अद्दा भद्दा पेम्मा रामा रिद्धी बुद्धी तासू णामा ॥ १२२ ॥

[कीर्तिर्वाणी माला शाला हंसी माया जाया बाला ।
आर्द्रा भद्रा प्रेमा रामा ऋद्धिर्बुद्धिस्तासां नामानि ॥]

कीर्तिः१, वाणी२, माला३, शाला४, हंसी५, माया६, जाया७, बाला८, आर्द्रा९, भद्रा१०, प्रेमा११, रामा१२, ऋद्धिः१३, बुद्धिः१४, [इति] तासामाख्याः ॥ विद्युन्मालाछन्दः ॥ अथैताश्चतुर्दशाप्युपजातय उद्दवणिकया स्फुटीकृत्य प्रदर्श्यन्ते ॥ १—ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) SSI, SSI, ISI, SS (इ०) SSI, SSI, ISI, SS (इ०) कीर्तिः ॥२—SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) SSI, SSI, ISI, SS (इ०) वाणी ॥३—ISI, SSI, ISI, SS (उ०) ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) SSI, SSI, ISI, SS (इ०) माला ॥ ४—SSI, SSI, ISI, SS (इ०) SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) शाला ॥५—ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) हंसी ॥६—ISI, SSI, ISI, SS (उ०) ISI, SSI, ISI, SS (उ०), ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) माया ॥७—SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) जाया ॥८—SSI, SSI, ISI, SS(इ०) SSI, SSI, ISI, SS (इ०) SSI, SSI, ISI, SS (इ०) SIS, SSI, ISI, SS (उ०) बाला ॥९—ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) आर्द्रा ॥१०—SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) भद्रा ॥११—ISI, SSI, ISI, SS (उ०) ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) प्रेमा ॥१२—SSI, SSI, ISI, SS (इ०) SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) ISI, SSI, ISI, SS (उ०) रामा ॥१३—ISI, SSI, ISI, SS (उ०) SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) ISI, SSI, ISI, SS (उ०) ऋद्धिः ॥१४—SSI, SSI, ISI, SS (इ०) ISI, SSI, ISI, SS (उ०) ISI, SSI, ISI, SS (उ०) ISI, SSI, ISI, SS (उ०) बुद्धिः ॥ एवमुपजातयः प्रदर्शितरूपानुसारेणाकरतो भरट्टतोदाहरणमञ्जरीतोऽप्युदाहर्तव्या इत्यलमतिविस्तरेण ॥ एते च भेदा रुद्रवर्णप्रस्तारपिण्डसंख्यातः समधिका इति ध्येयम् ॥ उपजातयो निवृत्ताः ॥

अथैकादशाक्षरप्रस्तारे एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते । तत्र रथोद्धताछन्दः—

हारसंगतपयोधरा करं शङ्खयुक्तवलयेन संगतम् ।
बिभ्रती कनककुण्डलं मुदं कामिनीव कुरुते रथोद्धता ॥ १२३ ॥

कामिनीपक्षेऽर्थः स्पष्टः ॥ 'रात्परैर्नरलगै रथोद्धता' इति च्छन्दोमञ्जर्यां रादगणात्परैर्नगणरगणलघुगुरुभी रथोद्धताछन्दः ॥

यथा—

दीर्घघोषकुलदेवदीर्घिकापङ्कजं रविकारो व्यराजत।

ईर्ष्ययैव दुहितुः पयोनिधेर्यत्र वासमकरोत्सरस्वती ॥

उद्दवणिका यथा—S, ।S।, ।।S, ।, S, ।, S ११×४=४४॥ यथा वा[णीभूषणे]—

राधिका दधिविलोडनस्थिता कृष्णवेणुनिनदे रथोद्धता।

यामुनं तटनिकुञ्जमञ्जसा सा जगाम सलिलाहृतिच्छलात् ॥

उद्दवणिका यथा—SIS, ।।।, SIS, ।, S, ११×४=४४॥ इति रथोद्धता निवृत्ता॥

अथ स्वागताछन्दः—

हारिणी कनककुण्डलयुक्ता पुष्पपुष्करयुगा वलयश्रीः।

वर्णिताहिपतिवक्त्रसहस्रैः स्वागता हरति कस्य न चेतः ॥ १२४॥

अथ च स्वयमेवागता स्वागता सुन्दरमागतमागमनं यस्या वेति तादृशी नायिका कस्य न मानसं हरतीति ध्वनिः॥ 'स्वागता रनभगैर्गुरुणा च' इति छन्दोमञ्जर्यां रगणनगणभगणगुरुभिर्गुरुणा च स्वागता भवतीत्युक्तम्। यथा—

पङ्कजं तदपि पाथसि मग्नं चन्द्रमाः स च घनान्तरितोऽभूत्।

त्वन्मुखेन्दुहृतयापि विनोदं नैव हन्त सहते हतरेखा ॥

उद्दवणिका यथा—S, ।, S, ।, ।।S, ।।S, S, ११×४=४४॥ यथा वा[णीभूषणे]—

यस्य चेतसि सदा मुरवैरी वल्लवीजनविलासविलोलः।

तस्य नूनममरालयभाजः स्वागतादरकृतः सुरवर्गः ॥

उद्दवणिका यथा—SIS, ।।।, S।।, SS ११×४=४४॥ स्वागता निवृत्ता॥

अथानुकूलाछन्दः—

स्यादनुकूला भतनगगाश्चेत् ॥ १२५॥

भगणतगणनगणगुरुगुरवश्चेद्भवन्ति तदानुकूलाभिधं छन्दो भवति॥ यथा—

वल्लववेषा मुररिपुमूर्तिर्गोपमृगाक्षीकृतरतिपूर्तिः।

वाञ्छितसिद्धौ प्रणतिपरस्य स्यादनुकूला जगति न कस्य ॥

उद्दवणिका यथा—S।।, SS।, ।।।, SS, ११×४=४४॥ अनुकूला निवृत्ता।

अथ भ्रमरविलसितच्छन्दः—

मो गो नौ गो भ्रमरविलसितम् ॥ १२६॥

मगणगुरुनगणद्वयगुरुभिर्भ्रमरविलासितानामकं छन्दो भवति ॥ यथा—

*मुग्धे मानं परिहर न चिरात्तारुण्यं ते सफलयतु हरिः ।*

फुल्ला मल्ली भ्रमरविलसिताभावे.शोभां कलयति किमु ताम् ॥

उट्टवणिका यथा—SSS, S, ।।।, ।।।, S, ११×४ = ४४ ॥ भ्रमरविलसिता निवृत्ता॥

अथ मोटनकच्छन्दः—

स्यान्मोटनकं तजजाश्च लगौ ॥ १२७ ॥

तगणजगणद्वयलघुगुरुभिर्मोटनकनामा च्छन्दः ॥ यथा—

रङ्गे खलु मल्लकलाकुशलश्चाणूरमहाभटमोटनकम् ।

यः केलिलवेन चकार समे संसाररिपुं प्रतिमोटयतु ॥

अत्र तुरीयचरणे पादान्तलघोर्वैकल्पिकं गुरुत्वं ज्ञेयम् ॥ उट्टवणिका यथा—SS।, ।S।, ।S।, ।, S, ११×४ = ४४॥अत्रापि प्रस्तारगत्या रुद्र (११) संख्याक्षरस्याष्टचत्वारिंशदधिकं सहस्रद्वयं २०४८ भेदा भवन्ति। तत्र कियन्तोऽपि भेदाः प्रोक्ताः, शेषा भेदाः सुधीभिः प्रस्तार्य समूहनीया इति ॥

अथ द्वादशाक्षरप्रस्तारे प्रस्तारादिभूतं विद्याधरनामकं छन्दोऽभिधीयते—

चारी कण्णा पाए दिण्णा सव्वासारा पाआअन्ते दिज्जे कन्ता चारी हारा।
छण्णावेआ मत्ता गण्णा चारी पाआ विज्जाहारा जम्पे सारा णाआराआ॥

[चत्वारः कर्णाः पादे दत्ताः सर्वसाराः पादान्ते दीयन्ते कान्ताश्चत्वारो हाराः।
पण्णवतिर्मात्रा गणिताश्चतुर्षु पादेषु विद्याधरं जल्पति सारं नागराजः ॥]

भोः शिष्याः, यत्र सर्वसारभूताश्चत्वारः कर्णा द्विगुरवो गणाः पादे दीयन्ते, पादान्ते कान्ताश्चत्वारो हारा गुरवश्च दीयन्ते । एवं द्वादशापि वर्णाः पादे गुरवः कर्तव्या इत्यर्थः। तत्र पदचतुष्टयेऽपि द्वादशचतुष्केण समुदिता वर्णा अष्टचत्वारिंशत् । तद्द्विगुणाभिप्रायेण मात्राः षण्नवति (९६) गणिता यत्र तच्छन्दःसु सारं श्रेष्ठं विद्याधरनामकं छन्दो भवतीति नागराजः पिङ्गलो जल्पतीति ॥

विद्याधरमुदाहरति—जहा (यथा)—

धीसा[1] कण्ठा वासू दीसा सीसा गङ्गा णाआराआ[2] किज्जे हारा गोरी अङ्गा।
गेत्ते[3] चम्मा मारू कामा लिज्जे[4] कित्ती सोई.देऊ सुक्खं देऊ तुम्हा[5] भत्ती॥

१. 'जासू कण्ठा वीसा दिठ्ठा (यस्य कण्ठे विषं दृष्टम्)' रवि०. २. 'णारी (नारी)' रवि०. ३. 'कन्धे रामा (गर्वेणाभिरामः)' रवि०. ४. 'सज्जे (मत्ता)' रवि०. ५. 'उम्मा-मत्ता (उमाभर्ता)' रवि०.

[विषं कण्ठे वासो दिशः शीर्षे गङ्गा नागराजः कृतो हारो गौर्यर्द्धे ।
गात्रे चर्म मारितः कामो लब्धकीर्तिः स देवः सुखं ददातु युष्मभ्यं भक्त्या ॥]

स इति प्रसिद्धो दीव्यतीति देवः अप्रतिहतक्रीडः परमशिवोऽनाद्यन्तो नित्यविहरणशीलः। तदुक्तं योगवासिष्ठे—'न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः। आकारादिपरिच्छिन्ने मिते वस्तुनि तत्कुतः। अकृत्रिममनाद्यन्तं देवनं देव उच्यते ॥' इति प्रतिपादितलक्षणः तुम्हा युष्मभ्य भक्त्या तोषितः सन् सुखं निरतिशयानन्दचिन्मयास्वादलक्षणं ददातु। स कः। यस्य विष कण्ठे, कालकूटपानात्। यस्य वासो दिक्। दिगम्बर इत्यर्थः। यस्य शीर्षे गङ्गा। गङ्गाधर इत्यर्थः। येन नागराजः शेषो हारः कृतः। येन च गौरी पार्वती अर्धाङ्गे धृता। अथ च गात्रे चर्म गजाजिनं च धृतम्। येन च कामः कन्दर्पो मारू मारितो दग्धः। अत एव तेन तेन कर्मणा प्राप्ता कीर्तिर्येन तादृशो वः सुखदोऽस्त्विति ॥ उट्टवणिका यथा—ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, १२×४ = ४८ ॥ विद्याधरो निवृत्तः ॥

अथ भुजङ्गप्रयात छन्दः—

धओ चामरो रूअओ सेस सारो ठए कण्ठए मुद्धए जत्थ हारो ।
चउच्छन्द किज्जे तथा सुद्धदेहं भुअङ्गापआअं पए वीसरेहम् ॥ १२० ॥

[ध्वजश्चामर (एवं)रूपः शेषः सर्वः स्थाप्यते कण्ठे मुग्धे यथा हारः ।
चतुश्छन्दः क्रियते तथा शुद्धदेहं भुजङ्गप्रयातं पदे विंशतिरेखम् ॥]

हे मुग्धे, यत्र धओ ध्वज आदिलघुस्त्रिकलः प्रथमं भवति, ततश्चामरो गुरुः, एवं रूपक्रमेण शेषः सम्पूर्णश्चरणः स्थाप्यते। तद्दिस्तारमाह—यथा हारो मुक्ताहारश्चतुर्भिः सरैः क्रियते, तथा इदमपि शुद्धदेहम्। उट्टवणिकसमीकृत गण पदे विंशतिरेखाः कला यस्य तादृशं भुजङ्गप्रयात चतुर्भिश्छन्दोभिः किज्जे कर्तव्यमित्यर्थः ॥

उक्तमेव प्रकारान्तरेण गाथाछन्दसा व्यक्तीकुर्वाह—

अहिगण चारि पसिद्धा सोलहचरणेण पिङ्गलो भणइ ।
तीणि सआ वीसग्गल मत्तासंखासमग्गा इ ॥ १२१ ॥

[अहिगणाश्चत्वारः प्रसिद्धाः षोडशचरणेन पिङ्गलो भणति ।
त्रीणि शतानि विंशत्यधिकानि मात्रासंख्यासमग्रा भवति ॥]

यत्र प्रथमं अहिगण आदिलघुः पञ्चकलोऽर्थात् यगणाश्चत्वारः पदे प्रसिद्धाः समस्तेषु छन्दोग्रन्थेषु 'भुजङ्गप्रयातं चतुर्भिर्यकारैः' इति प्रसिद्धाः। अथ च—यगणस्य पञ्चकलत्वात्पदे विंशतिः कलाः। एवंरूप षोडशचरणेन चतुश्छन्दोभिप्रायेण विंशत्यधिका त्रि-

१. 'कदइ (रूपयति)' रवि०. २. 'समग्गाइ (समग्राणि)' रवि०.

शती मात्राणा समग्रा सख्या भवतीति पिङ्गलो भणति ॥ वाणीभूषणेऽप्युक्तम्—'यदा वृत्तयो गन्धकर्णक्रमेण भवेयुश्चतस्रो वर वृत्तमेतत् । भुजङ्गप्रयात हरिप्रीतिहेतोर्भुजङ्गाधिराजस्तदा सजगाद ॥' ॥

भुजङ्गप्रयातमुदाहरति—जहा (यथा)—

महामत्तमाअङ्ग पाए ठवीआ तहा तिक्खवाणा कडक्खे धरीआ।
भुआ फास भोहा धनूहा समाणा अहो णाअरी कामराअस्स सेणा १३२

[महामत्तमातङ्ग पादे स्थापितस्तथा तीक्ष्णबाणा कटाक्षे धृता ।
भुजा पाशानि भ्रुवो धनुषा समानाहो नागरी कामराजस्य सेना ॥]

अहो इत्याश्चर्ये । इय कामराजस्य मदननृपते सना, नागरी अतिकुशला । राजत इति शेष । यद्वा—इय नागरी कदर्पभूमीपते सेनेव भाति । सेनासामग्रीमाह—एतस्या पाए चरणे महामत्तमातङ्ग स्थापित । गजगमनेति भाव । अथ—एतस्या कटाक्षेऽपाङ्ग तीक्ष्णबाणा स्थापिता । तथैव च भुजा समान शुद्ध धनु स्थापितमिति ॥ उट्टवणिका यथा—।SS, ।SS, ।SS, ।SS, १२×४ = ४८ ॥ यथा वा[णीभूषणे]—'निशाया तम पूरसपूरिताया प्रयान्ती रहस्त्वत्समीप समुत्का । अकस्मात्समालोक्य मामन्तिके ते तदा ह्रीयुता तोयराशे सुता स्यात् ॥' उट्टवणिकाप प्रकारा तरेण यथा—।, SS, ।, SS, ।, SS, ।, SS, १२×४ — ४८ ॥ भुजङ्गप्रयात निवृत्तम् ॥

अथ लक्ष्मीधरच्छन्द —

हार गन्धा तहा कण्ण गन्धा उणो कण्ण सद्दा तहा तो गुरूआ गणो।
चारि जोहा गणा णाअराआ भणो एहुरूएण लच्छीहरो सामुणो ॥१३३॥

[हारो गन्धस्ततः कर्णो गन्ध पुन कर्ण शब्दस्तथा तो गुरुर्गण्यते ।
चत्वारो योधा गणा नागराजो भणत्येतद्रूपेण लक्ष्मीधरो ज्ञातव्य ॥]

भो शिष्या, यत्र प्रथम हारो गुरु, ततो गन्धो लघु, तत कर्णो द्विगुरुर्गण, तत पुनर्गन्धो लघुरेव तदनन्तर कर्ण तत शब्दो लघु तथा तो तकारस्तगणोऽन्त्यलघुर्गण इत्यर्थ ॥ ततोऽपि गुरुर्गण्यते । एव द्वादशवर्णात्मक पदम् । उक्तलक्षणमेवोत्तरार्धेन स्पष्टीकरोति—चारीति । चत्वारो जोहा गणा रगणा मध्यलघुका गणा यत्रेतद्रूप लक्ष्मीधर इति ज्ञातव्यमिति नागराज पिङ्गलो भणति ॥ वाणीभूषणेऽप्युक्तम्—'द्वादशीवर्णकैर्निर्मित सतत तद्धि लक्ष्मीधर वृत्तमाकीर्तितम् । दृश्यते यच्चतुर्भोर्दलैरङ्कित पन्नगाधीशवाणाविनोदायितम् ॥' चतुर्भोर्दलैश्चतुर्भा रगणैरित्यर्थ ॥ ग्रन्थान्तरे तु 'स्रग्विणी' इति नामान्तरम् ॥ अत एव छन्दोमञ्जर्याम्—'कीर्तितैषा चतूरेफिका स्रग्विणी' इत्युक्तम् ॥

लक्ष्मीधरमुदाहरति—जहा (यथा)—

भञ्जिआ मालवा गञ्जिआ कण्णला णिज्जिआ कुक्कुडा लुट्टिआ गुज्जरा।
वङ्गआ भङ्गआ ओड्डिआ मोडिआ मेन्छआ कण्णिआ किन्तिआ थप्पिआ॥

[भञ्जिता मालवा गञ्जिताः कानला निर्जिताः कुक्कुटा लुण्ठिता गुर्जराः।
वङ्गा भग्ना उत्कला मोटिता म्लेच्छाः कर्तिताः कीर्तयः स्थापिताः ॥]

कश्चिद्बन्दी कर्णं स्तौति—येन कर्णेन मालवा देशविशेषा भञ्जिता आमर्दिताः, कानलाश्च देशविशेषा गञ्जिताः, कुक्कुटा अपि निर्जिताः, गुर्जरा लुण्ठिताः, वङ्गा वङ्गदेशा भग्नाः, उत्कला मोटिताः, म्लेच्छाश्च कर्तिताः। लवशः खण्डिताः इत्यर्थः। अतः सर्वत्र कीर्तिः स्थापिता येन स कर्णो जयतीति प्रबन्धस्थेन कर्त्रा सह संबध्यते ॥ उट्टवणिका यथा—S, I, SS, I, SS, I, SS, I, S, १२×४ = ४८ ॥ यथा वा[णीभूषणे]—'रासकेलीकलोल्लाससंभावितं गोपसीमन्तिनीवृन्दसंलालितम्। राधया गीतसंमुग्धयालिङ्गितं नौमि गोपालकं देवकीबालकम् ॥' स्रग्विणी निवृत्ता ॥

अथ तोटकच्छन्दः—

सगण धुअ चारि पलन्ति जही गण सोलहमत्त विराम कही।
तह पिङ्गलअं भणिअं उचिअं इह तोटअछन्दवरं रचिअम् ॥ १३५ ॥

[सगणा ध्रुवं चत्वारि पतन्ति यत्र गणेषु षोडशमात्रासु विरामः कथितः।
तथा पिङ्गलेन भणितमुचितमिह तोटकछन्दोवरं रचितम् ॥]

भोः शिष्याः, यत्र ध्रुवं निश्चितं चत्वारः सगणा गुर्वन्तगणाः पतन्ति गणेषु षोडशमात्रासु विरामः कथितः। तथा पिङ्गलेन भणितमुचितं यत्तदिह लोके छान्दसिकैस्तोटकमिति छन्दोवरं रचितमिति ॥ भूषणेऽप्युक्तम्—'विनिधेहि चतुःसगणं रुचिरं रविसंख्यकवर्णकृत सुचिरम्। फणिनायकपिङ्गलसंभणित कुरु तोटकवृत्तमिदं ललितम् ॥' 'वद तोटकमब्धिसकारयुतम्' इत्यन्यत्रापि ॥

तोटकमुदाहरति—जहा (यथा)—

चल गुज्जर कुञ्जर तज्जि मही तुअ वव्वर जीवण अज्जु णही।
जइ कोपइ कण्णणरेन्दवरा रण को हरि को हर वज्जहरा ॥ १३६ ॥

[चल गुर्जर कुञ्जरांस्त्यक्त्वा महीं तव बर्बर जीवनमद्य नहि।
यदि कुप्यति कर्णनरेन्द्रवरो रणे को हरिः को हरो वज्रधरः ॥]

हे गुर्जर गुर्जराधिपते, कुञ्जरान्महीं च त्यक्त्वा चल। अपसरेत्यर्थः। हे बर्बर वृथाप्रलापिन्, तव जीवनमद्य नास्ति। यदि कुप्यति कर्णनरेन्द्रः, तदा रणे को हरिः, को वा हरः, को वज्रधरः। कुपितस्य तस्य पुरत एते देवा अपि स्थातुमशक्ताः, किमुत त्वम्। अतः सर्वमपि वस्तुजातं विसृज्य महीमपि त्यक्त्वा पलायनमेवोचितमिति गुर्जरदेशाधिपतिं प्रत्यमात्यवचनम् ॥ उट्टवणिका यथा—IIS, IIS, IIS, IIS, १२×४ = ४८ ॥ तोटकं निवृत्तम् ॥

अथ सारङ्गः—

जा चारितकारसंभेअउक्किट्ठ सारङ्गरूअक सो पिङ्गले दिट्ठ ।
जा तीअवीसामसंजुत्त पाएहि णाजाणिए कान्ति अण्णोण्णभाएहि १३७

[यच्चतुस्तकारसंभेदोत्कृष्टं सारङ्गरूपकं तत्पिङ्गलेन दृष्टम् ।
यच्च तृतीयविश्रामसंयुक्तं पादेषु न ज्ञायते कान्तिरन्योन्यभागेषु ॥]

भोः शिष्याः, यच्चतुस्तकारस्य तगणचतुष्टयस्य सम्यग्भेदेनोत्कृष्टं सारङ्गरूपकं तत्पिङ्गलेनैव दृष्टम्, यच्च पादेषु चरणेषु तृतीये वर्णे विश्रामसंयुक्तं न ज्ञायते कान्तिरस्य च्छन्दसोऽन्योन्यभागेन प्रस्तारीत्येत्यर्थः ॥ भूषणे तु—'कर्णं ध्वज जोहलं चामरं हि चिह्न सतालं सदा सविधेहि । ख्यातं तथा पिङ्गलाधीश्वरेण सारङ्गमेतच्चतुर्हीरकेण ॥' चतुर्हीरकेण चतुर्भिस्तगणैरित्यर्थः ॥ पञ्चकलप्रस्तारेऽन्तलघोः पञ्चकलस्य हीरकमिति संज्ञा, वर्णवृत्ते तु तस्यैव तगणसंज्ञेत्युक्त एवार्थः इति ॥

सारङ्गमुदाहरति—जहा (यथा)—

रे गोड थक्कन्तु तो हत्थिजूहाइ पल्लट्टि जुज्झन्ति पाइक्कवूहाइं ।
कासीसराआसरासारअग्गेण की हत्थि की पत्ति की वीरवग्गेण॥१३८॥

[रे गौड तिष्ठन्तु ते हस्तियूथानि परावृत्य युध्यन्ते पत्तिकव्यूहानि ।
काशीशराजशरासाराग्रे किं हस्तिभिः किं पत्तिभिः किं वीरवर्गेण ॥]

रे इति साक्षेप सम्बोधनम् । गोड गौडदेशाधीश, तव हस्तियूथानि गजराजवृन्दानि थक्कन्तु क्षणं तिष्ठन्त्वित्यर्थः । यतः पाइक्कवूहाइं पत्तिव्रातानि पल्लट्टि परावृत्य युध्यन्ते । यद्वा हस्तियूथविशेषण पदातिबहुलानीति । वस्तुतस्तु काशीशराजस्य शरासाराः बाणपरम्परास्तेषामग्रे किं हस्तिभिः, किं वा पत्तिभिः, किं वा वीरवर्गेण महासुभटसमुदायेनेति ॥ उट्टवणिका यथा—ऽऽ।, ऽऽ।, ऽऽ।, ऽऽ।, १२×४ = ४८ ॥ सारङ्गो निवृत्तः॥

अथ मौक्तिकदामच्छन्दः—

पओहर चारि पसिद्धह ताम तितेरहमत्तह मोत्तिअदाम ।
ण पुव्वहि हार ण दिज्जइ अन्त विहूमअ अग्गल छप्पण मत्त ॥१३९॥

[पयोधराश्चत्वारः प्रसिद्धास्तत्र त्रित्रयोदशमात्राभिर्मौक्तिकदाम ।
न पूर्वं हारो न दीयतेऽन्ते द्विशती षट्पञ्चाशदधिका मात्राणाम् ॥]

भोः शिष्याः, यत्र पदे चत्वारः पयोधरा जगणा गुरुमध्यमा गणाः प्रसिद्धास्तत्र त्रिभिरधिकास्त्रयोदश । अर्थात् षोडशमात्राभिः पद यत्र तन्मौक्तिकदाम छन्दो भवति । अत्र च न पूर्वे हारो गुरुः, न चान्ते दीयत इति ॥ समुदितमात्रासंख्यामाह—षट्पञ्चाशदधिकं शतद्वयं मात्राणामिति ॥ अयमर्थः—षोडशचतुष्केण चतुःषष्टिः, तत्र चतुर्भिः

सर्वमौक्तिकदाम्नोऽतिशोभाकरत्वादिदमपि वृत्तं चतुश्छन्दोभिप्रायेण चतुःपट्या कलया चतुष्पीकृत पट्पञ्चाशदधिकशतद्वयमात्राधिकं भवतीति ॥ भूषणेऽप्युक्तम्—'पयोधरमत्र चतुष्कमवेहि कलाधरणे किल षोडश देहि । भुजङ्गपतेर्हृदि मौक्तिकदामसुवृत्तमिदं शृणु मौक्तिकदाम ॥'

मौक्तिकदामोदाहरति—जहा (यथा)—

कआ भनु दुब्बर तज्ज गरास खणे खण जाणिअ अच्छ णिसास ।
कुहूरवतारदुरन्त वसन्त कि णिद्दअ काम कि णिद्दअ कन्त॥१४०॥

[कायो भूतो दुर्बलस्त्यक्तो ग्रासः क्षणे क्षणे ज्ञायतेऽच्छो निश्वासः ।
कुहूरवतारदुरन्तो वसन्तः किं निर्दयः कामः किं निर्दयः कान्तः ॥]

काचित्प्रोषितभर्तृका सखीमाह—हे सखि, कायो दुर्बलो भूतः, ग्रासस्त्यक्त एव । क्षणे क्षणे ज्ञायतेऽच्छो निश्वासः । एवं सत्यपि प्राकृते पूर्वनिपातानियमात् तारेणातिदीर्घेण कुहूरवाणां कोकिलानां रवेण दुरन्तो वसन्तः । अथवा—कुहूरवाणां कोकिलानां तारेणातिदीर्घेण स्वरेण दुष्टोऽन्तो यस्य तादृशोऽयं वसन्तः प्राप्तः, तस्मात्—अयं किं वा कामो निर्दयः मत्प्राणापहारकत्वात् । किं वा कान्तो वल्लभ एव निर्दयः, य एतादृशेऽपि मधुसमये नागत इति ॥ उट्टवणिका यथा—।ऽ।, ।ऽ।, ।ऽ।, ।ऽ।, १२×४ = ४८ ॥यथा वा-[णीभूषणे]—'मया तव किंचिदकारि कदापि विलासिनि वाम्यमनुस्मरतापि । तथापि मनस्तव माधसनाय मजामि कुतो भवतीमपहाय ॥' मौक्तिकदाम निवृत्तम् ॥

अथ मोदकच्छन्दः—

तोडअछं विपरीअ ठविज्जसु मोदहछन्दह णाम करिज्जसु ।
चारिगणा भगणा सुपसिद्धउ पिङ्गल जम्पइ कित्तिहिलुद्धउ ॥ १४१ ॥

[तोटकच्छन्दो विपरीतं स्थापय मोदकच्छन्दो नाम कुरु ।
चत्वारो गणा भगणाः सुप्रसिद्धाः पिङ्गलो जल्पति कीर्तिलुब्धः ॥]

हे मुग्धे, तोटकच्छन्दो विपरीतं कृत्वा स्थापय मोदकमिति छन्दसो नाम कुरु । अयमर्थः—'चतुर्भिः सगणैरन्तगुरुकैर्गणैस्तोटकवृत्तं भवति । तद्विपरीतमादिगुरुकैश्चतुर्भिर्भगणैर्मोदकं कुरु' इति । तदेव स्पष्टीकृत्याह—चत्वारो भगणा आदिगुरुका गणाः सुप्रसिद्धा यत्र तन्मोदकमिति कीर्तिलुब्धः पिङ्गलो जल्पति । भूषणे तु—'पादयुगं कुरु नूपुरसुन्दरमाशु करे कुसुमद्वयमाहर । सुन्दरि सर्वजनैकमनोहरमोदकवृत्तमिदं परिभावय ॥'

---

१. 'रवताव (कुहूरवस्तापयति)' रवि०. २ 'तु न' भूषणस्थपाठः.

मोदकमुदाहरति—जहा (यथा)—

गज्जउ मेह कि अम्बर सामर फुल्लउ णीव कि बुल्लउ भम्मर ।

ऍकउ जीअ पराहिण अम्मह कीलउ पाउस कीलउ वम्मह ॥१४२॥

[गर्जतु मेघ कि चाम्बर श्यामल फुल्लतु नीप किं च कूजतु भ्रमर ।

एक एव जीव पराधीनोऽस्माक गृह्णातु प्रावृट् गृह्णातु मन्मथ ॥]

काचित्प्रोषितपतिका वर्षासमयेऽपि वल्लभमनागत मत्वातिखिन्नमानसा प्रियसखीमाह—हे सखि, गर्जतु मेघ, श्यामलोऽम्बरे, नीप कदम्बोऽपि पुष्पितो भवतु । किं च भ्रमराऽपि कूजतु । अस्मान तु पराधीन परायत्त एक एव जीव तस्मादेन किं प्रावृट् गृह्णातु, किं वा मन्मथो गृह्णातु, अथवा—उभयोर्मध्ये कोऽपि कील्उ कालयतु । जडी करोत्वित्यर्थ ॥ उद्दवणिका यथा— ऽ॥, ऽ॥, ऽ॥, ऽ॥, १२×४ = ४८ ॥ मोदक निवृत्तम् ॥

अथ तरलनयनीछन्द —

णगण णगण कर चउगुण सुकइ कमलमुहि फणि भण ।

तरलणअणि सव करु लहु सबगुरु जवउ णवरि कहु ॥ १४३ ॥

[नगणान्नगणान्कुरु चतुर्गुणान्सुकवि कमलमुखि फणी भणति ।

तरलनयनी सर्वान्कुरु ल्घून्सर्वगुरुर्यावन्निर्वाह्य कथय ॥]

हे कमलमुखि, नगणा सर्वल्घुका गणा, तांश्चतुर्गुणान्कुरु । एव च द्वादशापि वर्णा ल्घून्कुरु । प्रतिलोमगत्या प्रस्तारस्य यावत्सर्वगुरुर्भवति तावन्निर्वाह्य तरल्नयनीनामकमिद वृत्तम् । ईदृश सर्वल्घ्वात्मक द्वादशवर्णप्रस्तारान्त्य भवतीति सुकवि पिङ्गलो भणति ॥ वाणीभूषणे तु—'द्विजवरगणयुगमुपनय सकुसुमनगणमिह रचय । सुदति विमलतरफणिपतिनिगदिततरल्नयनमिति ॥'

तरल्नयनीमुदाहरति—जहा (यथा)—

कमलवअण तिणअण हर गिरिवरसअण तिसुलधर ।

ससहरतिलअ गलगरल वितरहि महि अभिमतवर ॥ १४४ ॥

[कमलनयन त्रिनयन हर गिरिवरशयन त्रिशूलधर ।

शशधरतिलक गलगरल वितर मह्यमभिमतवरम् ॥]

कश्चिद्भक्त शिव प्रार्थयते—हे कमलवदन, हे त्रिनयन, हे हर, हे गिरिवरशयन, हे त्रिशूलधर, हे शशधरतिलक्हे चन्द्रशेखर, हे गल्गरल, मह्यमभिमतवर वितर । देहीत्यर्थ ॥ उद्दवणिका यथा—।॥, ॥।, ॥।, ॥।, १२×४ =४८ ॥ यथा वा[णाभूषणे]—

१ 'एकल (एक्ल )' रवि०

'अपहर पुरहर मम दरमभिनवकलियुगभयहर। हिमगिरि विहितशयनवर सुकृतसुलभ शशधर ॥' तरलनयनी निवृत्ता ॥

अथ सुन्दरीच्छन्दः—

णगण चामर गन्धजुआ ठवे चमर सल्लजुआ जइ संभवे।
रगण एक्क पदान्त हि देक्खिआ सुमुहि सुन्दरि पिङ्गललक्खिआ १४५

[नगणश्चामरो गन्धयुगं स्थाप्यते चामरः शल्ययुगं यदि संभवति।
रगण एकः पदान्ते दृश्यते सुमुखि सुन्दरि पिङ्गललक्षिता ॥]

हे सुमुखि, यत्र पूर्वे नगणस्त्रिलघ्वात्मको गणः, ततश्चामरो गुरुः, तदनन्तरं गन्धयुगं लघुद्वयं स्थाप्यते, ततश्चामरो गुरुः, ततश्च शल्ययुगं लघुद्वयं यदि संभवति, ततश्चैको रगणो मध्यलघुको गणः पादान्ते दृश्यते तत्सुन्दरीनामकच्छन्दः पिङ्गलेन लक्षितमिति ॥ भूषणे तु—'कुसुमगन्धरसैरतिभूषिता चरणसंगतनूपुरमण्डिता। करसुवर्णलसद्वलयान्विता स्फुरति कस्य न चेतसि सुन्दरी ॥' अथ च—तादृशी सुन्दरी नायिका कस्य चेतसि न स्फुरतीत्यर्थः ॥

सुन्दरीमुदाहरति—जहा (यथा)—

वहइ दक्खिणमारुअसीअला रवइ पञ्चम कोमल कोइला।
महुअरा महुपाणबहूसरा धरइ सुन्दरि संभममादरा ॥ १४६ ॥

[वहति दक्षिणमारुतशीतलो रौति पञ्चमं कोमलं कोकिलः।
मधुकरा मधुपानबहुस्वरा धरति सुन्दरी संभ्रममादरात् ॥]

कश्चित्स्वमित्रं प्रत्याह—शीतलो दक्षिणो मारुतो मलयानिलो वहति, कोकिलः पिकोऽपि कोमलं पञ्चमं रौति। मधुकरा भ्रमरा मधुपानेन बहुस्वराः सन्तो भ्रमन्ति। अत एतादृशे वसन्ते महोत्सवे जाते सतीयं सुन्दरी कान्ता श्लेषनिमित्तं संभ्रममावेगमादराद्धातीति ॥ उट्टवणिका यथा—।।।, ऽ, ।।, ऽ, ।।, ऽ।ऽ, १२×४=४८ ॥ यथा वा[णीभूषणे]—'असुलभा शरदिन्दुमुखी प्रिया मनसि कामविचेष्टितमीदृशे। मलयमारुतचालितमालतीपरिमलप्रसरो हतवासरः ॥' सुन्दरी निवृत्ता ॥

अथ द्वादशाक्षरप्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते। तत्र प्रथमं प्रमिताक्षरच्छन्दः [वाणीभूषणे]—

करसङ्गिशङ्खवलया सरसा कनकद्वयैकवलया सुभुजा ॥
वरवर्णिनी रसिकसेव्यपदा प्रमिताक्षरा विजयते वनिता ॥ १४७॥

वनितापक्षे—सुगमोऽर्थः। वृत्तपक्षे—सगणजगणाभ्यां (सगणाभ्यां च) प्रमिताक्षरेति फलितोऽर्थः ॥ अत एव छन्दोमञ्जर्यां 'प्रमिताक्षरा सजससैः कथिता' इत्युक्तमिति ॥

यथा [वाणीभूषणे]—

अभजद्भयादिव नभो वसुधां दधुरेकतामिव समेत्य दिशः।

अभवन्मही पदयुगप्रमिता तिमिरावलीकवलिते जगति॥

अत्र तुरीयचरणे पादान्तलघोर्विकल्पेन गुरुत्वमिति॥

यथा वा—

अमृतस्य शीकरमिवोद्गिरती रदमौक्तिकांशुलहरीछुरिता।

प्रमिताक्षरा मुररिपोर्भणितिर्व्रजसुभ्रुवामभिजहार मनः॥

'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।

अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि॥'

इति माघकाव्येऽपि॥ उट्टवणिका यथा— IIS, ISI, IIS, IIS, १२×४=४८॥ प्रमिताक्षरा निवृत्ता॥

अथ द्रुतविलम्बितं छन्दः—

द्रुतविलम्बितमाह नभौ भरौ॥ १४८॥

नभौ नगणभगणौ, अथ च भरौ भगणरगणौ यत्र तद्द्रुतविलम्बितवृत्तम् इति शेषनागः पिङ्गल आहेति॥

यथा—

तरणिजापुलिने नवबल्लवीपरिषदा सह केलिकुतूहलात्।

द्रुतविलम्बितचारुविहारिणं हरिमहं हृदयेन सदा वहे॥

यथा वा माघकाव्ये षष्ठसर्गे—

'नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।

मृदुलतान्तलतान्तमशोभयत्स सुरभिं सुरभिं सुमनोभरैः॥'

इति॥ उट्टवणिका यथा—III, SII, SII, SIS, १२×४=४८॥ द्रुतविलम्बित निवृत्तम्॥

अथ चन्द्रवर्त्मच्छन्दः—

चन्द्रवर्त्म निगदन्ति रनभसैः॥ १४९॥

रगणनगणभगणसगणैश्चन्द्रवर्त्माख्यं वृत्तमाचार्या निगदन्तीति॥

चन्द्रवर्त्म पिहितं घनतिमिरे राजवर्त्म रहितं जनगमनैः।

इष्टवर्त्म तदलंकुरु सरसे कुञ्जवर्त्मनि हरिस्तव कुतुकी॥

उट्टवणिका यथा—SIS, III, SII, IIS, १२×४=४८॥ चन्द्रवर्त्म निवृत्तम्॥

अथ वंशस्थविलं छन्दः—

वदन्ति वंशस्थविलं जतौ जरौ ॥ १५० ॥

यत्र जतौ जगणतगणौ, अथ च जरौ जगणरगणौ भवतः, तद्वंशस्थविलं वृत्तमिलाचार्या वदन्ति ॥ यथा—

विलासवंशस्थविलं मुखानिलैः प्रपूर्य यः पञ्चमरागमुद्गिरन् ।
व्रजाङ्गनानामपि गानशालिनां जहार मानं स हरिः पुनातु वः ॥

उद्दवणिका यथा—।ऽ।, ऽऽ।, ।ऽ।, ऽ।ऽ, १२×४ = ४८ ॥ वंशस्थविलं निवृत्तम् ॥

अथेन्द्रवंशाछन्दः—

तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ ॥ १५१ ॥

तद्वंशस्थविलमेव प्रथमाक्षरे गुरौ सतीन्द्रवंशाख्यं तगणद्वयजगणरगणाभ्यां(णैः) वृत्तं भवतीति वेदितव्यम् ॥ अथ चैतयोर्वंशस्थविलेन्द्रवंशयोरुपजातयश्चतुर्दश भवन्तीति तद्भेदाः सुधीभिः पूर्वप्रदर्शितप्रक्रियया स्तवनीया इत्युपदिश्यते। एते चोपजातिकृतचतुर्दश भेदाः प्रकृतप्रस्तारपिण्डसंख्यातोऽधिका वेदितव्या इति ॥

इंद्रवंशा यथा—

'दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः पीताम्बरोऽसौ जगतीतमोहरः ।
यस्मिन्नधाक्षुः शलभा इव स्वयं ते कंसचाणूरमुखा मखद्विपः ॥'

उद्दवणिका यथा—ऽऽ।, ऽऽ।, ।ऽ।, ऽ।ऽ, १२×४ = ४८ ॥ इन्द्रवंशा निवृत्ता ॥

अथ वैश्वदेवीछन्दः—

बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ १५२ ॥

यत्र ममौ मगणद्वयम्, अथ च यौ यगणद्वयं च, यत्र बाणाः पञ्च, अश्वाः सप्त, तैश्छिन्ना जातविश्रामा सा वैश्वदेवी तन्नामकं वृत्तं भवतीति ॥

यथा—

अर्चामन्येषां त्वं विहायामराणामद्वैतं नैकं कृष्णमभ्यर्च्य भक्त्या ।
तत्राशेषात्मन्यर्चिते भाविनी ते भ्रातः संपन्नाराधना वैश्वदेवी ॥

उद्दवणिका यथा—ऽऽऽ, ऽऽऽ, ।ऽऽ, ।ऽऽ, १२×४ = ४८ ॥ वैश्वदेवी निवृत्ता ॥

अथ मन्दाकिनी छन्दः—

ननररघटिता तु मन्दाकिनी ॥ १५३ ॥

या नगणद्वयरगणद्वयघटिता सा मन्दाकिनी तन्नामकं वृत्तमित्यर्थः ॥

यथा—

बलिदमनविधौ बभौ संगता पदजलरुहि यस्य मन्दाकिनी ।
गुरुनिहितसिताम्बुजस्रग्निभा हरतु जगदघं स पीताम्बरः ॥

'सहकारनिधिज तथा कार्मुकम्' इत्यादि भारवौ । 'अतिसुरभिरभाजि पुष्पश्रिया' इति माघे ॥ उद्दवणिका यथा—।।।, ।।।, ऽ।ऽ, ऽ।ऽ, १२×४ = ४८ ॥ मन्दाकिनी निवृत्ता ॥

अथ कुसुमविचित्राछन्दः—

नयसहितौ न्यौ कुसुमविचित्रा ॥ १५४ ॥

यत्र नगणयगणसहितौ न्यौ नगणयगणावेव भवतः, तत्कुसुमविचित्रानामकं वृत्त भवतीति ॥

यथा—

विपिनविहारे कुसुमविचित्रा कुतुकितगोपी पिहितचरित्रा ।
मुररिपुमूर्तिर्मुखरितवंशा चिरमवताद्वस्तरलवतंसा ॥

उद्दवणिका यथा—।।।, ।ऽऽ, ।।।, ।ऽऽ, १२×४ = ४८ ॥ कुसुमविचित्रा निवृत्ता ॥

अथ तामरसच्छन्दः—

इह वद तामरसं नजजा यः ॥ १५५ ॥

हे कान्ते, यत्र नगणजगणजगणाः, अथ च यो यगणो यदि भवति, तदा तामरसाख्य वृत्त वद ॥

यथा—

स्फुटसुषमा मकरन्दमनोज्ञं व्रजललनानयनालिनिपीतम् ।
तव मुखतामरसं मुरशत्रो हृदयतडागविकासि ममास्तु ॥

उद्दवणिका यथा—।।।, ।ऽ।, ।ऽ।, ।ऽऽ, १२×४ = ४८ ॥ तामरस निवृत्तम् ॥

अथ मालतीछन्दः—

भवति नजावथ मालती जरौ ॥ १५६ ॥

यत्र नजौ नगणजगणौ, अथ च—जरौ जगणरगणौ भवतः सा मालतीछन्दो भवतीति॥

यथा—

इह कलयाच्युत केलिकानने मधुरससौरभसारलोलुपः ।
कुसुमकृतस्मितचारुविभ्रमामलिरपि चुम्बति मालतीं मुहुः ॥

क्वचिदियमेव 'यमुना' इति ॥ 'अपि विजहीहि दृढोपगूहनम्' इति भारवौ ॥ उद्दवणिका यथा—।।।, ।ऽ।, ।ऽ।, ऽ।ऽ, १२×४ = ४८ ॥ मालती निवृत्ता ॥

अथ मणिमालाछन्दः—

त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥ १५७ ॥

यत्र प्रथम त्यौ तगणयगणौ, अथ च त्यौ तगणयगणावेव भवतः सा गुहवक्त्रैः षडाननाननैश्छिन्ना जातविश्रामा मणिमाला तन्नामकं वृत्तमित्यर्थः ॥

यथा—

प्रह्वामरमौलौ रत्नोपलयुक्ते जातप्रतिबिम्बा शोणा मणिमाला।
गोविन्दपदाब्जे राजी नखराणामास्तां मम चित्ते ध्वान्तं शमयन्ती॥

उद्दवणिका यथा—ऽऽ।, ।ऽऽ, ऽऽ।, ।ऽऽ, १२×४=४८॥ मणिमाला निवृत्ता॥

अथ जलधरमालाछन्दः—

म्भौ स्गौ गौ चेज्जलधरमालाब्ध्यङ्गैः॥ १९८॥

यत्र प्रथमं म्भौ मगणभगणौ, अथ च स्गौ सगणगुरू भवतः, ततश्च गौ गुरुद्वयं चेद्भवति। किं च—अब्धयश्चत्वारः, अङ्गान्यष्टौ, अष्टाङ्गयोगाभिप्रायेण, तैः कृतविरतिः, तदा जलधरमाला तन्नामकं वृत्तमित्यर्थः॥

यथा—

या भक्तानां कलिदुरितोत्तप्तानां तापोच्छित्त्यै जलधरमाला नव्या।
भव्याकारा दिनकरपुत्रीकूले केलीलोला हरितनुरव्यात्सा वः॥

उद्दवणिका यथा—ऽऽऽ, ऽ।।, ।।ऽ, ऽ, ऽऽ, १२×४=४८॥ अत्रापि प्रस्तारगत्या द्वादशाक्षरप्रस्तारस्य षण्णवत्यधिकं सहस्रचतुष्टयं भेदा भवन्ति तेषु कियन्तः प्रदर्शिताः। शेषभेदाः सुधीभिः प्रस्तार्य सूचयितव्या इत्यलं पल्लवेनेति॥

अथ त्रयोदशाक्षरप्रस्तारे मायानामकं छन्दो लक्ष्यते—

कण्णा दुण्णा चामर सल्लाजुअला जं
वीहा दीहा गन्धअजुग्गा पअलातम्।
अन्ते कन्ता चामर हारा सुहकाआ
बाएसा मत्ता गुणजुत्ता भणु माआ॥ १९९॥

[कर्णौ द्विगुणश्चामरः शल्ययुगलं यत्र
द्वौ दीर्घौ गन्धकयुग्मं प्रकटितम्।
अन्ते कान्तश्चामरो हारः शुभकाया
द्वाविंशतिर्मात्रा गुणयुक्ता भण मायाम्॥]

हे मुग्धे, जं यत्र प्रथमं कण्णा दुण्णा द्वौ कर्णौ गुरुद्वयात्मकौ गणौ भवतः, ततश्चामरो गुरुरेव, तदनन्तरं शल्ययुगं लघुद्वयमित्यर्थः। ततोऽपि वीहा दीहा गुरुद्वयम्, ततोऽपि गन्धयुगं लघुद्वयं प्रकटितम्। अन्ते एतदन्ते चामरो गुरुः, हारोऽपि गुरुरेव भवति। शिष्यबोधनार्थं पदपूरणार्थं वा चरणे मात्रानियममाह—शुभकाया शुद्धशरीरा द्वाविंशतिर्मात्रा गुणयुक्ता यत्र तं तां मायां मायानामकं वृत्तं भण पठेत्यर्थः॥ वाणीभूषणे तु—'हत्वा कर्णौ कुण्डलयुग्मं कुरु रत्नं धृत्वा पादं नूपुरयुक्तं कुरु हारम्। मायावृत्तं

पिङ्गलनागोदितमेतज्जानीतादः पण्डितवक्त्राम्बुजसारम् ॥' क्वचिदस्याः 'पदमसमयूरः' इति नामान्तरम् ॥

मायामुदाहरति—जहा (यथा)—

ए अत्थीरा देक्ख सरीरा घरु जाआ
विता पुत्ता सोअर मित्ता सब माआ ।
काहेलागी वव्वर बोलावसि मुज्झे
एका कित्ती किज्जहि जुत्ती जइ सुज्झे ॥ १६० ॥

[एतदस्थिरं पश्य शरीरं गृहं जाया
वित्तं पुत्रा सोदरा मित्रं सर्वाणि माया ।
किंनिमित्तं बर्बराकारयसि मां
एकां कीर्तिं कुरु युक्तां यदि जानासि ॥]

कश्चित्स्वयमतिनिर्विण्णः स्वमित्रमुपदिशति—हे वयस्य, एतदस्थिर शरीरं पश्य, गृहं सदन, जाया कलत्र, वित्तं धनं, पुत्रास्तनयाः, सोदरा भ्रातरः, मित्रमित्येतानि सर्वाणि माया । हे बर्बर, किंनिमित्तमाकारयसि माम् । अतः कारणादेकां युक्तां कीर्तिं कुरु यदि सुज्झे जानासि ॥ उद्दवणिका यथा—ऽऽ, ऽऽ, ऽ, ॥, ऽऽ, ॥, ऽऽ, १३×४=५२ ॥ यथा वा[णीभूषणे]—'उद्यद्बाधा सप्रति राधा मधुमासे शङ्के संकेतं प्रति याता किमुदास्ते । केलीकुञ्जं शून्यमवेक्ष्यास्त रहस्या प्राणत्राणं भाति कथं वा वदतास्याः ॥' 'हा तातेति क्रन्दितमाकर्ण्य विषण्णः' इत्यादि रघौ ॥ माया निवृत्ता ॥

अथ तारकछन्दः—

ठइ आइ लहूजुअ पाय करीजे
गुरु सल्लजुआ गुरु सल्लजुआ जे ।
पअअन्त हि पाअ गुरुज्जुअ किज्जे
सहि तारअच्छन्दह णाम भणिज्जे ॥ १६१ ॥

[स्थापयित्वादौ लघुयुगं पादे कुर्या-
द्गुरुः शल्ययुगं गुरुः शल्ययुगं यत्र ।
पदान्ते·······गुरुयुगं कुर्या-
त्सखि तारकछन्दो नाम भण्यते ॥]

हे सखि, स्थापयित्वा आदौ लघुद्वयं, ततः पादे यत्र गुरुशल्यौ गुरुः, अथ च लघुद्वयमित्यर्थः । पुनरपि गुरुशल्यौ, ततोऽपि जे यत् पूर्वं गुरुशल्यद्वयमुक्तम्, तदेवाग्रे देय-

मिति ॥ पदान्ते च गुरुयुगं क्रियते तच्छन्दोनाम तारकमिति भण्यते । सगणचतुष्टयेनान्तगुरुणा तारकमिति फलितोऽर्थः ॥ तथा च भूषणे—'यदि तोटकवृत्तपदे गुरुरेको भवतीह तदा किल तारकवृत्तम् । फणिनायकपिङ्गलवर्णितमेतद्बुधपण्डितमण्डलिकाहृतचित्तम् ॥'

तारकमुदाहरति—जहा (यथा)—

णवमञ्जरि लिंज्जिअ चूअहगाच्छे
परिफुल्लिअ केसुणआवण आच्छे ।
जइ एत्थि दिगन्तर जाइहि कन्ता
किअ मम्मह ण च्छि कि ण च्छि वसन्ता ॥ १६२ ॥

[नवमञ्जरी गृहीता चूतकगुच्छेन
परिपुष्पितं नवकिंशुकावनमच्छम् ।
यदि······दिगन्तरं यास्यति कान्तः
किं मन्मथो नास्ति किं नास्ति वसन्तः ॥]

हे सखि, चूतवृक्षेण नवमञ्जरी गृहीता । किं च (प्राकृते पूर्वनिपातानियमात्) नवकिंशुकवनमतिसुन्दरं यथा भवति तथा परिपुष्पितम् । यदि तस्मिन्समये कान्तो दिगन्तरं यास्यति तदा किं मन्मथो नास्ति किं वा वसन्त एव नास्ति, इति सखीं प्रति नायिकावचनम् ॥ उद्दवणिका यथा— ॥, S, ॥, S, ॥, S, ॥, S, S, १३×४ = ५२ ॥ यथा वा[णीभूषणे]—'अतिभारतरं हृदि चन्दनपङ्क मनुते सरसीपवनं विषशङ्कम् । तव दुस्तरतारवियोगपयोधेर्नहि पारमसौ भविता परमाधेः ॥' तारको निवृत्तः ॥

अथ कन्दच्छन्दः—

धजा तूर हारो पुणो तूर हारेण
गुरू सद्द किज्जे अ एका तआरेण ।
कएसा कला कन्दु जम्पिज्ज णाएण
असी होइ चउअग्गला सव्वपाएण ॥ १६३ ॥

[ध्वजस्तूर्यं हारः पुनस्तूर्यं हारः
गुरुः शब्दः क्रियते चैकस्तकारः ।

1. 'लिज्जिअ (कृता)' रवि०. 2. 'केसुनआवण (किंशुकवनम्)' रवि०. 3. 'वम्मह' रवि०. 4. 'गुरू काहला कण्ण एको लआरेण (गुरुः, अनन्तरं काहलो लघुः, ततः कर्णो द्विगुरुगणः, ततो लकारो लघुरेको यत्रास्ति)' रवि०.

एकविंशतिकलः कन्दो जल्पितो नागेन
अशीतिर्भवति चतुरधिका सर्वपादे[न] ॥]

भोः शिष्याः, यत्र प्रथमं ध्वज आदिलघुस्त्रिकलः क्रियते, ततस्तूर्यमादिगुरुस्त्रिकलः, ततो हारो गुरुः, पुनरपि तूर्यमादिगुरुस्त्रिकल एव, ततो हारो गुरुः, पुनरपि गुरुरेव, ततः शब्दो लघुः, ततोऽप्येकस्तकारस्तगण इत्यर्थः ॥ एवं पदे एकविंशतिः कला यत्र तत् नागेन पिङ्गलेन कन्द इति छन्दोनाम जल्पितम् । समुदितमात्रासंख्यामाह—सर्वपादे[न] पादचतुष्टये[न] चतुरधिका अशीतिः कलाः भवन्तीति ॥ भूषणे तु—'ध्वजं चामर मण्डितं गन्धहारेण मृगेन्द्रद्वयं चापि युक्तं समुद्रेण । तरा भाविभोगीन्द्रवक्त्राब्जगीतेन जनानन्दकन्देन वृत्तेन कन्देन ॥'

कन्दमुदाहरति—जहा (यथा)—

ण रे कंस जाणेहि हौ एक्क वालाइ
हऊं देवईपुत्त तो वंसकालाइ ।
तहा गेह्णु कंसो जणाणन्दकन्देण
जहा ह त्ति दिट्ठो णिआणारिविन्देण ॥ १६४ ॥

[न रे कंस जानीह्यहमेको बाल इति
अहं तु देवकीपुत्रस्तव वंशकालः ।
तथा गृहीतः कंसो जनानन्दकन्देन
यथा हत इति दृष्टो निजनारीवृन्देन ॥]

रे कंस, अहं एकः कश्चन बाल इति मा जानीहि । अहं तु देवकीपुत्रस्तव वंशकाल इति बुध्यस्व । जनानन्दकन्देन देवकीनन्दनेन तथा गृहीतः कंसो यथा हत एव दृष्टो निजनारीवृन्देनेति ॥ उद्वणिका यथा—ISS, SI, S, SI, S, S, I, SSI, १३×४=५२ ॥ यथा वा[णीभूषणे]—'हतं ते मनो नन्दगोपालबालेन नवीनाम्बुवाहावलीचारुदेहेन । सुधावीचिसंबाधबिम्बाधरामेण स्फुरद्बर्हशोभालसत्कान्तिपूरेण ॥' कन्दो निवृत्तः ॥

अथ पङ्कावलीछन्दः—

चामर पढमहि पापगणो धुअ
सेहु चरणगण ठावहि तं जुअ ।
सोलह कलअ पआपअ जाणिअ
पिङ्गल पभणइ पङ्कअवालिअ ॥ १६५ ॥

---

१. 'सल्ल चरणजुअ ठावहु तं जुअ' रवि०.

[चामरः प्रथमं पापगणो ध्रुवं
शल्यश्चरणगणस्य स्थापय ततो युगलम्।
षोडशकलाः पदे पदे ज्ञायन्ते
पिङ्गलः प्रभणाति पङ्क्तावली···· ॥]

हे मुग्धे, यत्र प्रथमं चामरो गुरुः, ततः पापगणः पञ्चकलः सर्वलघुको गणः ध्रुवं निश्चितम्, ततः शल्यो लघुः, ततः पश्चाच्चरणगणजुग्म भगणद्वयं स्थापय। एवं च षोडशकलाः पदे पदे ज्ञायन्ते यत्र तत् पङ्क्तावली छन्द इति पिङ्गलः प्रभणति॥ वाणीभूषणे तु—'पादे कुसुमरसगन्धमतः शरगण्डकयुगलकरूपमुपाहर। नागनृपतिवरभाषितमुद्युति वृत्तममलमिह पङ्क्तावलिरिति॥'

पङ्क्तावलिमुदाहरति—जहा (यथा)—

सो जग जणमउ सो गुणमन्तउ
जे कर परउअआर हसन्तउ।
जो पुण परअआर विरुज्झइ
तासु जणणि किं ण थक्कइ वञ्झइ॥ १६६॥

[स जगति जातः स गुणवा-
न्यः करोति परोपकारं हसन्।
यः पुनः परोपकारं विरुध्यते
तस्य जननी किं न तिष्ठति वन्ध्या॥]

स एव जगति जातः, स एव गुणवान्, यः करोति परोपकारं हसन्ननायासेन। यः पुनः परोपकारं विरुध्यते तस्य जननी किमिति वन्ध्यैव न तिष्ठति॥ यथा वा[णीभूषणे]—'शारदविशदनिशामपि निन्दति संप्रति हृदयभिदामनुविन्दति। मन्मथविशिखभयेन निमीलति माधव तव विरहेण विषीदति॥' उद्दवणिका यथा— ऽ, ।।।।।, ।, ऽ।।, ऽ।।, १३×४=५२॥ पङ्क्तावली निवृत्ता॥

अथ त्रयोदशाक्षरे प्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते।

तत्र प्रथमं मृगेन्द्रमुखं छन्दः—

भवति मृगेन्द्रमुखं नजौ जरौ गः॥ १६७॥

यत्र नजौ नगणजगणौ, अथ च जरौ जगणरगणौ भवतः, ततो गो गुरुर्भवति तन्मृगेन्द्रमुखं छन्दः॥

यथा—

गुरुभुजवीर्यभरं हरिं मदान्धा
　युधि समुपेत्य न दानवा जिजीवुः ।
क्षुधितमृगेन्द्रमुखं मृगा उपेत्य
　क नु खलु बिभ्रति जीवनस्य योगम् ॥

उद्दवणिका यथा—।।।, ।ऽ।, ।।।, ऽ।ऽ, ऽ, १३×४=५२ ॥ मृगेन्द्रमुखं निवृत्तम् ॥

अथ प्रहर्षिणीछन्दः—

आ(त्र्या)शाभिर्मनजरगाः प्रहर्षिणीयम् ॥ १६८ ॥

मगणनगणजगणरगणगुरुभिः, आशाभिरष्टभिश्च(?) विरतिर्यत्र भवति तत्प्रहर्षिणीछन्द इत्यर्थः ॥

यथा—

गोपीनामधरसुधारसस्य पानै-
　स्तुङ्गस्तनकलशोपगूहनैश्च ।
आश्चर्यैः सुखरसविभ्रमैर्मुरारेः
　संसारे मतिरभवत्प्रहर्षिणीह ॥

उद्दवणिका यथा—ऽऽऽ, ।।।, ।ऽ।, ऽ।ऽ, ऽ, १३×४=५२॥ प्रहर्षिणी निवृत्ता ॥

अथ रुचिराछन्दः—

जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ॥ १६९ ॥

यत्र जभौ जगणभगणौ, अथ च सजौ सगणजगणौ भवतः, ततो गुरुः, चतुर्भिः, ग्रहैर्नवभिश्च विश्रामो यत्र तद्रुचिरानामकं छन्द इति ॥

यथा—

पुनातु वो हरिरतिरासविभ्रमी
　परिभ्रमन्व्रजरुचिराङ्गनान्तरे ।
समीरणोल्लसितलतान्तरालगो
　यथा मरुत्तरलतमालभूरुहः ॥

उद्दवणिका यथा—।ऽ।, ऽ।।, ।।ऽ, ।ऽ।, ऽ, १३×४=५२ ॥ रुचिरा निवृत्ता ॥

---

१. 'त्र्याशाभिः' इति पाठश्छन्दोमञ्जरीपुस्तके दृश्यते; तस्य 'त्रिभिर्दशभिः' इति व्याख्यानं वरम्. अत एव 'त्रिदशयतिः' वृत्तरत्नाकरे पाठ उपलभ्यते.

अथ चण्डी—

नयुगलसयुगलगैरिति चण्डी ॥ १७० ॥

यत्रनगणद्वयसगणयुगलगुरुभिर्युक्तं भवति तच्चण्डीनामकं वृत्तमिति ॥

यथा—

जयति दितिजरिपुताण्डवलीला-
कुपितकवलकरकालियमौली।
चरणकमलयुगचापलचण्डी
पदनखरुचिजनिभोगमणिश्रीः ॥

उद्दवणिका यथा—।।।, ।।।, ।।ऽ, ।।ऽ, ऽ, १३×४=५२ ॥ चण्डी निवृत्ता ॥

अथ मञ्जुभाषिणी—

सजसा जगौ च यदि मञ्जुभाषिणी ॥१७१॥

यत्र सगणजगणसगणाः, अथ च जगौ जगणगुरू भवतः, तन्मञ्जुभाषिणीछन्दः इति ॥ इयमेव सुनन्दिनीति शंभौ ॥

यथा—

अमृतोर्मिशीतलकरेण लालयं-
स्तनुकान्तिचोरितविलोचनो हरेः।
नियतं कलानिधिरसीति वल्लवी
मुदमच्युते व्यधित मञ्जुभाषिणी ॥

उद्दवणिका यथा—।।ऽ, ।ऽ।, ।।ऽ, ।ऽ।, ऽ, १३×४=५२ ॥ मञ्जुभाषिणी निवृत्ता ॥

अथ चन्द्रिका छन्दः—

ननततगुरुभिश्चन्द्रिकाश्वर्तुभिः ॥ १७२ ॥

नगणद्वयतगणयुगलगुरुभिश्चन्द्रिका सप्तषड्विरचितविरतिर्भवतीति ॥

यथा—

शरदमृतरुचश्चन्द्रिकाक्षालिते
दिनकरतनयातीरदेशे हरिः।
विहरति रभसाद्वल्लवीभिः समं
त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥

यथा वा—

'इह दुरधिगमैः किंचिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम्।

असुमतिविपिनं वेद दिग्व्यापिनं
　पुरुषमिव परं पद्मयोनिः परम् ॥'

इति माघौ ॥ क्वचिदियमेव 'उत्पलिनी' ॥ उट्टवणिका यथा—।।।, ।।।, ऽऽ।, ऽऽ।, ऽ, १३×४=५२ ॥ चन्द्रिका निवृत्ता ॥

अथ कलहंसछन्दः—

**सजसाः सगौ च कथितः कलहंसः ॥ १७३ ॥**

सगणजगणसगणा यत्र सगणगुरू च, स कथितः कलहंसः ॥ कुत्रचिदयमेव 'सिंहनादः' इति ॥

यथा—

यमुनाविहारकुतुके कलहंसो
　व्रजकामिनीकमलिनीकृतकेलिः ।
जनचित्तहारिकलकण्ठनिनादः
　प्रमदं तनोतु तव नन्दतनूजः ॥

उट्टवणिका यथा—।।ऽ, ।ऽ।, ।।ऽ, ।।ऽ, ऽ, १३×४=५२ ॥ कलहंसो निवृत्तः ॥

अथ प्रबोधिता छन्दः—

**सजसा जगौ च भवति प्रबोधिता ॥ १७४ ॥**

सगणजगणसगणाः, अथ च जगौ जगणगुरू यत्र भवतः, तत्प्रबोधिताछन्दः ॥

यथा—

शयिता शृपा चटुलमाननिद्रया
　रतिकेलिकुञ्जनिलये विलासिनी ।
मुरवैरिणा वदनचुम्बनादिना
　स्मितमाततान सपदि प्रबोधिता ॥

उट्टवणिका यथा—।।ऽ, ।ऽ।, ।।ऽ, ।ऽ।, ऽ, १३×४=५२ ॥ प्रबोधिता निवृत्ता ॥

अत्रापि प्रस्तारगत्या त्रयोदशाक्षरस्य द्विनवत्युत्तरशतमष्टौ सहस्राणि च भेदाः । तेषु कियन्तो भेदा उक्ताः । शेषभेदाः सुधीभिः प्रस्तार्याकारास्त्वबुद्धितो वा सूचनीया इति ॥

अथ चतुर्दशाक्षरप्रस्तारे वसन्ततिलका छन्दः—

कण्णो पइ ज्ज पढमे जगणो अ बीए
　अन्ते तुरङ्ग भअणो य अ तच्छ पाए ।
उत्ता वसन्ततिलआ फणिणा उकिट्टा
　छेआ पढन्ति सरसा सुकइन्ददिट्टा ॥ १७५ ॥

[कर्णः पतति यत्र प्रथमो जगणश्च द्वितीयो-

ऽन्ते तुरङ्गः सगणो यश्च तथा पादे ।

उक्ता वसन्ततिलका फणिनोत्कृष्टा

छेकाः पठन्ति सुरसां सुकवीन्द्रदृष्टाम् ॥]

भोः शिष्याः, यत्र प्रथमो गणः कर्णः पतति, जगणो मध्यगुरुको गणो द्वितीयः, ततस्तुरङ्गः सगणः, पुनश्च सगण एव, तथा पादे य अ यश्च आदिलघुर्यगणश्चेत्यर्थः। एवं यत्र चतुर्दशाक्षरं पदं भवति सा फणिनोत्कृष्टा वसन्ततिलकोक्ता तां छेका विदग्धाः सुरसां सुकवीन्द्रदृष्टां पठन्तीति ॥ कुत्रचिदियमेव सिंहोद्धता ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'कर्णस्फुरत्कनककुण्डलमण्डिता या भावान्विता चरणसंगतनूपुरश्रीः । गन्धान्विता सुरसना वलयावनद्धा कान्ता वसन्ततिलका मुदमातनोति ॥' कान्तापक्षे स्पष्टोऽर्थः ॥

वसन्ततिलकामुदाहरति—जहा (यथा)—

जे तीय तिक्खचलचक्खुतिहाअदिट्ठा

ते कामचन्दमहुपञ्चममारणिज्जा ।

जेसं पुणो णिवडिआ सअला वि दिट्ठी

चिट्ठन्ति ते तिलजलञ्जलिदाणजोग्गा ॥ १७६ ॥

[ये तस्यास्तीक्ष्णचलचक्षुस्त्रिभागदृष्टा-

स्ते कामचन्द्रमधुपञ्चममारणीया ।

येषु पुनर्निपतिता सकलापि दृष्टि-

स्तिष्ठन्ति ते तिलजलाञ्जलिदानयोग्याः ॥]

कर्पूरमञ्जरीसाटकस्थं कर्पूरमञ्जरीवर्णनपरं विदूषकं प्रति राज्ञो वचनमिदम् ॥ ये लोकास्तस्यास्तीक्ष्णेन चक्षुपस्त्रिभागेन कटाक्षेण दृष्टा वीक्षिताः, ते कामचन्द्रमधुपञ्चमैर्मारणीया जाताः, येषु पुनर्निपतिता सकलापि दृष्टिः, ते तु तिलाञ्जलिदानयोग्यास्तिष्ठन्ति, पूर्वमेव मृता इत्यर्थः ॥ उट्टवणिका यथा—ऽऽ, ।ऽ।, ।।ऽ, ।।ऽ, ।ऽऽ, १४×४=५६॥ यथा वा[णीभूषणे]—'शंभोः करेण पुलकाङ्कुरदन्तुरेण रास्मेरमास्पृशति कुम्भमिभाननस्य । रोमाञ्चिताञ्चितकुचान्तचलाञ्चलायाः पायात्रपातरलमीक्षितमम्बिकायाः ॥' वसन्ततिलका निवृत्ता ॥

अथ चक्रपदच्छन्दः—

संभणिअ चरणगण पलिअ मुहो

संठविअ पुणु वि दिअवरजुअलो ।

जं करअलगण पअ पअ मणिओ
चक्कपअह भणु फणिवइ भणिओ ॥ १७७ ॥

[संभण चरणगणः पतति मुखे
संस्थापय पुनरपि द्विजवरयुगलम् ।
यत्र करतलगणः पदे पदे ज्ञात-
श्चक्रपदं भण फणिपतिर्भणति ॥]

हे मुग्धे, यत्र मुखे आदौ चरणगणो भगणो गुर्वादिगणो यत्र पतति, ततश्च संस्थापय, पुनरपि द्विजवरयुगलं चतुर्लघुकगणद्वयम्, ततश्च यत्र करतलं सगणो गुर्वन्तगणो यत्रैवं पदे पदे प्रतिचरणं ज्ञातः, तच्चक्रपदं वृत्तमिति फणिपतिर्भणतीति त्वं संभणेति ॥ भूषणे तु प्रकारान्तरेण लक्षणं लक्षितम्—'कुण्डलकलितनगणमिह तृ(?)तयं गन्धकुसुमरसविरचितवलयम् । चक्रमुरगपतिवरपरिगणितं षोडशकलमतिसुललितभणितम् ॥' आदावन्ते च गुरुद्वयम्, मध्ये द्वादशलघुभिः पिण्डतो वर्णचतुर्दशात्मकः षोडशकलश्चरणो यत्रेति फलितोऽर्थः ॥

चक्रपदमुदाहरति—जहा (यथा)—

खज्जणजुअलणअणवरउपमा
चारुकणअलइभुअजुअसुसमा ।
फुल्लकमलमुहि गअवरगमणी
कस्स सुकिअफल विहिगढु रमणी ॥ १७८ ॥

[खञ्जनोपमनयनयुगलवरा
चारुकनकलतासुपमभुजयुगा ।
फुल्लकमलमुखी गजवरगमना
कस्य सुकृतफलं विधिघटिता रमणी ॥]

प्राकृते पूर्वनिपातानियमात्खञ्जनोपमनयनयुगलेन वरात्युत्कृष्टा चारुकनकलतासुषमाभुजयुगा । अथ वा—भुजयुगे चारुकनकलतायाः सुषमा यस्याः । अथ च—फुल्लकमलमुखी गजवरगमना मत्तगजराजगामिनी रमणी विधिना कस्य सुकृतफलं सृष्टा ॥ वृत्त-णिका यथा—ऽ।।, ।।।।, ।।।।, ।।ऽ, १४×४=५६ ॥ यथा वा[णीभूषणे]—'सुन्दरि नभसि जलदचयरुचिरे देहि नयनयुगमतिघनचिकुरे । मानमिह न कुरु जलधरसमये किं तव भवति हृदयमिदमदये ॥' चक्रपदं निवृत्तम् ॥

अथ चतुर्दशाक्षरप्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते । तत्र प्रथमं वासन्ती छन्दः—

मस्तो मो मो गौ यदि गदिता वासन्तीयम् ॥ १७९ ॥

मगणतगणनगणमगणैर्गुरुद्वयेन च वासन्तीछन्दः ॥

यथा—

भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः
श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला ।
लीलालोला पल्लवविलसद्धस्तोल्लासैः
कंसारातौ नृत्यति सदृशी वासन्तीयम् ॥'

उद्दवणिका यथा—SSS, SSI, III, SSS, SS, १४×४=५६ ॥

अथासंबाधाछन्दः—

मो गो गो नौ मः शरनवभिरसंबाधा ॥ १८० ॥

यत्र पूर्वं मगणस्ततो गुरुद्वयम्, ततश्च नौ नगणद्वयम्, अनन्तरं मगणो भवति, शराः पञ्च, तेन पञ्चभिर्नवभिश्च यत्र विरतिर्भवति तदसंबाधाछन्दः ॥

यथा—

'वीर्याग्नौ येन ज्वलति रतिरसाक्षिप्ते
दैत्येन्द्रे जाता धरणिरियमसंबाधा ।
धर्मस्थित्यर्थं प्रकटिततनुरभ्यर्थ्यः
साधूनां बाधां प्रशमयतु कंसारिः ॥'

उद्दवणिका यथा—SSS, SS, III, III, SSS, १४×४=५६ ॥ असंबाधा निवृत्ता ॥

अथापराजिता छन्दः—

ननरसलघुगैः स्वरैरपराजिता ॥ १८१ ॥

नगणयुगलरगणसगणलघुगुरुभिः स्वरैः सप्तभिः कृतविश्रामापराजिता ॥

यथा—

'यदनवधिभुजप्रतापकृतास्पदा
यदुनिचयचमूः परैरपराजिता ।
व्यजयत समरे समस्तरिपुव्रजं
स जयति जगतां गतिर्गरुडध्वजः ॥'

उद्दवणिका यथा—III, III, SIS, IIS, I,S , १४×४=५६ ॥ अपराजिता निवृत्ता ॥

अथ प्रहरणकलिका छन्दः—

**ननभनलगिति प्रहणकलिका ॥ १८२ ॥**

नगणद्वयभगणनगणलघुगुरुभिः प्रहरणकलिकाछन्दः ॥

यथा—

व्ययर्यात कुसुमप्रहरण कलिका
प्रमदवनभवा तत्र धनुषि तया ।
विरहविपदि मे शरणमिह ततो
मधुमथनगुणस्मरणमविरतम् ॥

उद्दवणिका यथा—।।।, ।।।, ऽ।।, ।।।, ।, ऽ, १४×४=५६॥ प्रहरणकलिका निवृत्ता ॥

अथ लीलाछन्दः—

**द्विःसप्तच्छिदि लीला म्सौ म्भौ गौ चरणे चेत् ॥ १८३ ॥**

यदि चरणे द्विः सप्तच्छिदि सप्तभिश्छेदयुक्ते म्सौ मगणसगणौ, अथ च म्भौ मगण-भगणौ, ततश्च गौ गुरू भवतः, तल्लीलानामक छन्दः ॥

यथा—

मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला
त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ।
तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥

उद्दवणिका यथा—ऽऽऽ, ।।ऽ, ऽऽऽ, ऽ।।, ऽऽ, १४×४=५६॥ लीला निवृत्ता ॥

अथ नान्दीमुखी छन्दः—

**स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ ॥ १८४ ॥**

यदि स्वरैः सप्तभिर्भेदोऽवच्छेदो यत्र तादृशे चरणे नौ नगणौ, अथ च तौ तगणौ, ततश्च गौ गुरू भवतो यत्र, तन्नान्दीमुखी छन्दः ॥

यथा—

सरसखगकुलालापनान्दीमुखीयं
लहरिभुजलयाचारुफेनस्मितश्रीः ।
मुरहरकल्यासत्तिमासाद्य किं ते
प्रमुदितहृदया भानुजा नृत्यतीह ॥

उद्दवणिका यथा—।।।, ।।।, ऽऽ।, ऽऽ।, ऽ, ऽ, १४×४=५६॥ नान्दीमुखी निवृत्ता॥

अत्रापि प्रस्तारगत्या चतुर्दशाक्षरस्य चतुरशीत्यधिकानि त्रिशतानि षोडशसहस्राणि च

भेदानाम् । तेषु कियन्तो भेदाः प्रदर्शिताः । शेषभेदाः सुधीभिराकरतः स्वमत्या वा प्रस्तार्य स्वयमूहनीया इति दिक् ॥

अथ पञ्चदशाक्षरप्रस्तारे भ्रमरावली छन्दो लक्ष्यते—

कर पञ्च पसिद्ध विलद्धवररंरअणं
पभणन्ति मणोहर छन्दवरं रअणम् ।
गुरु पञ्च दहा लहु एरिसिअं रइअं
भमरावलि छन्द पसिद्ध किअं टइअम् ॥ १८५ ॥

[करैः पञ्चभिः प्रसिद्धं विलब्धवररचनं
प्रभणन्ति मनोहरं छन्दोवरं रत्नम् ।
गुरवः पञ्च दश लघव एतादृशं रचितं
भ्रमरावली छन्दः प्रसिद्धं कृत्वा रचितम् ॥]

भोः शिष्याः, यत्र करैः पञ्चभिः सगणैर्गुर्वन्तगणैर्विशेषेण लब्ध वर रचन यत्र तत् मनोहरं छन्दस्सु [उत्तमं] रत्नमाचार्याः प्रभणन्ति । अथ च—यत्र गुरवः पञ्च, लघवो दश, तदेतादृशं छन्दो भ्रमरावलीति रचित पिङ्गलेन प्रसिद्धं कृत्वा स्थापितम् । इदानींतनैराचार्यैरिति ॥ वाणीभूषणे तु—'भुजसगतशङ्खयुगा वलयाकलिता करपुष्पसुगन्धवती रसना रुचिरा । कनकद्वयनूपुरचारुतरा जयति भ्रमरावलिका भुजगाधिपदुर्ललिता ॥' द्वितीयोऽर्थः स्पष्टः ॥

भ्रमरावलीमुदाहरति—जहा (यथा)—

तुअ देव दुरित्तगणाहरणा चरणा
जइ पावउ चन्दकलाभरणा सरणा ।
परिपूजउ तेज्जिअ लोभ मणा भवणा
सुह दे मह सोकविणासमणा रमणा ॥ १८६ ॥

[तव देव दुरितगणहरणश्चरणौ (?)
यदि प्राप्नोमि चन्द्रकलाभरण शरणम् ।
परिपूजयामि त्यक्त्वा लोभे मनो भवनं
सुखं देहि मह्य शोकविनाशमना रमण ॥]

१. 'तुअ देउ—' इति पठित्वा 'तव देव दुरितगणहरणौ चरणौ यदि प्राप्नोमि । चन्द्रकलाभरणौ शरणौ ।' 'चन्द्रकलाभरणौ' इत्यनेन चरणस्य नखाश्चन्द्रकलायद्वर्णिताः, एतादृशौ चरणौ परिपूजयामि' इति रविकरः.

कश्चिद्भक्तः शिवं प्रार्थयते—हे चन्द्रकलाभरण चन्द्रशेखर देव, यदि तव दुरितगणहरणः पापसमूहविनाशकश्चरणः (?) शरणं प्राप्नोमि, तदा लोभे मनस्त्यक्त्वा भवनं गृहं निरन्तरं परिपूजयामि । अतो मह्यं तादृशं सुखं देहि हे रमण नित्यविहारशील, येनाहं त्रिविधशोकविनाशमनाः । स्यामिति शेषः ॥ यथा वा[णीभूषणे]—'सखि संप्रति क प्रति मीनमिदं विहितं मदनेन धनुः सशरं स्वकरे निहितम् । नतिशालिनि का वनमालिनि मानकथा रतिनायकसायकदुःखमुपैमि वृथा ॥' उद्दवणिका यथा—॥ऽ, ॥ऽ, ॥ऽ, ॥ऽ, ॥ऽ, १५×४=६० ॥ भ्रमरावली निवृत्ता ॥

अथ सर्वगुरुसारङ्गिकाछन्दः—

कण्णा दिण्णा सत्ता अन्ते एक्का हारा माणीआ
'पण्णाराहा हारा सारङ्गिका छन्दा जाणीआ ।
तीसा मत्ता पाए पत्ता भोईराआ जम्पन्ता
छन्दा किज्जे कित्ती लिज्जे सूणी मत्था कम्पन्ता ॥ १८७ ॥

[कर्णा दीयन्ते सप्तान्त एको हारो मान्यते
पञ्चदशहारं सारङ्गिकाछन्दो ज्ञातव्यम् ।
त्रिंशन्मात्राः पादे प्राप्ता भोगिराजो जल्पति
छन्दः क्रियते कीर्तिर्गृह्यते श्रुत्वा मस्तकं कम्पते ॥]

भोः शिष्याः, यत्र कर्णा द्विगुरवो गणाः सप्त दीयन्ते, अन्ते एको हारो गुरुर्मान्यते पूज्यते अभ्यर्हितः क्रियत इत्यर्थः । एवं पदे पञ्चदशापि हारा गुरवो यत्र तत्सारङ्गिकाछन्द इति ज्ञातव्यम् ॥ तत्र शिष्यव्युत्पत्तिसिद्धये पादपूरणार्थं वा मात्रानियममाह—यत्र पदे गुरूणां द्विगुणाभिप्रायेण त्रिंशन्मात्राः प्राप्ताः, तद्भोगिराजो जल्पति एवं छन्दः क्रियते कीर्तिरपि तेन गृह्यते । किं बहुना—यच्छ्रुत्वा मस्तकं कम्पते ॥ एतस्या एव ग्रन्थान्तरे लीलाखेल इति नामान्तरम् ॥ तथा च छन्दोमञ्जर्याम्—'एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः' इति ॥

सारङ्गिकामुदाहरति—जहा (यथा)—

मत्ता जोहा वे‍ट्टे कोहा अप्पाअप्पी गव्वीआ
रोसारत्तासव्वागत्ता सद्दा भल्ला उव्वीआ ।
हत्थीजूहा सज्जा हुआ पाए भूमी कम्पन्ता
लेही देही छोडो उट्ठो सव्वा सूरा जम्पन्ता ॥ १८८ ॥

१. 'दत्ताः' इति छाया रवि०. २. 'जाणीआ' रवि०. ३. 'माणीआ' रवि०. ४. 'चम्पन्ता' रवि०. ५. 'उट्टे कोहा (उत्थिताः क्रुद्धाः)' रवि०.

[मत्ता योधा वर्धितकोपा अहमहमिकया गर्विता
रोषारक्तसर्वगात्राः शल्यं भल्ला उत्थापिताः।
हस्तियूथानि सज्जीभूतानि पादैर्भूमिः कम्पिता
गृहाण देहि त्यज प्रतीक्षस्व सर्वे शूरा जल्पन्ति ॥]

कश्चिद्बन्दी कस्यचिन्नरपतेः संग्राममुपवर्णयति—यत्र योधा भटा वर्धितकोपाः सन्तोऽत एव वीररसावेशेन मत्ताः, अण्णाअप्पी अहमहमिकया गर्विताः साहंकारा जाताः। कीदृशाः। रोषेणारक्तसर्वगात्राः, तदनन्तरं तादृशसंग्रामे शल्यं भल्लाश्चायुधविशेषा उत्थापिताः। अथ च—हस्तियूथानि गजसमूहाः सज्जीभूतानि। अत एव संचरच्चतुरङ्गबलपादेन भूमिः कम्पिता। किं च तादृशसंकुलीभूतसमरसीमनि सर्वे शूराः शूरान्तरं प्रति 'गृहाण, देहि, त्यज, प्रतीक्षस्व' इत्यादि संग्रामसंपादकं वचनं जल्पन्ति—इति॥ यथा वा—'पायाद्वो गोविन्दः कालिन्दीकूलक्षोणीचक्रे रासोल्लासक्रीडद्गोपीभिः सार्धं लीलाखेलः। मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लोलो यद्वद्देवानामीशः स्वर्वेश्याभिः खेलन्तीभि.॥' उद्दवणिका यथा—ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽ, १५×४=६०॥ यथा वा—'मा कान्ते पक्षस्यान्ते पर्याकाशे देशे स्वाप्सीः [कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत्। क्षुत्क्षामः प्रांटश्वेतश्वेतो राहुः क्रूरः प्रायात्तस्माद्ध्वान्ते हर्म्यस्यान्ते शय्याकान्ते कर्तव्या॥]' इति ज्योतिष्मिकाणां कालपरिमाणसूचकमुदाहरणमिति॥ सारङ्गिका निवृत्ता॥

अथ चामरच्छन्दः—

चामरस्स वीस मत्त तीणि मत्त अग्गला
अट्ठ हार सत्त सार ठाइ ठाइ णिम्मला।
आइअन्तहारसार कामिणी मुणिज्जिए
अक्खरा दहाइ पञ्च पिङ्गले भणिज्जिए॥ १८९॥

[चामरस्य विंशतिर्मात्रा तिस्रो मात्रा अधिकाः
अष्ट हाराः सप्त शराः स्थाने स्थाने निर्मलाः।
आद्यन्तयोर्हारसाराणि कामिनि ज्ञायन्ते
अक्षराणि पञ्चदश पिङ्गलेन भण्यते॥]

हे कामिनि, चामरस्य छन्दसस्त्र्यधिका विंशतिस्त्रयोविंशतिर्मात्राः पदे भवन्ति। तत्राष्टौ हारा गुरवः, शरा लघवस्ते च सप्त, स्थाने स्थाने निर्मला दृश्यन्ते यत्रेति नियमः। नियमान्तरमाह—आइअन्तहारसार आद्यन्तयोर्हारो गुरुः सारो यत्रैवंरूपाणि पञ्चदशाक्षराणि पदे ज्ञायन्ते, तत्पिङ्गलेन नागराजेन चामरमिति छन्दो भण्यत इति यो-

जना ॥ भूषणे तु प्रकारान्तरेणोक्तम्—'हारवर्त्पयोधरत्रयं निधाय सुन्दरं चामरध्वजेन मण्डितं विधाय चामरम् । वृत्तराजमेतदेव नागराजभाषितं पण्डितावलीविनोदकारि चारुभाषितम् ॥' एतस्यैव मन्थान्तरे (छन्दोमञ्जर्या) तूणकमिति नामान्तरम् ॥

चामरमुदाहरति—जहा (यथा)—

झत्ति जोह सज्ज होह गज्ज वज्ज तं खणा
रोसरत्त गव्वगत्त हक्क दिज्ज भीसणा ।
धाइ आइ खग्ग पाइ दाणवा चलन्तउ
वीरपाअ णाअराअ कम्प भूतलन्तउ ॥ १९० ॥

[झटिति योधाः सज्जा भवत गर्जन्ति वाद्यानि तत्क्षणे
रोषारक्ता गर्वगता फूत्कुर्वन्ति भीषणाः ।
धावित्वागत्य खड्गं पातयित्वा दानवाश्चलन्ति
वीरपादैर्नागराजः कम्पितो भूतलान्तः ॥]

कश्चित्कविर्देवासुरसंग्राममुपवर्णयति—भो योधाः सुभटाः, झटिति सज्जीभवत । यतो वाद्यानि डिण्डिमतूर्यादीनि गर्जन्ति तत्क्षणे रोषारक्तसर्वगात्राः फूत्कुर्वन्ति । भीषणा अतिभयानका दानवाः किंच धावित्वा आगत्य खड्गं पातयित्वा चलन्ति । समराङ्गण इति शेषः । अत एव वीराणां पादेन भूतलान्तर्भूमीतलमध्ये नागराजः शेषोऽपि कम्पितोऽभूदिति ॥ यथा वा[णीभूषणे]—'रासलास्यगोपकामिनीजनेन खेलता पुष्पपुञ्जमञ्जुकुञ्जमध्यगेन दोलता । तालनृत्यसंगिगोपबालिकाविलासिना माधवेन जायते सुखाय मन्दहासिना ॥' उद्दवणिका यथा—ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ १५×४=६० ॥ चामरं निवृत्तम् ॥

अथ निशिपालछन्दः—

हारु धरु तिण्णि सरु हिंण्णि परि तिग्गणा
पञ्च गुरु दुण्ण लहु अन्त कुरु रग्गणा ।
एत्थ सहि चन्दमुहि वीस लहुमोलआ
कव्ववर सप्प भण छन्द णिसिपालआ ॥ १९१ ॥

[हारं धारय त्रयः शरा अनया परिपाट्या त्रयो गणाः
पञ्च गुरवो द्विगुणा लघवोऽन्ते कुरु रगणम् ।

१. 'हारवत्पयोधरं मृगेन्द्रात्तु सुन्दरं चामरद्वयेन मण्डितं हि चामरम्' भूषणादर्शपाठः. २. 'शब्द ददति' इति छाया रवि॰. ३. 'हार करु (हारः क्रियते)' रवि॰. ४. 'एणि' रवि॰. ५. 'माणिआ (जानीहि)' रवि. ६. 'कव्विभण' रवि॰.

अत्र(?) सखि चन्द्रमुखि विंशतिर्लघुमालका
कविवरः सर्पो भणति छन्दो निशिपालकम् ॥]

हे सखि, पूर्वे हारं गुरुं धारय ततस्त्रयः शराः । लघुत्रयमित्यर्थः । हिण्णि परि अनया परिपाट्या त्रयो गणा गुर्वादि त्रिकलाः । पञ्चकला इत्यर्थः । अन्ते पञ्च[गण]कलगणत्र-यावसाने रगणं मध्यलघुकं पञ्चकलमेव गणं कुरु ॥ तत्राक्षरनियममाह—अत्र छन्दसि पञ्च गुरवः, पञ्च द्विगुणा [दश] लघवः । पदे पतन्तीति शेषः । मात्रानियममाह—हे च-न्द्रमुखि, एत्य निशिपालनाम्नि वृत्ते विंशतिर्लघुमालाः (कलाः), तदेतन्निशिपालाख्य छन्दः कविषु वरो महाकवीन्द्रसर्पः पिङ्गलो भणतीति ॥ वाणीभूषणे तु प्रकारान्तरेणो-क्तम्—'तालशररज्जुधररत्नवरसुन्दरं भावयुततालगतमन्त्यकृतचामरम् । शुद्धमतिनाग-पतिहृदयकृतसंगमं वृत्तनिशिपालमसिताक्षि हृदयंगमम् ॥'

निशिपालमुदाहरति—जहा (यथा)—

जुज्झ भड भूमि पल उट्ठि पुण लग्गिआ
सग्गमण खग्ग हण कोइ णहि भग्गिआ ।
वीर सर तिक्खपर कण्ण गुण अप्पिआ
ईत्थ तह जोह दह पाअ सह कप्पिआ ॥ १९२ ॥

[युद्धे भटा भूमौ पतन्ति उत्थाय पुनर्लगन्ति
स्वर्गमना[:] खड्गेन हन्ति कोऽपि नहि पलायितः ।
वीरैः शरास्तीक्ष्णफलाः कर्णे गुणमर्पिताः
इत्थं तथा योधा दश पादेन सह कर्तिताः ॥]

कश्चिद्बन्दी समरमुपवर्णयति—युद्धे समरे भटा योधा भूमौ पतन्ति, उत्थाय पुनर्ल-गन्ति च । अभ्यमित्रमिति [शेषः] । ततश्च तादृशमहावीराहवे सकलोऽपि वीरवर्गः स्वर्गमनाः सन्नभिमुखं खड्गेनैव धारातीर्थाशया हन्ति । अतश्च न कोऽपि हि पलायितः । अथच वी-रैस्तीक्ष्णफलाः शरा बाणाः कर्णे गुणं कृत्वा कर्णान्ताकृष्टशिञ्जिनीकं कार्मुकं विधाया-र्पिताः । परेष्वित्यर्थात् । इत्थं बाणपातनेनैव तथा दश योधा दशसंख्याकाः सुभटाः पा-देन चरणेन सह कप्पिआ कर्तिताः । खण्डशः कृता इत्यर्थः ॥ उट्टवणिका यथा—ऽ।।।, ऽ।।।, ऽ।।।, ।ऽ।ऽ, १५×४=६० ॥ यथा वा[णीभूषणे]—'चन्द्रमुखि जीवमुपि वाति म-लयानिले याति मम चित्तमिव पाति मदनानले । तापकरकामशरशल्यवरकीलितं मानमिह पश्य नहि कोपमतिशीलितम् ॥' निशिपालो निवृत्तः ॥

१. 'पुण उठि' रवि०. २. 'पत्थे तह जोह दह चावे सह कम्पिआ (पार्थेन तत्र यो-जिता दश ततः सर्वे कम्पिताः)' रवि०. ३. 'स्वर्गमनसः खड्गेन घ्नन्ति' इति छाया रवि०.

अथ मनोहंसं छन्दः—

जिह आइ हत्थ णरेन्दविण्णवि दिज्जिआ
गुरु एक्कु-काहलवेवि तक्कइ किज्जिआ ।
गुरु ठाइ गन्ध अ हार अन्तहि थप्पिआ
मणहंस छन्द पसिद्ध पिङ्गलजप्पिआ ॥ १९३ ॥

[यत्रादौ हस्तो नरेन्द्रद्वयं दीयते
गुरुरेकः काहलद्वयं तदनन्तरं क्रियते
गुरुं स्थापयित्वा गन्धं च हारोऽन्ते स्थाप्यते
मनोहंसं छन्दः प्रसिद्धं पिङ्गलजल्पितम् ॥]

भोः शिष्याः, यत्रादौ हस्तः सगणो गुर्वन्तगणः, ततो नरेन्द्रद्वयं जगणद्वयं दीयते, अनन्तरमेको गुरुः । तक्कइ तदनन्तरम् । काहलवेवि काहलद्वयं लघुद्वयं क्रियते, ततो गुरुं स्थापयित्वा गन्धं च लघुमपि स्थापयित्वेत्यर्थः । तथा—अन्ते यत्र हारो गुरुः स्थाप्यते तन्मनोहंसमिति प्रसिद्धं छन्दः पिङ्गलेन जल्पितमिति जानीत ॥ वाणीभूषणे तु—'सगणं विधाय पयोधरद्वयसुन्दरं भगणं ततो विनिधाय चामरतोमरम् । मनहंसवृत्तमिदं च पञ्चदशाक्षरं भणितं भुजंगमनायकेन मनोहरम् ॥'

मनोहंसमुदाहरति—जहा (यथा)—

जहि फुल्ल केसुअसोअचम्पअवञ्जुला
सहकारकेसरगन्धलुद्धउ भम्मला ।
वह दक्खदक्खिण वाउ माणहभञ्जणा
महुमास आविअ लोअलोअणरञ्जणा ॥ १९४ ॥

[यत्र पुष्पिताः किंशुकाशोकचम्पकवञ्जुलाः
सहकारकेसरगन्धलुब्धा भ्रमराः ।
वहति दक्षो दक्षिणो वायुर्मानभञ्जनो
मधुमास आगतो लोकलोचनरञ्जनः ॥]

काचिद्वसन्तमुपवर्णयन्ती प्रोषितपतिका निजसखीमाह—हे सखि, यत्र पुष्पिताः किंशुका अशोकाश्चम्पका वञ्जुलाश्च । वसन्ते पुष्पिता इति । किंच—सहकारकेसरगन्धलुब्धा भ्रमराः । वर्तन्त इति शेषः । अथ च—वहति दक्षो दक्षिणो वातः मानानां भञ्जनः, अतश्च मधुमासो वसन्तः समागतो लोकलोचनरञ्जनः ॥ यथा वा[णीभूषणे]—'नवमञ्जुवञ्जुलकुञ्जकूजितकोकिले मधुमत्तचञ्चलचञ्चरीककुलाकुले । समयेऽतिधीरसमीरकम्पि-

तमानसे किमु चण्डि मानमनोरथेन विखिद्यसे ॥' उट्टवणिका यथा—॥ऽ, ।ऽ।, ।ऽ।, ऽ, ॥, ऽ, ।, ऽ, १५×४=६० ॥ मनोहंसो निवृत्तः ॥

अथ मालिनी छन्दः—

पढम रससहित्तं मालिणी णाम वुत्तं
परमतिअपसिद्धं वीअ ठा मोणिवद्धम् ।
सरगुरुजुअगन्धं अन्त कण्णाणिबद्धं
भणइ सरसछन्दं चित्तमज्जे णिहित्तम् ॥ १९५ ॥

[प्रथमं रससहितं मालिनी नाम वृत्तं
परमत्रिकप्रसिद्धं द्वितीयस्थाने मनिबद्धम् ।
शरगुरुयुतगन्धमन्तकर्णनिबद्धं
भणति सरसच्छन्दश्चित्तमध्ये निहितम् ॥]

भोः शिष्याः, यत्र प्रथमं परमत्रिकप्रसिद्धं परमो द्विलघ्वात्मको गणस्तादृशैस्त्रिभिः परमैः प्रसिद्धम्, रससहितं शृङ्गारादिरससहितं मालिनीति नाम तद्वृत्तं सरसम् । अत एव चित्तमध्ये निहितं छन्दः फणीन्द्रो भणतीति । कीदृशम् । वीअ ठा मोणिवद्धं परमत्रिकानन्तरं यद्द्वितीयस्थानं तत्र मोनिबद्धं मगणेन गुरुत्रयात्मकेन गणेन निबद्धम् । पुनः शरो लघुः, ततो गुरुयुतं ततोऽपि गन्धो लघुः तस्याप्यन्ते कर्णेन द्विगुर्वात्मकेन गणेन नितरां बद्धं संयुक्तमित्यर्थः ॥ भूषणे तु—प्रकारान्तरेण लक्षितम्—'द्विजकुसुमसुरूपा कर्णताटङ्कयुक्ता कनकवलयहारैर्मण्डिता युक्तशङ्खा । सुललितरसनासौ नूपुरश्रीसमेता हरति रसिकचित्तं मालिनी कामिनीव ॥' कामिनीपक्षेऽर्थः स्पष्टः ॥ नगणद्वयमगणयगणयुग्मयुक्तं वसुस्वरकृतविरामं मालिनी वृत्तमिति फलितोऽर्थः ॥ अत एव छन्दोमञ्जर्याम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इत्युक्तमिति ॥

मालिनीमुदाहरति—जहा (यथा)—

वहइ मलअवाआ हन्त कम्पन्त काआ
हणइ सवणरन्धा कोइलालावबन्धा ।
सुणिअ दह दिसेसुं भिङ्गझंकारभारा
हणइ हणइ हंजे चण्डचण्डालमारा ॥ १९६ ॥

[वहति मलयवातो हन्त कम्पतो काया
हन्ति श्रवणरन्ध्रं कोकिलालापबन्धः ।
श्रूयन्ते दशदिशासु भृङ्गझंकारभारा
हन्ति हन्ति हञ्जे चण्डचाण्डालमारः ॥]

काचित्प्रोषितपतिका सखीमाह—हे हञ्जे नीचसखिसंबोधने । 'हञ्जे हण्डे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरनिर्देशात् । मलयवातो दक्षिणानिलो वहति । अत एव हन्त इति खेदे । कम्पन्ते गात्राणि । अथच कोकिलालापबन्धः श्रवणरन्ध्रे हन्ति पिक-पञ्चमस्वरप्रबन्धः कर्णरन्ध्रं भिनत्तीत्यर्थः । किंच दशसु दिक्षु भ्रमर्झंकारभाराः श्रूयन्ते । अत एव आतपलक्षण्डोऽतिकठोराशयश्चाण्डाल इव मारो मारात्मकः कामो हन्ति हन्ति । मामिति शेषः । अत्र हन्तीति वीप्सया निर्दयत्वमेतस्य मदनस्य सूचितमिति भावः ॥ यथा वा[णीभूषणे]—'नयनविगलदस्रुस्रोतसा कृष्यमाणे नवकिसलयतल्पे हन्त सुप्ता मृगाक्षी । प्रचलमदनबाधालोलदोर्वल्लिरेषा विरहजलधिपारं गन्तुमभ्यस्यतीव ॥' उट्टवणिका यथा—॥, ॥, ॥, ऽऽऽ, ।, ऽऽ, ।, ऽऽ, १५×४=६० ॥मालिनी निवृत्ता ॥

अथ शरभछन्दः—

भणिअ सुपिअगण रसजुअसहिओ
तह विहु करअल पअ पअ लहिओ ।
चउचउकलगण पैअ पअ सुहिओ
सरह सुपिअ गणफणिवइकहिओ ॥ १९७ ॥

[भणितः सुप्रियगणो रसयुगसहितः
तथा द्वौ करतलं पदे पदे लब्धम् ।
चतुश्चतुष्कलगणाः पदे पदे सुहिताः
शरभं सुप्रियाः फणिगणपतिकथितम् ॥]

भोः सुप्रियाः सुतरां प्रियाः शिष्याः, प्राकृते पूर्वनिपातानियमात् फणिगणानां पतिना-(त्या) पिङ्गलेन कथितं तच्छरभाख्यं छन्दः । कीदृशम् । यत्र सुप्रियगणो लघुद्वयात्मको गणो रसयुगेन लघुद्वयेन सहितः पूर्वं भणितः पठितः, तथा—विहु द्वौ सुप्रियगणौ रसयुगेनैव सहितौ कार्यौ, ततः करतलं सगणः पदे पदे प्रतिपद लब्धः । यत्र चैवं प्रकारेण पदे पदे चतुश्चतुष्कला गणाः सुतरां हिताः, तादृशं वृत्तं शरभनामकमिति ॥ भूषणेऽपि—'द्विजवरत्रि(?)लयकलितमिह सगणं कलय शरभमतिरतिरतिकरणम् । कविवरसकलहृदयरुचिहरणं फणिवरनरपतिवदनविहरणम् ॥'

शरभमुदाहरति—जहा (यथा)—

तरलकमलदलसरिसजणअणा
सरअसमअससिसुसरिसवअणा ।

१. 'पअ पअ मुणिओ । सरह सुपिअ गण फणिवइभणिओ (प्रतिपदं ज्ञातः । शरभं सुप्रिये गणप फणिपतिभणितम्)' रवि०.

मअगलकरिवरसअलसगमणा
कँम सुकिअफलउ विहिगढु रमणी ॥ १९८ ॥
[तरलकमलदलसदृशनयना
शरत्समयशशिसुसदृशवदना।
मदकलकरिवरसालसगमना
किं तत्सुकृतफलं.................रमणी ॥]

कश्चित्कामुकः कामपि कामिनीमुपवर्णयति—तरलकमलदलसदृशनयना शरत्समयशशिसुसदृशवदना मदकलकरिवरसालसगमना इयं रमणी येन सुकृतफलेन पुण्यपुञ्जेन सृष्टा किं तत्सुकृतफलमिति न जानीमहे। इति वितर्कालंकारः ॥ यथा वा[णीभूषणे]—'अमलकमलदलरुचिधरनयनो जलनिधिमधिफणिपतिफणशयनः। दनुजविजयसुरपतिनतिमुदितो हरिरपहरतु दुरिततातिमुदितः ॥' उद्दवणिका यथा—॥, ॥, ॥, ॥, ॥, ॥, ॥, ऽ, १५×४=६० ॥ इदमेव ग्रन्थान्तरे शशिकलेति नामान्तरेणोक्तम्। शशिकलापि रस ६ नव ९ रचितविरतिश्चेत्, तदा स्रगिति नामान्तरं लभते। तथा च छन्दोमञ्जर्याम्—'स्रगियमपि च रसनवरचितयतिः' इति। यथा—'अपि सहचरि रुचिरतरगुणमयी म्रदिमवसतिरनपगतपरिमला। स्रगिव निवसति लसदनुपमरसा सुमुखि मुदितदनुजदलनहृदये ॥' उद्दवणिका यथा—॥, ॥, ॥, ६ ॥, ॥, ॥, ॥, ऽ९, १५×४=६० ॥ इयमेव च यदा वसु ८ मुनि ७ यतिः, तदा मणिगुणनिकर इति संज्ञान्तरं लभते। तदुक्तं तत्रैव—'वसु ८ मुनि ७ यतिरिति मणिगुणनिकरः' ॥ यथा—'नरकरिपुरवतु निखिलसुरगतिरमितमहिमभरसहजनिवसतिः। अनवधिमणिगुणनिकरपरिचितः सरिदधिपतिरिव धृततनुविभवः ॥' उद्दवणिका यथा—॥, ॥, ॥, ॥, ८ ॥, ॥, ॥, ऽ७, १५×४=६० ॥ एतौ च यतिकृतौ शरभभेदौ प्रकृतप्रस्तारसंख्यायामेवावगन्तव्याविति ॥ शरभो निवृत्तः ॥

अत्रास्मिन्नेव प्रस्तारे कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते ॥ तत्र प्रथमं विपिनतिलकं छन्दः—

विपिनतिलकं नसनरेफयुग्मैर्भवेत् ॥ १९९ ॥

नगणसगणनगणरगणयुगलैर्विपिनतिलकं वृत्तं भवेदिति ॥

यथा—

'विपिनतिलकं विकसितं वसन्तागमे
मधुकृतमदैर्मधुकरैः क्वणद्भिर्वृतम्।

१. 'क मणसु किअ फले विहि लिहु रमणी (कं मनसि कृत्वा ललाटफलके विधिलिखिता रमणी)' रवि०.

मलयमरुता रचितलास्यमालोकय-
ञ्व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः ॥'

उद्दवणिका यथा—।।।, ।।ऽ, ।।।; ऽ।ऽ, ऽ।ऽ, १५×४=६० ॥ विपिनतिलकं निवृत्तम् ॥

अथ चन्द्रलेखा छन्दः—

म्रौ मो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा ॥ २०० ॥

यदि प्रथमं म्रौ मगणरगणौ भवतः, ततो मो मगणः, ततश्च यौ यगणौ भवेतां सप्ताष्टकैर्वर्णैर्विरतिश्च भवेत्, तदा चन्द्रलेखा तन्नामकं वृत्तमित्यर्थः ॥

यथा—

'विच्छेदे ते मुरारे पाण्डुप्रकाशा कृशाङ्गी
म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा ।
राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा
किंचार्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥'

उद्दवणिका यथा—ऽऽऽ, ऽ।ऽ, ऽऽऽ, ।ऽऽ, ।ऽऽ, १५×४=६० ॥ चन्द्रलेखा निवृत्ता ॥

अथ चित्रं छन्दः—

चित्रानाम छन्दश्चित्रं चेत्त्रयो मा यकारौ ॥ २०१ ॥

तच्चित्रानामकं चित्रं नाम यस्य यत्र त्रयो मा मगणत्रयं यकारौ यगणद्वयं च यत्र भवेत्तत्कथितनामद्वयं छन्दो भवतीति ॥

यथा—

'गोपालीलीलालोला यद्वत्कलिन्दात्मजान्ते
खेलन्मुक्ताहारारण्यस्रग्लसन्मूर्धचित्रा ।
कंसारातेर्मूर्तिस्तद्वन्मे हृदि क्रीडन्तीयं
कोऽन्यः स्वर्गो मोक्षो वा स्याद्वियते तन्न जाने ॥

उद्दवणिका यथा—ऽऽऽ, ऽऽऽ, ऽऽऽ, ।ऽऽ, ।ऽऽ, १५×४=६० ॥ अत्रापि प्रस्तारगत्या पञ्चदशाक्षरस्य द्वात्रिंशत्सहस्राणि सप्तशतान्यष्टषष्ट्युत्तराणि ३२७६८ भेदाः । तेषु कियन्तो भेदाः प्रोक्ताः । शेषभेदास्तीक्ष्णरोमुपीकैराकरान्निजबुद्ध्या वा प्रस्तार्य सूचनीया इत्युपरम्यते ॥

अथ षोडशाक्षरप्रस्तारे नाराचच्छन्दोऽभिधीयते—

णरेन्द जत्थ सव्वलो सुपण्ण वेवि दीसए
पइक ठामपश्चमे कला चतूरुवीसए ।

पलन्त हारु चारु सारु अन्त जस्स वट्टए
पसिद्ध ए णराउ जम्पु गन्धबेङ्कअट्टए ॥ २०२ ॥

[नरेन्द्रो यत्र शबलः सुपर्णौ द्वावेव दृश्येते
पदातिः पञ्चमस्थाने कलाश्चतुर्विंशतिः ।
पतितो हारश्चारुः सारोऽन्ते यस्य वर्तते
प्रसिद्धमेतन्नाराचं जल्पति गन्धवक्राष्टकम् ॥]

भोः शिष्याः, यत्र नरेन्द्रो जगणो गुरुमध्यमो गणः शबलश्चित्रितो वर्तते । तथा च सुपर्णो रगणो लघुमध्यमो गणः वेवि सुपर्णावेव द्वौ गणौ दृश्येते नान्य इति नियमः । पइकश्चतुष्कलोऽर्थाद्गुरुमध्यो जगण एव । ठामपञ्चमे प्राकृते पूर्वनिपातानियमात् पञ्चमस्थाने नायको देय इत्यर्थः । तद्दानं गणान्तरनिरासार्थम् । रगणस्य पञ्चकलत्वादिति भावः । एवं गणपञ्चकेन पञ्चदशाक्षराणि, ततश्च हारो गुरु यथा स्यात्तथा सारभूतोऽन्ते यस्य पतितो वर्तते । एतत्प्रसिद्धं नाराचनामकम् । कलाश्चतस्रः सविंशतयः पदे यस्य चरणस्थितचतुर्विंशतिकलात्मकमिदं छन्दः पणीन्द्रो जल्पति ॥ तत्र लघुगुरुनियममाह—गन्धबङ्कअट्ठए गन्धवक्रयोर्लघुगुर्वोः क्रमेणाष्टकं यत्रेति । तथा च—अत्रैवाष्टाक्षरप्रस्तारप्रस्तावेऽभिधीयमाने प्रमाणिकाछन्दोलक्षणे—'लहूगुरू णिरन्तरा पमाणि अट्ठ अक्खरा । पमाणि दूण किज्जए णराउ सो भणिज्जए ॥' इत्युक्तम् । तदत्र सिंहावलोकनन्यायेन संचारणीयमिति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'ध्वजेन नायकेन कुण्डलेन यद्विभूषितं पयोधरेण वीणया शरेण पक्षिणाङ्कितम् । नराचवृत्तमत्र षोडशाक्षरं समीरितं मनोज्ञिमण्डलीहितं फणीन्द्रपन्नगोदितम् ॥' इदमेव ग्रन्थान्तरे पञ्चचामरमिति नामान्तरम् । अत एव छन्दोमञ्जर्याम्—'प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम्' इत्युक्तम् ॥

नराचमुदाहरति— जहा (यथा)—

चलन्त जोह सत्तुखोह रैणकम्मअग्गरा
किवाणवाणसल्लभल्लचावचक्कमुग्गरा ।
पैहारघोरमारुधारग्गवग्गपण्डिआ
पअट्ठ ओट्ठ दैन्त दट्ट तेण सेणमण्डिआ ॥ २०३ ॥

१. 'एह (एषो)' रवि०. २. 'पन्धु (पन्धवो)' रवि०. ३. 'वम्मकम्मअग्गरा (वर्मकर्मणि दक्षाः)' रवि०. ४. 'पहार धारे मार धार रग्गवग्ग (प्रहारं धारयित्वा खड्गेन मारयन्ति खड्गवर्गपण्डिताः)' रवि०. ५. 'कन्त दन्ते (प्रदृष्ट ओष्ठेन कान्तो दन्तः । तैः सेना मण्डिता)' रवि०.

[चलन्ति योधाः शत्रुक्षोभाः रणकर्माग्रेसराः
कृपाणबाणशल्यभल्लचापचक्रमुद्गराः ।
पर्वतघोटमारधारासनवल्गपण्डिताः
दन्तदष्टप्रकृष्टोष्ठया तया सेनया मण्डिताः ॥]

वन्दी सङ्ग्रामाङ्गणमनुवर्णयति—योधाः सुभटाश्चलन्ति समरभूमावितस्ततः संचरन्ति । कीदृशाः । शत्रूणामहितानां क्षोभकाः । पुनः रणकर्माग्रेसराः, रणकर्मण्यग्रिमा वा । ततश्च कृपाणबाणशल्यभल्लचापचक्रमुद्गराश्चायुधविशेषाश्चलन्तीत्यनेनैवान्वयः । पुनः कीदृशाः भटाः । पर्वताकारतुरगैर्मारणार्थं यो धारः समन्ताद्वर्तुलीभूय धावनं तत्रासनवल्गासु पण्डिता अतिदक्षाः सादिन इत्यर्थः । पुनः प्राकृते पूर्वनिपातानियमात् दन्तदष्टप्रकृष्टोष्ठया तया सेनया ध्वजिन्या मण्डिताः ॥ यथा वा[णीभूषणे]—'निशुम्भशुम्भचण्डमुण्डरक्तबीजघातिनी लुलायरूपदैत्यभूतघातपक्षपातिनी । नवीनपीनचन्द्रजालकालमेघसन्निभा चिरं चरीकरोतु नः प्रियं पिनाकिवल्लभा ॥' उद्दवणिका यथा—ISI, SIS, ISI, SIS, ISI, S, १६×४=६४ ॥ नराचो निवृत्तः ॥

अथ नीलच्छन्दः—

णीलसरूअ विआणहु मत्तह बाइसही
पश्च भगण्ण पणा पड आसिअ एरिसही ।
अन्त ठिआ जहिँ हार मुणिज्जइ हे रमणी
बावणअग्गल तिण्णि सआ धुअ रूअ मुणी ॥ २०४ ॥

[नीलस्वरूपं विजानीहि मात्रा द्वाविंशतिः
पञ्च भगणाः पदे पतन्ति आश्रित ईदृशीः ।
अन्ते स्थितो यत्र हारो ज्ञायते हे रमणि
द्विपञ्चाशदधिकानि त्रीणि शतानि ध्रुवं रूपं ज्ञातव्यम् ॥]

हे रमणि, तन्नीलस्वरूपं नीलनामकं छन्दो लक्ष(?) जानीहीत्यर्थ (?) । यत्र पदे द्वाविंशतिर्मात्राः पञ्च भगणा गुर्वादिगणाः पदे पतन्ति, एतादृशैरेव पदैराश्रितमिति छन्दोविशेषणम् । अन्ते पञ्चमगणान्ते स्थितो हारो गुरुर्यत्र ज्ञायते तदेतद्द्विपञ्चाशदधिककलाशतत्रयात्मकं ध्रुवं निश्चितमीदृशं रूपं मुणी ज्ञातव्यमित्यर्थः । एतदुक्तं भवति—चरणस्थितद्वाविंशतिमात्रात्मकमिदं नीलाख्यं वृत्तं चतुरछन्दोभिप्रायेण षोडशचरणात्मकम् । तत्रैकस्य छन्दसश्चरणे द्वाविंशतिश्चतुर्गुणितोऽष्टाशीतिकलात्मकः । यथा—२२+२२+२२+२२=८८॥ एवमष्टाशीतिकलात्मकचरणचतुष्टयेन द्विसमधिकपञ्चाशदुत्तरकलाशतत्रयात्मकमिदं नीलस्वरूपं भवतीति । यथा—८८+८८+८८+८८=३५२॥ वाणीभूषणे तु प्रकारान्तरेण लक्षणं लक्षितम्—'तारपयोधरनायकतोमरलधरं पानिगुत च विभारय भा

मिति वृत्तवरम्। नीलमिदं फणिनायकगायकसंलपितं पण्डितमण्डलिकासुखदं सखि कर्णगतम्॥'

नीलमुदाहरति—जहा (यथा)—

सज्जिअ जोह विवड्ढिअकोह चलाउ धणू

पक्खरु वाह चमूणरणाह फुलन्ततणू।

पत्ति चलन्त करे धरि कुन्त सुखग्गकरा

कण्णणरेन्द सुसज्जि चलन्त चलन्ति धरा॥ २०५॥

[सज्जिता योधा विवर्धितक्रोधाश्चालयन्ति धनुः

संनद्धो वाहश्चमूनरनाथः स्फुरत्तनुः।

पत्तयश्चलन्ति करे धृत्वा कुन्तान्सुखड्गकराः

कर्णनरेन्द्रे सुसज्जीभूय चलति चलन्ति धराः॥]

कश्चित्कविः कर्णनरपतिप्रयाणमुपवर्णयति—विवर्धितक्रोधा योधाः सुभटाः सज्जिताः संनद्धाः सन्तः क्षिपन्ति धनुः। अथ च—वाहोऽपि पक्खरु सनद्ध इत्यर्थः। ततश्च स्फुरत्तनुर्वीररसावेशात्। एवं चमूनरनाथोऽपि चलितः। अनन्तरं च सुखड्गकराः करे कुन्तान्धृत्वा पत्तयोऽपि चलन्ति। एवं सुतरां सज्जीभूय कर्णनरेन्द्रे चलति सति धराः पर्वता अपि चलन्ति। पर्वतानां क्षोभोऽभूदिति भावः॥ यथा वा[णीभूषणे]—'सुन्दरि सुन्दररूपे बतिशालिनि किं कुरुषे मानिनि मानिनि काममिदं हृदय परुषे। हारिणि हारिणि ते हृदये निहितो दयितो भाविनि भाविनिवासिमनोऽस्य चिराय यतः॥' उद्दवणिका यथा—ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ, १६×४=६४॥ नीलो निवृत्तः॥

अथ चञ्चलाछन्दः—

दिज्जिआ सुपण्ण आइ एक्क तो पओहराइँ

हिण्णिरूअ पञ्च वेङ्कसव्वलो मणोहराइँ।

अन्त दिज्ज गन्धवण्ण अक्खराइ सोलहाइँ

चञ्चला विणिम्मिआ फणिन्दु एहु दुल्लहाइँ॥ २०६॥

[दीयते सुपर्ण आदावेकस्ततः पयोधर

एवंरूपाणि पञ्च वक्रसर्वलैर्मनोहरा।

---

१. 'प्रखरवाहवः' रवि०. टि० २. 'पफुल्लधणू (प्रफुल्लधनुषः)' रवि० टि०. ३. 'सुसज्जिअविन्द (सुसज्जितवृन्दे)' रवि०. ४. 'एणरूअ' रवि०. ५. 'वक्रशचला' इति तु पत्मार्थः. 'पञ्चचक्क सव्वलो मणोहराइं (पञ्च चक्रा सर्वलोकमनोहरा)' इति रवि०.

अन्ते देयो गन्धवर्णोऽक्षराणि षोडश

चञ्चला विनिर्मिता फणीन्द्रेणैतद्दुर्लभम् ॥]

भोः शिष्याः, यत्रादौ सुपर्णो रगणो लघुमध्यमो गणो दीयते । तो ततः—एकः पयोधरो जगणो गुरुमध्यमो गणः हिण्णिरूअ पञ्च एवंरूपाणि पञ्च सुपर्णपयोधरानन्तरं रगणजगणरगणास्त्रयोऽपि गणा देयाः । एवं (पञ्च) वक्रा गुरवः सर्वे, लो लघवश्च तैर्मनोहरेति चञ्चलाविशेषणम् । अन्ते गणपञ्चकान्ते गन्धो लघुर्वर्णो यत्र (दीयते) । पादे चाक्षराणि षोडश यस्याः सा फणीन्द्रेण चञ्चला विनिर्मिता । तदेतदतिदुर्लभं चञ्चलाभिधानं छन्दो विजानीतेति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'तूर्यतालपक्षिराजमेरुहारनायकेन चामरध्वजेन चापि वर्णिता सुपर्णकेन । वर्णितातिसुन्देरण पन्नगेन्द्रपिङ्गलेन चञ्चला चकोरचारुलोचने सुमङ्गलेन ॥' समानिकापदद्वयेन चञ्चलेति फलितोऽर्थः ॥ ग्रन्थान्तरे चित्रसङ्गमिति नामान्तरम् ॥ अतएव छन्दोमञ्जर्याम्—'चित्रसङ्गमीरितं समानिकापदद्वयं नु' इत्युक्तम् ॥

चञ्चलामुदाहरति—जहा (यथा)—

कण्णपत्थ हुक्कु लुक्कु सूर वाणसंहएण

घाव जाहु ताहु लागु अन्धआरसंचएण ।

एत्थ पत्थ सट्ठिवाणकण्णपूरिछट्टुएण

पेक्खि कण्ण कित्ति धण्ण वाण सव्व कट्टिएण ॥२०७॥

[कर्णपार्थौ रथयुक्तौ लीनः सूरो बाणसंघातेन

प्रहारो (क्षतं) यस्य कस्यापि लग्नोऽन्धकारसंचयेन ।

अत्र पार्थेन षष्टिर्बाणाः कर्णं पूरयित्वा त्यक्ताः

प्रेक्ष्य कर्णेन कीर्तिधन्येन बाणाः सर्वे कर्तिताः ॥]

कश्चित्कविः कर्णार्जुनयोर्युद्धमुपवर्णयति—उभावपि कर्णपार्थौ सङ्ग्रामभूमावेकदा ढुक्कु रथेन युक्तौ जातावित्यर्थः । अस्मिन्नवसरे सूर्यो दिनकरोऽपि बाणसंघातेन लुक्कु लीनः शरजालाच्छादितो भूदित्यर्थः । अत एवान्धकारसंचयेन शब्दवेधित्वात्तयोर्यस्य कस्यापि घावः प्रहारो लग्नः । एत्थ अत्र व्यतिकरेऽनयोर्मध्ये पार्थोऽर्जुनस्तेन कण्णपूरि आकर्णं पूरयित्वा षष्टिर्बाणास्त्यक्ताः । अन्तरा पततस्तान्बाणान्प्रेक्ष्य । प्राकृते पूर्वनिपातानियमात् । धन्या कीर्तिर्यस्यैवंविधेन कीर्त्या धन्यस्तेन वा, कर्णेन राधेयेन ते सर्वे बाणाः कर्तिताः खण्डशः कृता इत्यर्थः ॥ यथा वा[णीभूषणे]—'आलि याहि मञ्जुगुञ्जिताल्लिलालितेन भास्करात्मजाविराजितीरकाननेन । शोभितस्थलस्थितेन संगता यदूत्तमेन

१. 'मण्डिता' भूषणपुस्तकस्थपाठः.

माधवेन भाविनी तडिल्लतेव नीरदेन ॥' उद्दवणिका यथा—SIS, ISI, SIS, ISI, SIS, I, १६×४=६४ ॥ चञ्चला निवृत्ता ॥

अथ सर्वगुर्वात्मकं कलासंख्यवर्णकं प्रस्तारादिभूतं ब्रह्मरूपकं छन्दः—

जें लोआणं वट्टे बिम्बोट्ठे विज्जुट्ठे हंसट्ठाणे
सुज्जाणे णाऊ कण्ठट्ठाणे कण्णट्ठे सारट्ठाणे।
छन्दु ग्गाअन्तो कण्णा वुत्तो सव्वं सो सम्माणीओ
बह्माणो रूओ छन्दो एसो लोकाणं वक्खाणीओ ॥२०८॥

[यल्लोकानां वक्षसि बिम्बोष्ठे विद्युत्स्थाने हंसस्थाने
सूयाने ज्ञातं कण्ठस्थाने कर्णस्थाने सारस्थाने।
छन्दो गायता कर्णैर्वृत्तं सर्वं यत्संमानितं
ब्रह्मणो रूपं छन्द एतल्लोकानां व्याख्यातम् ॥]

भोः शिष्याः, जो यद्ब्रह्मरूपकं छन्दः अपरं ब्रह्मणो रूपमिव। वर्तते इति शेषः। ब्रह्मच्छन्दसोः साधर्म्यमाह—यच्छन्दः, ब्रह्म वा लोकानां वक्षसि बिम्बोष्ठे विद्युत्स्थाने दन्तेषु हंसस्थाने शिरसि सूयाने ब्रह्मरन्ध्रे महापद्मवने वा णाऊ ज्ञातम्। तथा च छन्द इत्युच्चार्यमाणः शब्दस्तत्तत्स्थानं गमयतीति सहृदयैकगम्योऽर्थः ॥ अथ च शब्दस्य ब्रह्मरूपत्वात्तत्प्रोक्तस्थाने ज्ञातं मननशीलैर्मुनिभिरिति। किंच—कण्ठट्ठाणे कण्ठस्थाने कर्णस्थाने च सारस्थाने जिह्वायां मूलाधारे वा छन्दो वृत्तमुद्गायता 'अष्टौ स्थानानि वर्णानामुरःकण्ठशिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च ॥' इति पाणिनिकृतशिक्षोक्तरीत्या कथयता पन्नगपतिना पिङ्गलेन संमानितमिदं छन्दो ब्रह्मरूपकनामकं कर्णैर्गुरुद्वयात्मकगणैर्यत्सर्वं वृत्तं निष्पन्नशरीरं तल्लोकानां व्याख्यातमिति ॥

ब्रह्मरूपकमुदाहरति—जहा (यथा)—

उम्मत्ता जोहा उट्ठेकोहा उप्पाडप्पी जुज्झन्ता
मेणक्का रम्भा णाहे दम्भा अप्पाअप्पी बुज्झन्ता।

१. 'जो (यत्) लोआणं (लोकानां) वट्टे (वर्तते) बिम्बुट्ठे (हे बिम्बोष्ठे) हंसाकारं सर्वगुरुत्वात्। गुरुरपि हंसाकारो वक्रो भवति। सुज्झ कृत्वा ज्ञातम्। नाथमर्थाच्छन्दसां यदुच्यते। कन्दुद्भावे कन्दरूपेणोत्थापितं कन्दनामकमप्येतादृशमेव भवति। कण्णट्ठे (अष्टभिः कर्णैर्लक्षितम्। अष्टाभिर्द्विगुरुगणैर्लक्षितमित्यर्थः। सारत्ताणे सारतरं श्रेष्ठतरम्। छन्दसि गीयते कन्तो कान्तं सुन्दरं वृत्तं छन्दः सर्वलोकैः संमानितम्। ब्रह्मरूपकं नाम ॥ अथ च—यो लोकानां वर्ततेऽविद्विष्टोऽविरुद्धः हे बिम्बाधरे हंसे स्थितः शुद्धो नाथः। कन्दं सृष्टिकारणकलापमुत्पादयन्। अष्टभिः कर्णैर्लक्षितः सारतरः छन्दो वेदान् गायन् कान्तवृत्तः सुन्दरव्यापारः सर्वैः संमानितः स ब्रह्मा रूपं काशयित्वा व्याख्याति ॥' रवि०.
२. 'उत्थाउत्थी (उत्थायोत्थाय)' रवि०.

धावन्ता सल्लाछिण्णाकण्ठा मत्थापिट्ठीसेक्खत्ता
संमग्गा भग्गा जाए अग्गा लुद्धा उद्धा हेरन्ता ॥२०९॥

[उन्मत्ता योधा उत्थितक्रोधा उपर्युपरि युध्यमाना
*मेनका रम्भा.....नाथे दम्भा.....अन्योन्यं बोध्यमानाः ।*
धावन्तः शल्यच्छिन्नकण्ठा मस्तकपृष्ठशेषा
समग्रा व्रजन्तो जायाग्रे लुब्धा ऊर्ध्वमेव पश्यन्तः ॥]

कश्चिद्बन्दी कस्यचिन्नृपतेर्युद्धमुपवर्णयति—उन्मत्ता वीररसाविष्टा उत्थितक्रोधा योधा उपर्युपर्यहमहमिकया युध्यमानाः सन्तो मेनकारम्भादिभिर्नाथवरणे सदम्भाभिरप्सरोभिः अप्पाअप्पी अन्योन्यं मयायं वरणीयः, त्वया चायमिति बोध्यमानाः शक्तिछिन्नकण्ठाः कबन्धा मस्तकं पृष्ठमेव शेषो येषामेवंविधा अपि वीरा धावन्त इतस्ततः समराजिरे व्रजन्तः समग्रा एकत्रीभूय जायाग्रे मेनकारम्भादीनामग्रे लुब्धास्तद्दर्शनेप्सवो विस्मिता ऊर्ध्वमेव पश्यन्तोऽवतस्थिर इति वाक्यशेषः ॥ उद्दवणिका यथा—SS, SS, SS, SS, SS, SS, SS, SS, १६×४=६४॥ ब्रह्मरूपकं निवृत्तम् ॥

अथ षोडशाक्षर एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते । तत्र प्रथममृषभगजविलसितं छन्दः—

भ्रत्रिनगैः स्वराङ्कमृषभगजविलसितम् ॥ २१० ॥

भ्रत्रिनगैर्भगणरगणनगणत्रयगुरुभिः सप्तनवविश्राममृषभगजविलसितं वृत्तमिति ॥

यथा—

'यो हरिरुच्चखान खरतरनखशिखरै-
र्दुर्जयदैत्यसिंहसुविकटहृदयतटम् ।
किंत्विह चित्रमेतदखिलमपहृतरतः
कंसनिदेशदृप्यदृषभगजविलसितम् ॥'

'गजतुरगविलसितम्' इति शंभावेनशैव नामान्तरमुक्तम् ॥ उद्दवणिका यथा—SII, SIS, III, III, III, S, १६×४=६४ ॥ ऋषभगजविलसितं निवृत्तम् ॥

अथ चकिताछन्दः—

भात्सभतनगैरष्टच्छेदे स्यादिह चकिता ॥ २११ ॥

इह षोडशाक्षरप्रस्तारे भात्सभतनगैः भगणसगणभगणतगणनगणगुरुभिः अष्टच्छेदेऽष्टमाक्षरजातविश्रामे चकिताख्यं छन्दो भवतीति ॥

1. 'वा मत्तासत्ताठिंते पम्प्रा (मत्तत्तगजमत्ता)' इति.

यथा—

'दुर्जयदनुजश्रेणीदुश्चेष्टाशतचकिता
यद्भुजपरिघत्राता याता साध्वसविगमम्।
दीव्यति दिविषन्माला स्वैरं नन्दनविपिने
गच्छत शरणं कृष्णं तं भीता भवरिपुतः॥'

उद्दवणिका यथा—SII, IIS, SSS, SSI, III, S, १६×४=६४॥ चकिता निवृत्ता॥

अथ मदनललिताछन्दः—

म्भौ नो म्नौ गो मदनललिता वेदैः षड्ऋतुभिः॥ २१२॥

यत्र म्भौ मगणभगणौ। अथ च नो नगणः, ततो म्नौ मगणनगणौ भवतः ततश्च गो गुरुर्भवति प्रथमं चतुर्भिः ततः षड्भिः पुनरपि षड्भिरेव विरतिर्यत्र तन्मदनललिता छन्दः॥

यथा—

'विभ्रष्टस्रग्गलितचिकुरा धौताधरपुटा
म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला।
राधास्थं मदनललितान्दोलालसवपुः
कंसाराते रतिरसमहो चक्रेऽतिचटुलम्॥'

उद्दवणिका यथा—SSS, SII, III, SSS, III, S, १६×४=६४॥ मदनललिता निवृत्ता॥

अथ वाणिनी छन्दः—

नजभजरैः सदा भवति वाणिनी गयुक्तैः॥ २१३॥

नगणजगणभगणजगणरगणैः गयुक्तैर्गुरुसहितैः पञ्चभिरेतैर्गणैर्वाणिनीछन्दः॥

यथा—

'स्फुरतु ममाननेऽद्य ननु वाणि नीतिरम्यं
तव चरणप्रसादपरिपाकतः कवित्वम्।
भवजलराशिपारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम्॥'

उद्दवणिका यथा—III, ISI, SII, ISI, SIS, S, १६×४=६४॥ वाणिनी निवृत्ता॥

अथ प्रवरललितं छन्दः—

यमौ नः स्रौ गश्च प्रवरललितं नाम वृत्तम्॥ २१४॥

यत्र यमौ यगणमगणौ। अथ च नगणः, ततः स्रौ सगणरगणौ भवतः, ततश्चेद्गुरुर्भवति तदा प्रवरललितं नाम वृत्तं भवति॥

यथा—

'भुजोत्क्षेपः शून्ये चलवलयझंकारयुक्तो
मुधापादन्यासप्रकटिततुलाकोटिनादः ।
सितं वक्त्रेऽकस्माद्दृशि पटुकटाक्षोर्मिलीला
हरौ जीयादीदृक्प्रवरललितं बल्लवीनाम् ॥'

उद्वणिका यथा—ISS, SSS, III, IIS, SIS, S, १६×४=६४ ॥ प्रवरललितं निवृत्तम् ॥

अथ गरुडरुतं छन्दः—

गरुडरुतं नजौ भजतगा यदा स्युस्तदा ॥ २१५ ॥

यदा नजौ नगणजगणौ भवतः, ततो भजतगाः भगणजगणतगणगुरवः स्युः, तदा गरुडरुतं नाम वृत्तं भवतीति ॥

यथा—

'अमरमयूरमानसमुदे पयोदध्वनि-
र्गरुडरुतं सुरारिभुजगेन्द्रसंत्रासने ।
धरणिभरावतारविधिडिण्डिमाडम्बरः
स जयति कंसरङ्गभुवि सिंहनादो हरेः ॥'

उद्वणिका यथा—III, ISI, SII, ISI, SSI, S, १६×४=६४ ॥ गरुडरुतं निवृत्तम् ॥

अथ प्रस्तारान्त्यभेदमचलधृतिवृत्तमभिधीयते—

द्विगुणितवसुलघुभिरचलधृतिरिति ॥ २१६ ॥

यत्र द्विगुणिता वसुलघवः षोडशापि वर्णा लघवोऽर्थाद्भवन्ति, तदचलधृतिरिति वृत्तं भवतीति छन्दस्तेन नगणपञ्चकेनेति फलितोऽर्थः ॥

यथा—

'तरणिदुहितृतटरचितरतमति-
रमरमुनिजनमुखविहितधृतिरिह ।
मुररिपुरभिनवजलधररुचितनु-
रचलधृतिरिदयति गुरुतिदहि रतु ॥'

उद्वणिका यथा—III, III, III, III, III, I, १६×४=६४ ॥ अचलधृतिर्निवृत्ता ॥
अत्रापि प्रस्तारगत्या षोडशाक्षरस्य पञ्चषष्टिसहस्राणि पञ्च शतानि षट्त्रिंशदुत्तराणि ६५५३६ भेदाः, तेषु कियन्तो भेदा लक्षिताः । शेषभेदास्तु प्रस्तारविधिना मतिमद्भिः प्रस्तार्य लक्षणीया इति दिक् ॥

अथ सप्तदशाक्षरप्रस्तारे पृथ्वीछन्दः—

पओहर मुह ट्ठिआ तह अ हत्थ एक्को दिआ
पुणो वि तह संठिआ तह अ गन्ध सज्जोकिआ ।
पलन्ति वलआजुआ विमलसद्द हारा उणो
चउक्कलअ वीसआ पुहविणाम छन्दो मुणो ॥ २१७ ॥

[पयोधरो मुखे स्थितस्ततश्च हस्त एको दत्तः
पुनरपि तथा संस्थितौ तथा च गन्धः सज्जीकृतः ।
पतति वलययुगं विमलशब्दो हारः पुनः
चतस्रः कलाश्च विंशतिः पृथिवीनाम छन्दो ज्ञेयम् ॥]

भोः शिष्याः, यत्र पयोधरो जगणो मुखे स्थित , तत एकः सगणः, पुनरपि तथैव *जगणसगणावेव तयोरग्रे स्थितावित्यर्थः । तथा च गन्धो लघुः सज्जीकृतः, ततो गुरुद्वयम्,* ततो विमलोऽतिविशदः शब्दोऽतिलघुर्भवति, ततो हारो गुरुः । पदे च चतस्रः कला' । अथ च विंशतिः कलाः सभूय चतुर्विंशतिः । यत्र वसुभिर्ग्रहैश्च जातविश्राम पृथ्वीनामक छन्दो भवतीति मुणउ ज्ञेयमित्यर्थ' । तथा च—जसद्वययगणलघुगुरुभिरष्टरन्ध्रकृतयतिः पृथिवीति फलितोऽर्थः। तदुक्तं छन्दोमञ्जर्याम्—'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'पयोधरयुता स्फुरत्कनकयुग्मताटङ्किनी सुवर्णरुचिकङ्कणा ललितभावसन्नूपुरा । सुगन्धरुचिरा लसच्छ्रवणरूपवत्कुण्डला भुजगपतिवर्णिता हरति हन्त पृथ्वी मनः ॥' कर्णपर्यायत्वाच्छ्रवणस्य गुरुद्वयात्मको गणो गृह्यते ॥

पृथ्वीमुदाहरति—जहा (यथा)—

झणज्झणिअभूसणं रणरणन्तकाञ्चीगुणं
सहासमुहपङ्कअं अगुरुधूमधूपुज्जलम् ।
जलन्तमणिदीविअं मअणकेलिलीलासरं
णिसासुहमणोहरं जुवइमन्दिरं रेहइ ॥ २१८ ॥

[झणिज्झणितभूषणं रणरणत्काञ्चीगुणं
सहासमुखपङ्कजमगुरुधूमधूपोज्ज्वलम् ।
ज्वलन्मणिदीपिकं मदनकेलिलीलासरो
निशासुखमनोहरं युवतिमन्दिरं राजते ॥]

---

१. 'कोल' रवि०.

कश्चित्कविः कस्याप्यगण्य[पुण्य]पुञ्जस्य विलासिनो मदनविनोदसदनमुपवर्णयति—युवतिसहितमेतादृशं मन्दिरं रेहइ शोभत इत्यर्थः । कीदृशम् । झणज्झणितमित्यनुकरणम् । तादृशं भूषणं यत्र । पुनः रणरणावित्यनुकृत्या तादृशः काञ्चीगुणो मेखलाकलापो यत्र तत्तथा । पुनः सहासं मुखपङ्कजं यत्र । पुनः मदनकेलिलीलासरः श्रमापहारकत्वात् । कंदर्पकेलिसरसीत्वेनोपन्यस्तामित्यजहल्लिङ्गत्वेन्ते सर इति व्याख्येयम् । पुनः निशासुखमनोहरं रजनीजनितालिङ्गननिधुवनान्तसुखजातालम्बनत्वेन परममनोहरमिति सहृदयवेद्यः पन्था इति ॥ यथा. वा[णीभूषणे]—'क्षताधरतटी घनश्वसितमङ्गरागव्ययो दृशोरपि च शोणिमा भवति कारणादन्यतः । इदं तव परप्रियानिभृतसंगमव्यञ्जकं मुखे यदिदमञ्जनं वहसि चार्धचन्द्रं गले ॥' उट्टवणिका यथा—।ऽ।, ।।ऽ, ।ऽ।, ।।ऽ, ।ऽऽ, ।, ऽ, १७×४=६८ ॥ पृथ्वी निवृत्ता ॥

अथ मालाधरच्छन्दः—

पढम दिअ विप्पआ तहवि भूअइ थप्पिआ
चरणगण तीअओ तह अ भूअइ दीअओ ।
चमरजुअअग्गला विमलगन्ध हारुज्जला
भणइ फणिणाहरा मुणहु छन्द मालाहरा ॥ २१९ ॥

[प्रथमं दीयते विप्रस्तथापि भूपतिः स्थाप्यते
चरणगणस्तृतीयस्तथा च भूपतिर्दीयते ।
चमरयुगाधिको विमलगन्धो हारोज्ज्वलो
भणति फणिव्याघ्रो जानीत छन्दो मालाधरम् ॥]

भोः शिष्याः, यत्र प्रथमं दीयते विप्रश्चतुर्लघ्वात्मको गणः, तथापि भूपतिर्जगणः स्थाप्यते, तत्रश्चरणो भगणस्तृतीयः, तथा भूपतिर्जगणो दीयते, तत्रश्चमरयुगेनाधिको विमलोऽतिसुन्दरो गन्धो लघुः, ततो हारो गुरुर्यत्र तत्फणिणाहरा फणिव्याघ्रः फणिश्रेष्ठः पिङ्गलो मालाधर इति छन्दो भणति जानीत तदिति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'द्विजवरगणान्वितो गजपतिः स्थितश्चैतान्तरतलपरिस्फुरत्तरकरकङ्कणेनान्वितः । गुरुपतिगुरुश्रिया परिगतः समन्तात्परो जयति भुवि वृत्तभूपतिरयं तु मालाधरः ॥'

मालाधरमुदाहरति—जहा (यथा)—

वहइ मलआणिला विरहिचेउसंतावणा
रेलइ पिक पञ्चमा त्रिभमु केसुफुला वणा ।

१. 'फनिसादरा (फनिमाहर)' रवि०. २. 'दाइ (रेलिद)' रवि०.

तरुण तरुपल्लवा महुर माहवीवल्लिआ
  वितर सहि णेत्तआ समअमाहवा पत्तआ ॥ २२० ॥

[वहति मलयानिलो विरहिचेतःसंतापनः
  कूजति पिकः पञ्चमं विकसितं फुल्लकिंशुकं वनम् ।
तरुणास्तरुपल्लवा मधुरा माधवीवल्लिका
  वितर सखि नेत्रं माधवसमयः प्राप्तः ॥]

काचिद्दूती कान्तानुनयमनुगृह्णती नायिकामाह—मलयानिलो दक्षिणानिलो वहति। कीदृशः। विरहिणां चेतः संतापयन्ति तादृशः संतापनः। किंच पिकोऽपि पञ्चमं कूजति। प्राकृते पूर्वनिपातानियमात्। फुल्लकिंशुक वनं विकसितं नवपलाशं वनमपि विकसितम्। तरूणां पल्लवा अपि तरुणा नवीना जाताः। माधवी वासन्ती मल्लिका, मधुरातिमनोहराभूत्। अतो हे सखि, नेत्रं वितर, अस्मिन्प्राणनाथे यतो माधवसमयोऽयं प्राप्त इति॥ यथा वा[णीभूषणे]—'क्वचिदपि वयस्यया सह विनोदमातन्वती कतिपयकथारसैर्नयति वासरीयां रुजम्। सुभग तव कामिनी समधिगम्य सा यामिनीमनुभवति यामिनीं मदनवेदनामन्ततः॥' उद्दवणिका यथा—।।।।, ।ऽ।, ऽ।।, ।ऽ।, ऽऽ, ।ऽ, १७×४=६८॥ मालाधरो निवृत्तः॥

अथ सप्तदशाक्षरप्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते। तत्र प्रथमं शिखरिणी छन्दः—[वाणीभूषणे]—

'ध्वजः कर्णो हारी द्विजवरगणस्थो रसयुतः
  समुद्रो रत्नं च प्रभवति यदा सप्तदशभिः।
भुजंगेन्द्रोद्दिष्टा विबुधहृदयाह्लादजननी
  रसै रुद्रैर्यस्या विरतिरिह सैषा शिखरिणी ॥'

यगणमगणनगणसगणभगणलघुगुरुमी रसै रुद्रैश्च कृतयतिः शिखरिणीति फलितोऽर्थः॥ तदुक्तं छन्दोमञ्जर्याम्—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति॥

यथा—

'निविष्टायाः कोपाद्बुरुसदसि पङ्केरुहदृशः
  पदोपान्ते छायामुपनयति मूर्ध्नः प्रणयिनि।
तया चक्षुर्लीलाकमलरजसा दूषितमिति
  द्रुतं मुक्ता मुक्ताफलपरिणता बाष्पकणिकाः ॥'

---

१. 'पत्तिआ' टि०. २. 'मउल (मुकुलिता)' टि०.

यथा वा—

'करादस्य भ्रष्टे ननु शिखरिणी दृश्यति शिशो-

विलीनाः स्मः सर्वं नियतमवधेयं तदखिलैः ।

इति त्रस्योद्गोपानुचितनिभृतालापजनितं

स्मितं बिभ्रद्देवो जगदवतु गोवर्धनधरः ॥'

उद्दवणिका यथा—ISS, SSS, III, IIS, SII, I, S, १७×४=६८ ॥ शिखरिणी निवृत्ता ॥

अथ मन्दाक्रान्ता छन्दः—

'मन्दाक्रान्ता हरति हृदयं कर्णताटङ्कयुग्मा

प्रोद्यद्भावा करतललसत्कङ्कणा शङ्खयुक्ता ।

हारोत्कृष्टा ललितवलया राववन्नूपुराभ्यां

विभ्राजन्ती सकलहृदयाह्लादिनी कामिनीव ॥'

कामिनीपक्षे स्पष्टोऽर्थः ॥ छन्दोमञ्जर्यां तु गणभेदेनोक्तम्—'मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ गौ ययुग्मम् ।' यत्र मो मगणः, ततो भनौ भगणनगणौ भवतः, ततो गौ गुरुद्वयं ययुग्मं यगणद्वयं च यत्र भवति, अम्बुधयश्चत्वारः, रसाः षट्, नगाः सप्त, एतेषु च विश्रामो यस्यां सा मन्दाक्रान्ता तन्नामकं वृत्तमिति ॥

यथा—

'कर्णाभ्यर्णे हितमवहिता वर्णयन्तस्थिरेण

द्रागस्यन्तो हृदि कलुषितामानने शोणिमानम् ।

यान्तो भूमिं नयनपयसां बिन्दवो मानवत्याः

पादाम्भोजप्रणतमधुना कान्तमुत्थापयन्ती ॥'

उद्दवणिका यथा—SS, SS, III, IIS, S, I, S, S, I, S, S, १७×४=६८॥ मन्दाक्रान्ता निवृत्ता ॥

अथ हरिणी छन्दः—

द्विजवरमुखी भास्वद्रूपा सकुण्डलकर्णिका

ललितवलया हारोत्कृष्टा पयोधरभूषिता ।

कनकरसनारावैर्युक्ता लसद्वरनूपुरा

हरति हरिणी केषां चित्तं न योषिदिवामुना ॥ २२१ ॥

योषापक्षेऽर्थः स्पष्टः ॥ छन्दोमञ्जर्यां गणभेदेनोक्तम्—'नसमरसलैर्गैः षड्वेदैर्हयैर्हरिणी मता' । नगणसगणमगणरगणसगणलघुगुरुभिः षड्भिर्वेदैश्चतुर्भिर्हयैः सप्तभिर्जातविश्रामा हरिणी तन्नामकं वृत्तमित्यर्थः ॥

यथा—

'सुरभिरजनी याता भूयः कृशो भविता शशी
परभृतयुवा मूको भावी विरंस्यति पञ्चमः ।
कुसुमविशिखः संहर्ता स्वं धनुः पतिरेष्यति
प्रियसखि परावृत्तं न स्याद्गतं मम जीवितम् ॥'

उद्दवणिका यथा—IIII, IS, S, SS, S, ISI, I, SII.

यथा वा—

'व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणा-
द्व्रजमृगदृशां संदोहस्योल्लसन्नयनश्रियम् ।
यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे
व्यकिरदधिकं बद्धाकाङ्क्षो विलोलविलोचनम् ॥'

यथा वा—'अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे' इत्यादि रघौ ॥ हरिणी निवृत्ता ॥

अथ वंशपत्रपतितं छन्दः—

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ २२२ ॥

यत्र दिक्षु दशसु मुनिषु सप्तसु च विश्रामः, तथा भरनभनलगैः भगणरगणनगणभगणनगणलघुगुरुभिर्वंशपत्रपतिताख्यं छन्दो भवति ॥

यथा—

'नूतनवंशपत्रपतितं रजनिजललवं
पश्य मुकुन्द मौक्तिकमिवोज्ज्वलमस्कलयम् ।
एष च तं चकोरनिकरः प्रपिबति मुदितो
वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव ॥'

'संप्रति लब्धजन्मशनकैः कथमपि लघुनि' इति भारवौ ॥ वंशपत्रपतितेति केचित् । वंशदलमिति शंभौ नामान्तरमुक्तमिति ॥ उद्दवणिका यथा—SII, SIS, III, SII, III, I, S, १७×४=६८ ॥ वंशपत्रपतितं निवृत्तम् ॥

अथ नर्दटकं छन्दः—

यदि भवतो नजौ भजजला गुरु नर्दटकम् ॥ २२३ ॥

यदि प्रथमं नजौ नगणजगणौ भवतः, ततो भगणजगणजगणलघवः, अथ च गुरुर्भवति यत्र तन्नर्दटकं छन्दः ॥

यथा—

'व्रजवनितावसन्तलतिकाविलसन्मधुपं
मधुमथनं प्रणम्रजनवाञ्छितकल्पतरुम् ।
विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा
रुचिरपदावलीघटितनर्दटकेन कविः ॥'

उद्दवणिका यथा—III, ISI, SII, ISI, ISI, I, S, १७×४=६८॥ यथा वा भागवते दशमस्कन्धे—'जय जय जह्यजामजितदोषगृभीतगुणाम्' इत्यादि ॥ नर्दटकं निवृत्तम् ॥

अथ कोकिलकं छन्दः—

हयऋतुसागरैर्यतियुतं वद कोकिलकम् ॥ २२४ ॥

हयाः सप्त, ऋतवः षट्, सागराश्चत्वारः, तैर्विरतियुक्तमिदमेव कोकिलकमिति श्रुतं वदेति । अत्र च विश्रामकृतो भेदः, गणास्त एवेति विवेकः ॥

यथा—

'लसदरुणेक्षणं मधुरभाषणमोदकरं
मधुसमयागमे सरसि केलिभिरुल्लसितम् ।
अतिललितद्युतिं रविसुतावनकोकिलकं
ननु कलयामि तं सखि सदा हृदि नन्दसुतम् ॥'

उद्दवणिका सैव, यतिकृत एव भेदः ॥ कोकिलकं निवृत्तम् ॥

अथ हारिणी छन्दः—

वेदर्त्वश्वैर्यमनभयला गश्चेत्तदा हारिणी ॥ २२५ ॥

यदि प्रथमं वेदैः, ततः ऋतुभिः, ततस्तुरगैर्विरतिः, अथ च—यमनभयला य-गणमगणनगणभगणयगणलघवः, तदन्ते गुरुर्भवति, तदा हारिणी छन्दो भवतीति ॥

यथा—

'यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने
रागः शीलेऽधरकिसलये [illegible] ।

गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छदा

सा कंसारेरजनि न कथं राधा मनोहारिणी ॥'

उद्दवणिका यथा—SSS, SII, III, SSS, IIS, I, S, १७×४=६८॥ हारिणी निवृत्ता॥

अथ भाराक्रान्ता छन्दः—

भाराक्रान्ता मभनरसला गुरुः श्रुतिषड्हयैः ॥ २२६ ॥

यत्र मगणभगणनगणरगणसगणलघवः, अथ च गुरुर्यत्र, श्रुतिषड्हयैर्विरतिश्च यत्र तद्भाराक्रान्ताच्छन्दः ॥

यथा—

'भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणा-

त्कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति ।

इत्थं शृण्वन्नयति जलदस्वनाकुलवल्लवी

संश्लेषोत्थं स्मरविलसितं गुरुं विलोक्य हरिः ॥'

उद्दवणिका यथा—SSS, SII, III, SSS, SII, I, S, १७×४=६८॥ भाराक्रान्ता निवृत्ता ॥

अत्रापि प्रस्तारगत्या सप्तदशाक्षरस्यैकं लक्षमेकत्रिंशत्सहस्राणि द्विसप्ततिश्च १३१०७२ भेदाः । तेषु कियन्तो भेदा उक्ताः शेषभेदाः सुधीभिः प्रस्तारक्रमादुदाहर्तव्याः । इत्यलमतिविस्तरेण ॥

अथाष्टादशाक्षरप्रस्तारे मञ्जीराछन्दः—

कुन्तीपुत्ता तिण्णा दिण्णउ मन्था संठवि एक्का पाए

हारा हत्था दुण्णा कङ्कणु गन्धा संठवि जुग्गा जाए ।

चारी हारा भव्वाकाराउ पाआअन्तहि सज्जीआए

सप्पाराआ सुद्धाकाअउ जम्पे पिङ्गल मञ्जीरा ए ॥ २२७ ॥

[कुन्तीपुत्रास्त्रयो दीयन्ते मस्तके संस्थाप्यैकं पादे

हारं हस्तं द्विगुणः कङ्कणो गन्धे युग्मं संस्थाप्यते यत्र ।

चत्वारो हारा भव्याकाराः पादान्ते सज्जीकृताः

सर्पराजः शुद्धकायो जल्पति पिङ्गलो मञ्जीरैतत् ॥

भोः शिष्याः, यत्र मन्था मस्तके । आदावित्यर्थः । तत्र त्रयः कुन्तीपुत्राः कर्णा गुरुद्वयात्मका गणा दीयन्त इत्यर्थः । ततः पादे एकं हारं गुरुं ततो हस्तः सगणः, तदन्ते दुण्णा कङ्कणु द्विगुणः कङ्कणो गुरुद्वयम्, ततो गन्धयुग्मं लघुद्वयं संस्थाप्यते, यत्र पादान्ते भव्याकाराश्चत्वारो हारा गुरवः सज्जीकृताः प्राप्ता यत्र, एतन्मञ्जीरानामकं छन्दः शु-

दत्वाय: सर्पराजः पिङ्गलो जल्पतीति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'आदौ कृत्वा कर्णं कुण्डलयुक्तं हारयुगं दत्वाथो कुर्याताटङ्कं पादं कुरु सन्मञ्जीरयुगाभ्यां युक्तम्। कृत्वा तात कुन्तीपुत्रसमेतं वै गुरुयुग्मं दत्वा मञ्जीरा सा नागाधीशनिदिष्टा राजति सैषा वक्त्रे ॥

मञ्जीरामुदाहरति—जहा (यथा)—

गज्जे मेहा णीलाकारउ सद्दे मोरउ उच्चारावा
टामा टामा विज्जू रेहउ पिङ्गा देहउ किज्जे हारा।
फुल्ला णीवा बोल्ले भम्मरु दक्खा मारुअ वीअन्ताए
हल्ले हल्ले काहे किज्जउ आरू पाउस कीलं ताए ॥ २२८ ॥

[गर्जन्ति मेघा नीलाकाराः शब्दायन्ते मयूरा उच्चारावाः
स्थाने स्थाने विद्युद्राजते पिङ्गदेहा क्रियन्ते हाराः।
फुल्ला नीपा गुञ्जन्ति भ्रमरा दक्षो मारुतो वाति
हल्ले हल्ले किं क्रियते आगता प्रावृट् क्रीड तावत् ॥]

काचित्प्रोषितपतिकां सखीमाह—हे सखि, नीलाकारा मेघा गर्जन्ति। उच्चारावा मयूराः शब्दं कुर्वन्ति अतिदीर्घा केकामुच्चारयन्तीत्यर्थः। स्थाने स्थाने पिङ्गदेहा विद्युद्राजते। हाराः स्रजः क्रियन्ते। यतः नीपाः कदम्बाः फुल्लाः। भ्रमरा मधुकरास्तेष्वेव गुञ्जन्ति। किंच दक्षो मारुतो वाति। अतो हंहे हल्ले नीचे कथं क्रियते आगता प्रावृट् कान्तो नागतः, अतः क्रीड तावत्। मनोभिलषितालिङ्गननिधुवनादिकं यथा भवति तथाभिसारयाग्मिन्नवसरे कंचन युवानमिति भावः॥ यथा वा[णीभूषणे]—'प्रोद्यद्ध्वान्ते गर्जद्वारिदधाराधारिणि काले गत्वा त्वरया प्राणानग्रे कंलिममाचारानपि हित्वा यन्ती। दृत्वा मारकाक्षी साहसमुरीः केलिनिकुञ्जं शून्यं दृष्ट्वा प्राणत्राणं भाति कथं वा नाथ वद प्रेयस्याः॥' उद्दवनिका यथा—
SS, SS, SS, S, ||S, S, S, I, I, S, S, S, S, १८×४=७२ ॥ मञ्जीरा निवृत्ता ॥

अथ कीलाचन्द्रछन्दः—

ज इन्दासणा एक गण्णा सु होइ पाए हि पाए
देहा अट्ठ गण्णा सुहावेइ दण्डा सुठाए सुठाए।
दहा तिण्णिगुण्णा जहा सव्वन्ना होइ मत्ता सुठाए
फणिन्दा भणन्ता किलाचन्द छन्दा णिपट्ठाइ जाए ॥२२९॥

---

१. 'विज्जुरेहा' सी०. २. 'दिज्जे(दिज्जि)' सी०. ३. 'वीअन्ताए(वीअन्ते)' सी०.
४. 'हल्ला हल्ला हा कीरइ (हल्लइ हल्लइ काहे किज्जउ)' सी०.

[यत्रेन्द्रासनमेको गणः स भवति पादे पादे
दशाष्टवर्णाः सुखयन्ति दण्डाः स्थाने स्थाने ।
दश त्रिगुणिता यत्र सर्वा भवन्ति मात्राः सुपादे
फणीन्द्रो भणति क्रीडाचन्द्रछन्दो निबद्धं यत् ॥]

भोः शिष्याः, यत्रेन्द्रासनमादिलघुः पञ्चकलो गणोऽर्थाद्यगणः स एवैकः पादे पादे भवति षड्भिर्यगणैः पाद इत्यर्थः । पादे चाष्टादश वर्णाः सुखयन्ति । दण्डा लघवः स्थाने स्थाने भवन्ति । यत्र मात्राश्च दश त्रिगुणितास्त्रिंशत् पदे भवन्ति तन्मात्राभिर्निबद्धं क्रीडाचन्द्र इति छन्दः फणीन्द्रः पिङ्गलो भणतीति वित्त ॥ भूषणे तु प्रकारान्तरेणोक्तम्—'ध्वजं चामरं गन्धकर्णौ रसः कुण्डलं तोमरं च तथा तालताटङ्कतूर्याणि शेषे गुरुद्वन्द्वमत्र । सदा क्रीडया चिह्नितं चन्द्रमेतद्भुजंगाधिराजः कविश्रेणिविस्मापकं सर्वलोकप्रियं स जगाद ॥'

क्रीडाचन्द्रमुदाहरति—जहा (यथा)—

जहाँ भूत वेताल णच्चन्त गावन्त खाए कबन्धा
सिआफारफेक्काररहक्का चलन्ती फुले कण्णरन्धा ।
कआ दुट्ट फुट्टेइ मन्था कबन्धा णचन्ता हसन्ता
तहाँ वीर हम्मीर संगाममज्ज तुलन्ता जुलन्ता ॥ २३० ॥

[यत्र भूता वेताला नृत्यन्ति गायन्ति खादन्ति कबन्धा-
ञ्शिवास्फारफेत्कारशब्दाश्चलन्ति स्फुटन्ति कर्णरन्ध्राणि ।
कायस्त्रुट्यति स्फुटति मस्तकं कबन्धा नृत्यन्ति हसन्ति
तत्र वीरहम्मीरः संग्राममध्ये त्वरितं युक्तः ॥]

कश्चित्कविर्वीरहम्मीरस्य भीषणसमराङ्गणप्रयाणमनुवर्णयति—यत्र समरसीमनि भूता वेतालाश्च नृत्यन्ति गायन्ति खादन्ति च कबन्धानपमूर्धकलेवरान् महावीरान् । यत्र च शिवानां फेरवाणां स्फारा अतिदीर्घाः फेक्काररहक्काः फेत्कारशब्दाश्चलन्ति प्रसरन्ति । अत एव कर्णरन्ध्राणि स्फुटन्ति । किंच कायस्त्रुट्यति, मन्था मस्तकं स्फुटति, कबन्धाः शिरोरहिता वीरा नृत्यन्ति हसन्ति च । यत्र सहस्रवीरघातिनः सहस्रं वीरा यदा म्रियन्ते तदैकः कबन्ध उत्तिष्ठत इति प्रसिद्धिः । अत्र तु कबन्धा नृत्यन्तीति बहुवचनमहिम्ना स्फुटमेवातिभीषणत्वं समराङ्गणस्येति भावः । तहाँ तादृशातिभयजनकरणभूमौ वीरहम्मीरः संग्राममध्ये त्वरितं युक्तः प्रविष्ट इत्यर्थः ॥ उद्दवणिका यथा— ISS, ISS, ISS, ISS, ISS, ISS, १८×४=७२॥ क्रीडाचन्द्रो निवृत्तः ॥

---

१. 'खाइन्ता' ख॰. २. 'जुझन्ति' ख॰.

अथ चर्चरी छन्दः—

आइ रग्गण हत्थ काहल ताल दिज्जहु मज्जआ
सद्द हार पलन्त विण्णवि सव्वलोअविबुज्झिआ ।
वे वि काहल हार पूरहु सङ्ख कङ्कण सोहणा
णाअराअ भणन्त सुन्दरि चचरी मणमोहणा ॥ २३१ ॥

[आदौ रगणो हस्तः काहलस्तालो दातव्यो मध्ये
शब्दो हारः पततो द्वावेव सर्वलोकविबुद्धाम् ।
द्वावेव काहलौ हारं पूरय शङ्खः कङ्कणः शोभनः
नागराजो भणति सुन्दरि चर्चरीं मनोमोहनाम् ॥]

हे सुन्दरि, यत्रादौ रगणो मध्यलघुको गणो भवति, ततो हस्तः सगणः, ततः काहलो लघुः, ततस्ताल आदिगुरुस्त्रिकलो मध्ये दातव्यः, तदनन्तर शब्दो लघुः, ततो हारो गुरुः, ततो विण्णवि द्वावेव शब्दहारौ पततः, ततो वे वि द्वावेव काहलौ लघू, ततो हारं गुरुं पूरय । तदनन्तरं शङ्खो लघुः, ततः शोभनः कङ्कणो गुरुरेव यत्र तत्सर्वलोकविबुद्धां समस्तच्छान्दसिकप्रसिद्धां मनोमोहना श्रुतिसुखत्वाचर्चरीनामकं छन्दो नागराजः पिङ्गलो भणतीति विद्धि ॥ भूषणे तु प्रकारान्तरेणोक्तम्—'हारयुक्तसुवर्णकुण्डलपाणिशङ्खविराजिता पादनूपुरसंगता सुपयोधरद्वयभूषिता । शोभिता वलयेन पन्नगराजपिङ्गलवर्णिता चर्चरी तरुणीव चेतसि चाकसीति सुभगता ॥' तरुणीपक्षेऽर्थः स्पष्टः ॥

चर्चरीमुदाहरति—जहा (यथा)—

पाअ णेउर झंझणक्कइ हंससद्दसुसोहणा
थोलथोलणग्ग णचइ मोत्तिदाम मणोहरा ।
वामदाहिण धाण धावइ तिक्खचक्खुकडक्खआ
काहि पूरिस गेहमण्डणि एह सुन्दरि पेक्खआ ॥ २३२ ॥

[पादे नूपुरं झणझणायते हंसशब्दसुशोभनं
स्तोकस्तोकस्तनाग्रे नृत्यति मौक्तिकदाम मनोहरम् ।
वामदक्षिणयोर्बाण (इव) धावति तीक्ष्णचक्षुःकटाक्षः
कस्य पुरुषस्य गृहमण्डन्येषा सुन्दरी प्रेक्षस्व ॥]

कविरुक्तिः परमरमणीयां कामपि कामिनीमनुवर्णयति—यस्याः पादे नूपुरं झणझणा-

1. 'थोलथोलणग्ग (स्तोकस्तोकस्तनाग्रे)' टी०. 2. 'धाहि (धावति)' टी०. 3. 'प्रेक्षिता' टी०.

यते। कीदृशम्। हृसशब्दवत्सुशोभनम्। यस्याश्चैत्तस्याः स्तोकस्तोकयोरभिनवोदितयोः स्तनयोरग्रे मनोहरं मुक्तादाम नृत्यति। अपि च वामदक्षिणयोः पार्श्वयोर्बाण इव धावति तीक्ष्णश्लक्ष्णकटाक्षो यस्याः सेयमेवंविधा सुन्दरी कस्य सुकृतिनः पुरुषस्य गेहं मण्डयतीति तादृशीति प्रेक्षस्व तावदिति तद्रूपमुपवर्णयन्त वयस्यं प्रति कस्यचिद्वचनमिति॥ यथा वा[णीभूषणे]—'कोकिलकलकूजितं न शृणोषि सप्रति सादरं मन्यसे तिमिरापहारिसुधाकरं न सुधाकरम्। दूरमुज्झसि भूषणं विकलासि चन्दनमारुते कस्य पुण्यफलेन सुन्दरि मन्दिरं न सुखायते॥' उद्दवणिका यथा—SIS, IIS, I, SI, I, S, I, S, II, S, I, S, १८×४=७२॥ यथा वा मार्कण्डेयभाषितचन्द्रशेखराष्टके—'रत्नसानुशरासनं रजताद्रिशृङ्गनिकेतनं शिञ्जिनीकृतपन्नगेश्वरमच्युतानलसायकम्। क्षिप्रदग्धपुरत्रयं त्रिदशालयै(?)रभिवन्दितं चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः॥' चर्चरी निवृत्ता॥

अथाष्टादशाक्षरप्रस्तारे एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते। तत्र प्रथमं कुसुमितलतावेल्लिताछन्दः—

स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ॥ २३३॥

यत्र भूतैः पञ्चभिः, ऋतुभिः षड्भिः, अश्वैः सप्तभिश्च विश्रामो भवति। अथ च म्तौ मगणतगणौ, अथ च नयौ नगणयगणौ, अनन्तरं यौ केवलौ यगणावेव भवतः। षड्भिर्गणैरष्टादश वर्णाः पदे पतन्ति यत्र तत्कुसुमितलतावेल्लितानामकं छन्दो भवतीति॥

यथा—

क्रीडत्कालिन्दीललितलहरीवाहिभिर्दाक्षिणात्यै-
र्वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम्।
भृङ्गालीगीतैः किसलयकरोल्लासितैर्लास्यलक्ष्मीं
तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार॥

उद्दवणिका यथा—SSS, SSI, III, ISS, ISS, ISS, १८×४=७२॥ यथा वा—'गौडं पिष्टाम्रं दधि सहशरं निर्जलं मद्यमम्लम्' इत्यादि वाग्भटचिकित्साग्रन्थे॥ कुसुमितलतावेल्लिता निवृत्ता॥

अथ नन्दनछन्दः—

नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम्॥ २३४॥

यत्र नगणजगणभगणजगणरगणैः रेफेण रगणेन सहितैरेतैः षड्भिर्गणैः, अथ च शिवैः एकादशभिः, ततो हयैः सप्तभिः, विश्रामो यत्र तन्नन्दनमिति छन्दो भवतीति॥

यथा—

तरणिसुतातरङ्गपवनैः सलीलमान्दोलित
मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम्।

मुरहरचित्रचेष्टितकलाकलापसंस्मारकं

क्षितितलनन्दनं व्रज सखे सुखाय वृन्दावनम् ॥

उट्टवणिका यथा—।।।, ।ऽ।, ऽ।।, ।ऽ।, ऽ।ऽ, ऽ।ऽ, १८×४=७२॥ यथा वा—'अकृत धनेश्वरस्य युधि यः समेतमायोधनम्' इति भट्टिकाव्ये ॥ नन्दनं निवृत्तम् ॥

अथ नाराचछन्दः—

इह ननरचतुष्कसृष्टं तु नाराचमाचक्षते ॥ २३५॥

भोः शिष्याः, इहाष्टादशाक्षरप्रस्तारे नान्तगणद्वयरगणचतुष्टयाभ्यां सृष्टम्, अथ च दिनकररसविश्राम छान्दसीया नाराचमित्याचक्षते ॥ षोडशाक्षरप्रस्तारे नराचः, अत्र तु नाराचः, इत्यनयोर्भेदः ॥

यथा—

दिनकरतनयातटीकानने चारुसंचारिणी

श्रवणनिकटकृष्टमेणेक्षणा कृष्ण राधा त्वयि ।

ननु विकिरति नेत्रनाराचमेषातिहृच्छेदनं

तदिह मदनविभ्रमोद्भ्रान्तचित्तां विधत्स्व द्रुतम् ॥

उट्टवणिका यथा—।।।, ।।।, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, १८×४=७२ ॥ यथा वा—'रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियाम्' इत्यादि रघौ ॥ नाराचो निवृत्तः ॥

अथ चित्रलेखाछन्दः—

मन्दाक्रान्ता ययुगलजठरा कीर्तिता चित्रलेखा ॥ २३६ ॥

भोः शिष्याः, सप्तदशाक्षरप्रस्तारे सम(न)न्तर्गतमन्दाक्रान्ताछन्दसि यत्र यगणयुगले अर्थाद् गुरुद्वयस्थाने । (यस्या) एवंविध जठरं यस्याः । तथा च गुरुद्वयस्याद्यावेको लघुरधिको दातव्यः । तेन ययुगलजठरा अन्तःस्थितयगणा चेत्स्यात् तदा सैव चित्रलेखा कीर्तिता । एवं च—मगणभगणनगणयगणत्रयैरम्बुधि(४)हय(७)मुनि(७)भिर्विरचितविरतिश्चित्रलेखेति फलितोऽर्थः ॥

यथा—

शङ्केऽमुष्मिञ्जगति मृगदृशां सारभूतं यदासी-

दाकृष्येदं व्रजयुवतिसमा वेधसा सा व्यधायि ।

नैतादृक्चेत्कथमुदधिसुतामन्तरेणाच्युतस्य

प्रीतं तस्या नयनयुगमभूच्चित्रलेखाद्भुतायाम् ॥

उट्टवणिका यथा—ऽऽऽ, ऽ।।, ।।।, ।ऽऽ, ।ऽऽ, ।ऽऽ, १८×४=७२ ॥ चित्रलेखा निवृत्ता ॥

अथ शार्दूलललितं छन्दः—

म: सो जः सतसा दिनेशऋतुभिः शार्दूलललितम् ॥ २३७ ॥

भोः शिष्याः, यत्र प्रथमं मगणः, ततः सगणः, ततो जगणः, ततः सतसाः सगणतगणसगणा भवन्ति। दिनेशैर्द्वादशभिः, ऋतुभिः षड्भिश्च विरतिर्यत्र तच्छार्दूलललितं छन्दो भवतीति ॥

यथा—

कृत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं
यश्चक्रे क्षितिभारकारिषु सुरारातिष्वतिदरम्।
संतोषं परमं च देवनिवहे त्रैलोक्यशरणं
श्रेयो नः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः ॥

उद्दवणिका यथा—SSS, ॥S, ISI, ॥S, SSI, ॥S, १८×४=७२ ॥ शार्दूलललितं निवृत्तम् ॥ अत्रापि प्रस्तारगत्याष्टादशाक्षरस्य लक्षद्वयं द्वाषष्टिसहस्राणि चतुश्चत्वारिंशदुत्तरं च शतं २६२१४४ भेदाः। तेषु कियन्तो भेदाः प्रोक्ताः। शेषभेदा विशालबुद्धिभिराकरात्स्वमत्या वा प्रस्तार्य स्वयमूहनीया इत्यलं पल्लवेन ॥

अथैकोनविंशत्यक्षरप्रस्तारे शार्दूलविक्रीडितं छन्दः—

मो सो जो स त तो समन्तगुरवो एगूणविंसा वणा
पिण्डोअं सउ वीस मत्त भणिअं अट्ठासि जोणी पुणो।
जं छेहत्तरि वण्णओ चउपओ वत्तीस रेहे मुणो
चौआलीसह हार पिङ्गलकई सद्दूलसद्दा मुणो ॥ २३८ ॥

[मः सो जः सस्तस्तः समन्तगुरव एकोनविंशतिर्वर्णाः
पिण्डीघः(?)शतं विंशतिर्मात्रा भणितेरष्टाशीतिर्योनिः पुनः।
यत्र पट्सप्ततिर्वर्णाश्चतुःपदो द्वात्रिंशद्रेखाः पुनः
चतुश्चत्वारिंशद्धारा पिङ्गलकविः शार्दूलसाटकं जानीत ॥]

भोः शिष्याः, यत्र प्रथमं मो मगणः, ततः सो सगणः, ततो जो जगणः, ततोऽपि सगण एव, अनन्तरं तगणः, ततः तो तगणः, समन्तगुरवो सम्यगन्ते गुरवो येषामेवं षड्गणा यत्र। अत एवैकोनविंशतिर्वर्णाः पदे यत्र, यत्र च चतुर्गुणितैकोनविंशतिवर्णाश्चतुःपदे षट्सप्ततिः पतन्ति। किं च पदे एकादश गुरवः, अष्टौ लघवः, पदचतुष्टये चतुश्चत्वारिंशद्गुरवो द्वात्रिंशल्लघवः, एतस्य छन्दसः पदचतुष्टयस्य मात्रापिण्डसंख्या विंशत्युत्तरशतमात्राभिर्मिता भणिता। एतदुक्तं भवति—चतुश्चत्वारिंशद्गुरूणां द्विगुणाभिर्मात्राभिरष्टाशीति-

मीनाणां यत्र निष्पन्ना द्वात्रिंशच्च लघवो विद्यन्त एव, संभूयैक(वं)विंशत्युत्तरशतमात्रात्मकम् अर्क(१२)मुनि(७)विश्राममिदं शार्दूलविक्रीडितमिति साटकं पिङ्गलकविर्जल्पति तत् गुणो जानीत इत्यर्थः ॥ अथ चैकस्मिंश्चरणे एकादशगुरूणां द्विगुणाभिप्रायेण द्वाविंशतिः कलाः, लघवश्चाष्टौ, इति संभूय त्रिंशत्कलाः, तच्चतुष्केणापि प्रोक्तैव कलापिण्डसंख्या भवतीति यथा—३०+३०+३०+३०=१२० ॥ तथा च छन्दोमञ्जर्याम्—'अर्काश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' इत्युक्तम् ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'कर्णः कुण्डलसंगतः करतलं चामीकरेणान्वितं पादान्तो रवनूपुरेण कलितो हारौ प्रसूनोज्ज्वलौ । गुर्वानन्दयुतो गुरुर्यदि भवेत्तन्नूनविंशाक्षरं नागाधीश्वरपिङ्गलेन भणितं शार्दूलविक्रीडितम् ॥'

शार्दूलसाटकमुदाहरति—जहा (यथा)—

जे लङ्कागिरिमेहलाहि खलिआ संभोअखिण्णोरई-
　　फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम् ।
ते इण्हि मलआणिला विरहिणीणीसाससंपक्किणो
　　जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥२३९॥

[ये लङ्कागिरिमेखलातः स्खलिताः संभोगखिन्नोरगी-
　　स्फारोत्फुल्लफणावलीकवलनेन प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससंपर्किणो
　　जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णायिताः (इव) ॥]

कर्पूरमञ्जरीनाटके देवीनियुक्ता विचक्षणा राजानं आनयन्ती वसन्तवर्णनानन्तरं दक्षिणानिलमुपवर्णयति—ये दक्षिणानिलाः प्रथमं लङ्कागिरिमेखलातःस्खलिताः तदनन्तरं संभोगेन खिन्नानां भुजगीनां स्फारोत्फुल्लफणावलीकवलनेन पानेन दरिद्रत्वं मन्दत्वं प्राप्ताः, त एवेदानीं मधुसमये मलयानिलाः विरहिणीनां निःश्वासैः सह संपर्किणः सन्तः शिशुत्वे सति तारुण्यपूर्णा इव झटिति बहला जाताः ॥ उद्दवणिका यथा—ऽऽऽ, ।।ऽ, ।ऽ।, ।।ऽ, ऽऽ।, ऽऽ।, ऽ, १९×४=७६॥ यथा वा[णीभूषणे]—'सीसिंदे सिसु सुण्णे प्रतिस्तामुत्तं पुरं इक्खणा रुम्नेरञ्झिणे समागदि न वा मेआडिणिसेपिट्ठी । एसो निच्चसमीहिअ मुक्कपधेली समुज्जुम्भने नि सइ गमरी चम्मति निरासइ विरी मायाते ॥'

अथ प्रकारान्तरेण शार्दूललक्षणमेव स्फुटयति—

पत्थारे स(ज)इ तिण्णि चामरवरं दीसन्ति पच्छुग्गअं
　　तत्तो लहुविण्णि चामर तहा एक्कं भ गन्धुग्गरे ।

तिण्णे दिण्णसु गन्ध चामर तहा गन्धा अ वे चामरं
रेहन्ता फणिवण्ण अन्त करणे सद्दूलसट्टा मुणे ॥ २४० ॥
[प्रस्तारे यत्र त्रयश्चामरवरा दृश्यन्ते वर्णोज्ज्वला
तदनन्तरं लघुद्वयं चामरस्तथोत्तिष्ठतो गन्धगुरू।
त्रीन्दत्स्व गन्धांश्चामरांस्तथा गन्धश्च द्वौ चामरौ
रेखा फणिवर्णोऽन्ते करणीयः शार्दूलसाटकं जानीहि ॥]

हे मुग्धे, यत्र प्रस्तारे क्रियमाणे प्रथमं पूर्वोक्तरीत्यैव त्रयश्चामरवरा वर्णोज्ज्वलाः श्वेतवर्णाश्चामरपक्षे, गुरुपक्षे—वर्णैरक्षरैरुज्ज्वला मनोहरा गुरवस्त्रयो दृश्यन्ते। तच्चैवं तदनन्तरं मगणानन्तरमित्यर्थः। लहुविण्णि लघुद्वयम्, तथा चामर एको गुरुः, तेन सगणो भवतीत्यर्थः। तत उत्तिष्ठतो गन्धगुरू लघुगुरू तदनन्तरं तिण्णे दिण्णसु गन्धत्रीन् गन्धांल्लघून्देहीत्यर्थः। ततः चामर तहा तथा त्रीन् गुरूनपि देहीति ततो गन्धश्च लघुरपि देय इत्यर्थः। ततो वे चामरं चामरद्वयं गुरुद्वयं रेहन्ता रेखान्तं लब्धन्तं देहीत्यर्थः। एवमष्टादश वर्णाः तस्यान्ते फणिवण्ण करणे गुरुर्वर्णः करणीयः। एवं यत्र प्रस्तारः, तच्छार्दूलसाटकं मुणे जानीहीत्यर्थः॥

जहा (यथा)—

जं धोअञ्जणसोणलोअणजुअं लग्गालअग्गं मुहं
हत्थालम्बिदकेसपल्लवचए घोलन्ति जं विन्दुणो।
जं एक्कं सिचअञ्चलं णिवसिदं तं ह्णाणकेलिट्ठिदा
आणीदा इयमब्भुदेक्कजणणी जोईसरेणामुणा ॥ २४१ ॥
[यस्या धौताञ्जनशोणलोचनयुगं लग्नालकाग्रं मुखं
हस्तालम्बितकेशपल्लवचये घूर्णन्ते यस्या बिन्दवः।
यदेकं सिचयाञ्चलं निवसितं तदेव स्नानकेलिस्थिता
आनीतेयमद्भुतैकजननी योगीश्वरेणामुना ॥]

कर्पूरमञ्जरीसाटकस्थं भैरवानन्दसमाकृष्टकर्पूरमञ्जरीवर्णनपरं विदूषकं प्रति राज्ञो वचनमिदम्—यस्या धौताञ्जनत्वाच्छोणमारक्तं कोकनदानुकारि लोचनयुगम्, अथ च—यस्या मुखं लग्नान्यलकाग्राणि यत्र तादृशम्, किं च—हस्तालम्बितकेशपल्लवचये यस्या बिन्दवो घूर्णन्ते। अपि च—यदेवैकं सिचयाञ्चलं निवसितं परिधृतमासीत् तं तयै(दे)वार्द्रभावाल्लग्नचेलाङ्गयष्टिः स्नानकेलिस्थिता जलक्रीडापरायणा अद्भुतानामाश्चर्यरसानामेका जननी सकललोकविस्मयभूमिरियं कुन्तलाधिपकन्यका कर्पूरमञ्जरी अमुना प्रत्यक्षस्थि-

१. 'धअपट (ध्वजपट)' रवि०. २. 'लम्बालअग्गं (लम्बालकाग्रं)' रवि०.

तेन योगीश्वरेण कौलिकवरेण भैरवानन्देनानीता दक्षिणापथस्थवैदर्भनगराद्यानवर्त्मना समाकृष्टेत्यर्थः ॥ यथा वा—'गोविन्दं प्रणमोत्तमाङ्ग रसने तं(तं) घोषयाहर्निशं पाणी पूजय तं मनः स्मर पदे तस्यालयं गच्छतम् । एवं चेरकुरुथाखिलं मम हितं शीर्षोदयस्त-स्रुवं न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीडितम् ॥' उद्दवणिका यथा—ऽऽऽ, ॥, ऽ, ।, ऽ, ॥।, ऽऽऽ, ।, ऽ, ऽ, ।, ऽ, १९×४=७६॥ शार्दूलविक्रीडितं निवृत्तम् ॥

अथ चन्द्रमालाच्छन्दः—

ठइवि दिअवरजुअल मज्झ करअल करहिँ
पुण वि दिअवरजुअल मज्झ करअल करहिँ ।
सरसगण विमल जहि सुणिण ठवइ मनगइ
विमलमइ उरअवइ चन्दमल कहइ सोइ ॥ २४२ ॥

[स्थापयित्वा द्विजवरयुगलं मध्ये करतलं कुरु
पुनरपि द्विजवरयुगलं मध्ये करतलं कुरु ।
सरसगणान्विमलान्यत्र श्रुत्वा स्थाप्यते मनोगति-
र्विमलमतिरुरगपतिश्चन्द्रमालां कथयति ताम् ॥]

हे सुन्दरि, प्रथम स्थापयित्वा द्विजवरयुगलं चतुर्लघुकगणयुगं मध्ये करतलं सगणं कुरु पुनरपि द्विजवरयुगलम् । एवं कृते मध्यतः करतलं कुरु सरसान्गणान्विमलानति-विशदान् सुणि श्रुत्वा मनोगतिः स्थाप्यते निश्चलीक्रियते यत्र तां विमलमतिरुरगपतिः पिङ्ग-लश्चन्द्रमालामिति कथयति ॥ भूषणेऽप्युक्तम्—'द्विजवरगणयुगमुपधाय परिकलय कर-मथ नगणयुगलमिह गन्धयुगमनुविहर । फणिनृपतिभणितमिति चन्द्रमिदमिति शृणुत सक-लकविकुलहृदयमोदकरमवत नुत ॥'

चन्द्रमालामुदाहरति—जहा (यथा)—

'अमिअकरकिरणधर फुल्लवहुकुसुम वणु
कुविअ भइ सर ठवइ काम णिअ धरइ धणु ।
रवइ पिक समअ णिक किंत तुअ थिर हियलु
गमिअदिण ण पुण मिलणाहि सहि पिअ णिअलु॥२४३॥

[अमृतकरकिरणधरं फुल्लबहुकुसुमं वनं(मवाणान्)
कुपितो भूत्वा शरान्स्थापयति कामो निजं धरति धनुः ।

१. 'कन्त तु अथिरहिअलो (कान्तस्त्वस्थिरहृदयः)' रवि०.

रौति पिकः समयोऽतिरमणीयः किं तव स्थिरं हृदयं
गमितदिनानि न पुनर्मिलन्ति सखि प्रियो निकटे न (?) ॥]

काचिदतिनिसृष्टार्था दूती कामपि प्रोषितपतिकामाह—हे सखि, अमृतकरस्य पीयूषभानोः किरणान्धारयति । ओषधीनाथत्वात्तस्य । तादृशं फुल्लबहुकुसुमं नानाविधसुरभिप्रसूनं वनमिदं जातमित्युद्दीपनम् । किंच—कामोऽप्यवसरप्राप्त्या कुपितो भूत्वा प्राकृते 'पूर्वनिपातानियमाद्वहद्दु(?)भाषाकृतयमकानुरोधाद्वा विन्यासः । वस्तुतस्तु मदनोऽतिरोषणो भूत्वा शरान्सुलभकुसुमत्वात्कौसुमत्वात्कौसुमानेव बाणान्निजे धनुषि स्थापयित्वा धरइ धारयति । अर्थाद्धनुस्तादृशमायोजितकाण्डमण्डलीभूतकोदण्डं निजबाहुदण्डेन धृतवानिति भावः । अपि च पिकोऽपि रवइ रौति पञ्चमं कूजतीत्यर्थः । अतोऽयं समयो पिक परमरमणीय इत्यर्थः । अतश्च हे सखि, तवापि हृदयं किं स्थिरम् । अपि तु न स्थिरमिति काका । गमितानि दिनानि न पुनर्मिलन्ति । किं च सखि, प्रियो भर्ता निकटे नास्त्यतः परमं सुखमिति भावः । अत एवोक्तमभियुक्तेन—'मेघच्छन्ने दिवसे दुःसंचारासु नगरवीथीषु । भर्तुर्विदेशगमने परमसुखं जघनचपलायाः ॥' इति ॥ यथा वा[णीभूषणे]—'अनुपहतकुसुमरसतुल्यमिदमधरदलममृतमयवचनमिदमालि विफलयसि चल । यदपि यदुरमणपदमीश मुनिहृदि लुठति तदपि तव रतिवलितमेत्य वनतटमटति ॥' उद्दवणिका. यथा—।।।।, ।।।।, ।।ऽ, ।।।।, ।।।।, १९×४=७६ ॥ इति चन्द्रमाला निवृत्ता ॥

अथ धवलाच्छन्दः—

करइ बेसु सुणि जुवइ विमलमइ महिअले
ठइअ ठइ रमणि सरसगण पअपअ पले ।
दिअगण चउ चउपअहिं भण फणिवइ सही
कमलगण सरसमण सुमुहि धवलअ कही ॥ २४४ ॥

[करोति वासुकिः शृणु युवति विमलमतिर्महीतले
स्थापयित्वा·····रमणि सरसगणान्पदेपदे पतितान् ।
द्विजगणांश्चतुरश्चतुष्पद्यां भणति फणिपतिः सत्यं
कमलगणः सरसमानसं सुमुखि धवलकं कथ्यते ॥]

हे युवति, विमलमतिर्वासुकिः विहसो महीतले करोति धवलां धवलाख्यं वृत्तमिति । तत्वं शृणु यस्मादी हे रमणि, स्थापयित्वा सरसगणान् पदे पदे पतितानाह—द्विज

१. 'प्रियनिकट याहि' रवि०. २. 'रंगु (रसं)' रवि०. ३. 'विमलमने' रवि०. ४. 'रमणिमिरि (रमणगिरे)' रवि०. ५. 'पभतले (पादतले)' रवि०. ६. 'मही (मनसी)' रवि०. ७. 'धवलगुणमरिसमण हणिवभणि धरणेही (?)' रवि०.

[ति]। द्विजगणांश्चतुर्लघुकांश्चतुरश्चतुष्पदे(दां) फणिपतिः सही सत्यं भणति पठतीत्यर्थः। द्विजगणचतुष्टयपाठानन्तरं कमलगणो गुर्वन्तः सगणः करः पाणिः 'कमल हत्थम्' इत्यत्रैवोक्तत्वात्स देयः। हे सरसमानसे सुमुखि, एवमुक्तप्रकारेण गणसंनिवेशो यत्र तद्धवलनामकं छन्दः कही कथ्यते इत्यर्थः ॥ भूषणे तु प्रकारान्तरेणोक्तम्—'द्विजवरगणनि(?)तयमिह हि नगणयुगलक विमलवलयमपि च कलय सकलजनसुखम् । फणिपतिवरभणितममलधवलमिह हितं विमलकविकुलहृदि वलितमिति भुवि वलितम् ॥'

धवलामुदाहरति—जहा (यथा)—

तरुण तरणि तवइ धरणि पवण वह खरा
　लग णहि जल वड मरुथल जणजिवणहरा ।
दिसइ चलइ हिअअ डुलइ हम इकलि वहू
　घर णहि पिअ सुणहि पहिअ मण इछल कहूँ ॥ २४५ ॥

[तरुणस्तरणिस्तपति धरणी पवनो वहति खरो
　लग्नं नहि जलं महामरुस्थलं जनजीवनहरम् ।
दिशश्चलन्ति हृदयं कम्पतेऽहमेकला वधू-
　र्गृहे नहि प्रियः शृणु पथिक मन इच्छति कुत्र ॥]

काचित्स्वयंदूती पथिकासक्ता तमाह—तरुणस्तरणिः सूर्यः तपति । धरणी प्रचण्डमार्तण्डकरप्रकरसंपर्कात्क्षितितलमतितप्तमित्यर्थः। किंच—पवनः खरो वहति। निकटे जलं च नास्ति। महामरुस्थलं जनजीवनहरमिदं विद्यते मारव वर्त्मेति शेषः। दिशो हरितोऽपि तिग्ममरीचिनिचयसंयोगाच्चलन्तीव। अतो हृदयं कम्पते। अहमेकला वधूः, गृहे च प्रियः स्वामी नास्ति। हे पथिक, शृणु तव मनः कुत्रापीच्छति। स्थातुमिति शेषः। निवासं कर्तुं चेन्मनस्तव विद्यते तदात्रैवास्स्वेति वाक्येन व्यज्यते इति ॥ यथा वा[णीभूषणे]—'उपगत इह सुरभिसमय इति सुमुखि वदे निधुवनमधि सह पिव मधु जहि रुषमदे । कमलनयनमनुसर सखि तव रभसपर प्रियतमगृहगमनमुचितमनुचितमपरम् ॥' उट्टवणिका यथा—IIII, IIII, IIII, IIII, IIS, १९×४=७६ ॥ धवला निवृत्ता ॥

अथ शंभुच्छन्दः—

अथ लोआणं भण ए छन्दं मणमज्झे सुक्खं संवुत्तं
　सुपिअं अग्गे धरि हत्थो दिज्जसु कुन्तीपुत्तं संजुत्तम् ।
गण अग्गे दिज्जसु एवं वे सर अन्ते सत्ता हारा जं
　इअ वत्तीसा पअला मत्ता सुणु छन्दो संभूणामेअम् ॥ २४६ ॥

१. 'जिमह मोल्द (वमतिर्यावुत्ता)' रवि०. २. 'अन्ते' रवि०.

[इदानीं लोकानां भणैतच्छन्दो मनोमध्ये सुखं संवृत्तं
सुप्रियाग्रे धारय हस्तं देहि कुन्तीपुत्रसंयुक्तम्।
गणमग्रे देह्येवं द्वौ शरावन्ते सप्त हारा यत्र
इति द्वात्रिंशत्पदे मात्राः शृणु छन्दः शंभुनामैकम्॥]

हे सुपिअं सुतरां प्रिय शिष्य, अव इदानीं लोकानां ए एतच्छन्दो भण येन शंभुच्छन्दसा मनोमध्ये सुखं संवृत्तम्। तत्र अग्रे प्रथमं हस्तं सगणं देहि। कीदृशं हस्तम्। कुन्तीपुत्रसंयुक्तं गुरुद्वयसहितमित्यर्थः। ततोऽग्रे एवं गणं देहि सगणं गुरुद्वययुक्तं पुनर्देहीत्यर्थः। ततश्च द्वौ शरौ लघुद्वयं देहि। अन्ते सत्ता सप्त हारा गुरवो देया इत्यर्थः। एवं च पदे एकोनविंशत्यक्षराणि द्वात्रिंशन्मात्राश्च। त्रयोदशगुरूणां द्विगुणाभिप्रायेण षड्विंशतिः, रससंख्या लघवश्च। संभूयेति प्रकारेण द्वात्रिंशन्मात्राः पतिता यत्र तदिदं शंभुनामकं छन्दो भवतीति विद्धि॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'कुरु पाणिं कंकणयुग्मालंकृतमग्रे रत्नं हारं च चरणं सनूपुरसंयुक्तं कुरु कर्णे भ्राजत्ताटङ्कम्। रसनामायोजय मञ्जीरद्वयमेवं शंसद्वृत्तान्तं भुवि कान्तं गौरि चिरं संभावय तन्नागाधीशेनोक्तम्॥'

शंभुमुदाहरति—जहा (यथा)—

सिअविट्ठी किज्जिअ जीआ लिज्जिअ वाला वुड्ढा कम्पन्ता
वह पच्छा वाअह लग्गो काअह सव्वा दीसा झम्पन्ता।
जब जज्झा रोसइ चिन्ता हो सइ अग्गी पिट्ठी थक्कीआ
करपाआ संभरि लिज्जे भित्तरि अप्पाअप्पी लुक्कीआ॥२४७॥

[शीतवृष्टिः कृता जीवो गृहीतो बाला वृद्धाः कम्पन्ते
वाति पश्चाद्वातो लगति कायेषु सर्वा दिश आच्छादयन्।
यदा झञ्झा रुष्यति चिन्ता भवति सदाग्निः पृष्ठे तिष्ठति
करपादं संभृत्य गृह्यतेऽन्तरन्योन्यं निलीयते॥]

कश्चित्कविः शीतभरं वर्णयति—अनेन शीतकालेन शीतवृष्टिस्तथा कृता यथा जीवो गृहीतः। बाला वृद्धाश्च कम्पन्ते। किंच वाति पाश्चात्यो वातः। सर्वा दिश आच्छादयन्कायेषु लगति। यद्वा—का अ मिहिकार्थे देशी। तत्र सर्वा दिशः आच्छादयन्ती मिहिका लगति। यदा—झञ्झा (झञ्झावातः सवृष्टिकः) रुष्यति प्रबलं भवति तदा चिन्ता भवति सदा अग्निः पृष्ठे चेत्तिष्ठति। अथ च करपादं संभृत्य गृह्यते अन्तरन्योन्यं निलीयते॥ यथा वा[णीभूषणे]—'जय मायामानवमूर्ते दानववंशध्वंसव्यापारी वरमायूरासनदुन्दुभिवारणलक्ष्मीधारी। कृतकंसध्वंसनकर्मा गोगोपीगोपानन्दी वरिष्ठधर्मानन्द-

नलीलावामनदैत्यश्रेणीनिष्कन्दी ॥' उद्दवणिका यथा—IIS, SS, IIS, SS, IIS, S, SSS, SS, १९×४=७६ ॥ शंभुर्निवृत्तः ॥

अथैकोनविंशत्यक्षरप्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते—

तत्र प्रथमं मेघविस्फूर्जिताछन्दः—

रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ॥२४८॥

यत्र रसैः षड्भिः, ऋतुभिः षड्भिरेव, अश्वैः सप्तभिः कृतविरतिः, अथ च य्मौ यगणमगणौ, अथ च न्सौ नगणसगणौ, रगणद्वयगुरुयुतौ चेद्भवतस्तदा मेघविस्फूर्जिताछन्दः स्यादिति ॥

यथा—

'कदम्बा मोदाढ्या विपिनपवनाः केकिनः कान्तकेका
विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः ।
निशानृत्यद्विद्युत्प्रसरविलसन्मेघविस्फूर्जिताश्चे-
त्प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मान्न किंचित् ॥'

यथा वा—

'उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे लुठन्तः
कुहूकण्ठी कण्ठीरवरवलवत्रासितप्रोषितेभाः ।
अमी चैत्रे मैत्रावरुणितरुणीकेलिकङ्केल्लिमल्ली-
चलद्वल्लीहल्लीसकसुरभयश्चण्डि चञ्चन्ति वाताः ॥'

इति राक्षसकविकृतदक्षिणानिलवर्णनम् ॥ उद्दवणिका यथा—ISS, SSS, III, IIS, SIS, SIS, S, १९×४=७६ ॥ मेघविस्फूर्जिता निवृत्ता ॥

अथ छायाछन्दः—

भवेत्सैव च्छाया तयुगल्युता स्याद्द्वादशान्ते यदि ॥ २४९ ॥

भोः शिष्याः, सैव मेघविस्फूर्जितैव यदि द्वादशान्ते यतिद्वयान्ते सगणान्त इति यावत् । तत्र रेफयुगस्थाने तयुगल्युता तगणद्वयसहिता । आदेरन्त्यादेर्वेति भावः । विरतिश्च सैव । शेषं समानम् । यत्र भवेत्तच्छायानामकं छन्दो भवतीति ॥

यथा—

'अभीष्टं जुष्टो यो वितरति समस्तोऽप्याशाखोऽस्वल्पः
स्फुरत्सोनारत्नः स्फुरधिमनतुधिर्नानुशाम्भिन्नः ।
न यस्याहूतेनाप्यागुरगत्वा संसारतीमातर-
स्तनोति प्रेम्णा तं जयति जगतां संसारिकल्पद्रुमः ॥'

उद्दवणिका यथा—ISS, SSS, III, IIS, SSI, SSI, S, १९×४=७६ ॥ छाया निवृत्ता ॥

अथ सुरसाछन्दः—

म्रौ भ्नौ यो नो गुरुश्चेत्स्वरमुनिकरणैराह सुरसाम् ॥ २५० ॥

भोः शिष्याः, यत्र म्रौ मगणरगणौ, अथ च भ्नौ भगणनगणौ भवतः, ततो यो यगणः, ततो नो नगणः, अनन्तरं गुरुश्चेत् । अथ च—स्वरैः सप्तभिः, मुनिभिः सप्तभिः, करणैः पञ्चभिः कृतविश्रामां सुरसामाह नागराज इति शेषः ॥

यथा—

'कामक्रीडासतृष्णो मधुसमयसमारम्भरभसा-
त्कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः ।
गोविन्दो बल्लवीनामधररससुधां प्राप्य सुरसां
शङ्के पीयूषपानप्रभवकृतसुखं व्यस्मरदसौ ॥'

उद्दवणिका यथा—SSS, SIS, SII, III, ISS, III, S, १९×४=७६॥ सुरसा निवृत्ता ॥

अथ फुल्लदामच्छन्दः—

मो गौ नौ तौ गौ शरहयतुरगैः फुल्लदाम प्रसिद्धम् ॥ २५१ ॥

भोः शिष्याः, यत्रादौ मो मगणः, ततो गौ गुरुद्वयम्, ततश्च नौ नगणद्वयम्, ततोऽपि तौ तगणौ भवतः, ततो गौ गुरुद्वयं भवति । किंच—शरहयतुरगैः पञ्चसप्तसप्तभिः पूर्वविपरीतैर्विरचितविरतिकं फुल्लदामनामकं प्रसिद्धं विख्यातं वृत्तं भवतीति वित्त ॥

यथा—

'शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं
हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम् ।
मुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं
मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम ॥'

उद्दवणिका यथा—SSS, SS, III, III, SSI, SSI, SS, १९×४=७६॥ फुल्लदाम निवृत्तम् ॥

अत्रापि प्रस्तारगत्यैकोनविंशत्यक्षरस्य पञ्चलक्षं चतुर्विंशतिसहस्राण्यष्टाशीत्युत्तरं च शतद्वयं (५२४२८८) भेदाः । तेषु कियन्तो भेदा उक्ताः शेषभेदा विशेषशेमुषीकैः राकरादिविचारेण वा प्रस्तार्य प्रस्तावनीया इति दिङ्मात्रमुपलक्षितमस्माभिरित्युपरम्यत इति ॥

अथ विंशत्यक्षरप्रस्तारे गीताच्छन्दः—

जहिँ आइ हत्थ णरेन्दवि ट्ठवि पाअ पञ्चम जोहलो
जहिँ ठाइछट्ठहि हत्थ दीसइ सद्द अन्तहि णेउलो ।
सइ छन्द गीअउ मुद्धि णीअउ सव्वलोअहि जाणिओ
कइसिट्ठिसिट्ठउ दिट्ठिदिट्ठउ पिङ्गलेण वखाणिओ ॥२८२॥

[यत्रादौ हस्तं नरेन्द्रद्वयं स्थापयित्वा पादः पञ्चमो जोहलो
यत्र षष्ठस्थाने हस्तो दृश्यते शब्दोऽन्ते नूपुरः ।
तच्छन्दो गीतां मुग्धे नीतं सर्वलोकैर्ज्ञातं
कविसृष्टिसृष्टं दृष्टिदृष्टं पिङ्गलेन व्याख्यातम् ॥]

हे मुग्धे, यत्रादौ हस्त सगण, णरेन्दवि नरेन्द्रद्वयं च ठवि स्थापयित्वा ततः पादगणो भगणः, ततः पञ्चमो जोहलो रगणः, यत्र च ठाइछट्ठहि प्राकृते पूर्वनिपातानियमात् षष्ठे स्थाने हस्तः सगणो दृश्यते, ततः शब्दो लघु, तदन्ते नूपुरो गुरुः, तत् गीअउ गीतेति नामक छन्दः सर्वलोके······ज्ञात कविसृष्टया सृष्ट दृष्टया च दृष्टं पिङ्गलेन व्याख्यात च त्वयि प्रकाशितमित्याचार्यः स्वप्रियतमां प्रत्याहेति योजनीयम् ॥ अतएव च्छन्दोमञ्जर्यामुक्तम्—

'सजजा भरौ सलगा यदा कथिता तदा खलु गीतिका' २८३

वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'वरपाणिशोभिसुवर्णकङ्कणरत्नसुविभूषिता सुपयोधरा पदसङ्गिनूपुररूपकुण्डलमण्डिता । फणिराजपिङ्गलवर्णिता कविमार्यमानसहारिका वरकामिनीव मनोमुदे नहि कस्य सा खलु गीतिका ॥' कामिनीपक्षेऽर्थः स्पष्टः ॥

गीतिकामुदाहरति—जहा (यथा)—

जहि फुल्ल केअइ चारुचम्पअचूअमञ्जरिवञ्जुला
सव दीस दीसइ केसुकाणणपाणवाउलभम्मला ।
वह गन्धवन्धुविबन्ध बन्धुर मन्दमन्द समीरणा
पिअकेलिकोउकलासलग्गिमलग्गिआ तरुणीजणा ॥२८४॥

[यत्र फुल्लानि चारुकेतकीचम्पकचूतमञ्जरीवञ्जुलानि
सर्वा दिशो दृश्यन्ते किंशुककाननपानव्याकुलभ्रमराः ।
वहति गन्धबन्धुविबन्धो बन्धुरो मन्दमन्दं समीरणः
प्रियकेलिकौतुककलामलग्नाः लग्नास्तरुणीजनाः ॥]

कश्चिदनुरागी कामिनीमभिसारयितुं वसन्तमुपवर्णयति—हे सुन्दरि, यत्र वसन्ते

प्राकृते पूर्वनिपातानियमात् चारुकेतकीचम्पकचूतमञ्जरीवञ्जुलानि पुष्पितानि। किंच—सर्वदिक्षु किंशुककानने फुल्लनवपलाशवने पानेन तत्तन्मकरन्दास्वादनेन व्याकुला भ्रमरा यत्र दृश्यन्ते। अथ च यत्र गन्धबन्धुः सुगन्धप्रायकत्वात्सुरभिसोदरस्ताद्दशश्चासौ विशिष्टो बन्धः स्कन्धकविन्यासो यस्य। अत एव बन्धुर उच्चनीचो भूत्वा मन्दमन्दं समीरणो मलयानिलो वहति। अतश्चैवंविधमदनमहोत्सवसदनरूपे समये तरुणीजनाः प्रियेण सह केलिकौतुकं निधुवनकौतुकं तस्य यो लासो विलासस्तत्प्रसङ्गिगमनि तत्कान्तौ लभा यत्र तादृशोऽयं वसन्तसमयः प्राप्तः। तस्मात्त्वमपि यथासुखं विहरेति॥ यथा वा[णीभूषणे]—'अलमीशपावकपाकशासनवारिजासनसेवया गमितं जनुर्जनकात्मजापतिरप्यसेव्यत नो मया। करुणापयोनिधिरेक एव सरोजदामविलोचनः स पर करिष्यति दुःखशेषमशेषदुर्गतिमोचनः॥' यथा वा ग्रन्थान्तरस्थमुदाहरणम्—'करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा रमणाय वेणुनिनादलङ्घिमसंगमेन सुखावहा। बहलानुरागनिवासरासससमुद्भवा भवरागिणं विदधौ हरिं खलु बल्लवीजनचारुचामरगीतिका॥' 'अथ सालतालतमालवञ्जुलकोविदारमनोहरा—' इत्यादि शिको(?)काव्ये॥ उद्वणिका यथा—॥ऽ, ।ऽ।, ।ऽ।, ऽ॥, ऽ।ऽ, ॥ऽ।ऽ, २०×४=८०॥ गीतिका निवृत्ता॥

अथ गण्डकाच्छन्दः—

रग्गणा पलन्तआ पुणो णरेन्द कन्तआ सुछकएण
हार एक दिज्जही सुसद्द पाअ किज्जही सुसक्कएण।
गण्डआ गणेह्नु एहु वंकुसङ्कसङ्कुले फणिन्द गाउ
तीस मत्त पाअ पत्त हार तीअभागए सुसद्द आउ॥२५९॥

[रगणः पतति पुनर्नरेन्द्रः कान्तः सुषट्केन
हारमेकं देहि सुशब्दं पादे कुरु स्वशक्त्या।
गण्डकां गणयैतद्वक्रशङ्खशृङ्खलया फणीन्द्रो गायति
त्रिंशन्मात्राः पादे प्राप्ता हारास्तृतीयभाग एकः सशब्द आगतः॥]

हे मुग्धे, यत्रादौ रगणो मध्यलघुर्गणः पतति, पुनर्नरेन्द्रो जगणः कान्तोऽतिसुन्दरः, ततः सुष्ठु एवंभूतो(तेन) रगणादिजगणान्तेन षट्केन सह हारमेकं गुरुं देहि। तदनन्तरं सुशक्कएण स्वशक्त्या निजकवित्वसामर्थ्येन सुशब्दं लघु पादे कुरु। तदेतद्वक्रशङ्खशृङ्खलया गुरुलघुशृङ्खलाबन्धक्रमेण फणीन्द्रः पिङ्गलो गण्डकाभिधानमिति छन्दो गायति(णय)यत्र पादे गुरुशकद्वेगुण्येन लघुदशकेन त्रिंशन्मात्राः पतिताः। अत्र च हारशब्दाभ्यां ए एकः तीअभाअ त्रिकलभागः आउ आगत इत्यर्थः। यदि च त्रिकलानां सामस्त्येन संख्या क्रियते तदा दशत्रिकलैरादिगुरुकैरेव गण्डका निष्पाद्यत इति भावः॥ वाणीभूषणे तु प्रकारान्तरे-

१. 'मन्तद्दी(मत्रयस्त)' रवि॰. २. 'वण्णसंसद कर्णे(अतिसंरक्ष्मेतत्)' रवि॰.

णोक्तम्—'तालचामरध्वजं पयोधरं च कुण्डलं शरं विधाय नूपुरं च नायकं सपक्षिराजगन्धचामरं निधाय । रूपमन्त्यगं विदेहि वर्णितेन पन्नगेन्द्रपिङ्गलेन गण्डका कवीन्द्रमण्डलीविनोदकारिणी सुमङ्गलेन ॥' ग्रन्थान्तरे त्विदमेव चित्रवृत्तमिति नामान्तरेणोक्तम् । अत एव च्छन्दोमञ्जर्याम्—'चित्रवृत्तमीरितं तदा रजौ रजौ रजौ गुरुर्लघुश्च' ॥…॥

गण्डकामुदाहरति—जहा (यथा)—

ताव बुद्धि ताव सुद्धि ताव दाण ताव माण ताव गव्व
जाव जाव हत्थ तल णच सव्व विज्जुरेह यक्क दव्व ।
एत्थ अन्त अप्पदोस देवरोस होइ णट्ठ सो इ सव्व
कोइ बुद्धि कोइ सुद्धि कोइ दाण कोइ माण कोइ गव्व २५६

[तावद्बुद्धिस्तावच्छुद्धिस्तावद्दानं तावन्मानस्तावद्गर्वो
यावद्यावद्धस्ततले नृत्यति सर्वेषां विद्युद्रेखेवैकं द्रव्यम् ।
अत्रान्ते आत्मदोषो दैवरोषो भवति नष्टास्त एव सर्वे
का बुद्धिः का शुद्धिः किं दानं को मानः को गर्वः ॥]

कश्चित्स्वमित्रं प्रत्याह—तावद्बुद्धिः, तावच्छुद्धिः, तावद्दानम्, तावन्मानः, तावद्गर्वः, यावद्यावद्धस्ततले नृत्यति सर्वेषां विद्युद्रेखेवातिचञ्चलमेकं द्रव्यम् । अत्रान्ते द्रव्याभावे आत्मदोषो दैवरोषो वा कारणं भवति नष्टास्त एव सर्वे वस्तुतस्तु का बुद्धिः, का शुद्धिः, किं वा दानम्, को वा मानः, को वा गर्वः ॥ यथा वा[णीभूषणे]—'दृष्टमस्ति वासुदेव देव विश्वमेतदेव शेषकं तु वाजिरत्नभृत्यदारसूनुगेहवित्तमादिवभव तु । त्वत्पदाब्जभक्तिरस्तु चित्तसीम्नि वस्तुतस्तु सर्वदैव शेषकालदुःसकालदूतभीतिनाशिनीह हन्त सैव ॥' उट्टवणिका यथा—SIS, ISI, SIS, ISI, SIS, ISI, S, I, २०×४=८०॥ यथा वा ग्रन्थान्तरस्थमुदाहरणम्—'चित्तवृत्तलीलया निसर्गरम्यदेशरूपविभ्रमेण राजमानसद्वयोविलाससंपदा कलाकुतूहलेन । यः सम व्रजाबलाजनैः सुराङ्गनानिभैः सुखं समेत्य निष्कुरुल्लास चित्तपद्मकोषषट्पदः स मे सदास्तु ॥' गण्डका निवृत्ता ॥

अथास्मिन्नेव प्रस्तारे शोभानामकं वृत्तं ग्रन्थान्तरादाकृष्य लिख्यते—

रसाश्वाश्वैः शोभा नयुगगजठरा मेघविस्फूर्जिता चेत् ॥ २५७ ॥

यत्र रसैः षड्भिः, अश्वैः सप्तभिः, पुनरश्वैर्विरतिर्विरतिः, अथ च मेघविस्फूर्जिता चेत् यगणमगणानन्तरं नगणद्वयगुरुजठरा भवति । शेषं समानं यत्र तच्छोभानामकं वृत्तं भवतीति ॥

---

१. 'हत्थ सव्व णच्च विज्जुरेहे रङ्गे एक दव्व (हस्ते सर्वं नृत्यति विद्युद्रेखारङ्गे)' इति रवि०.

यथा—

सदा पूर्णोन्मीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां
तयोरूर्ध्वं राजत्तरलकिसलया श्लिष्टसुस्निग्धशाखा।
लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बाश्रिताग्रा
महो शोभा मौलौ मिलदलिपटलैः कृष्ण सा कापि वल्ली २५८

उद्दवणिका यथा—ISS, SSS, III, III, S, SIS, SIS, S, २०×४=८०॥ शोभा निवृत्ता॥

अथ सुवदना छन्दः—

ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना॥ २५९॥

यत्र सप्तभिरश्वैः सप्तभिरेव, ततश्च षड्भिर्विरतिः, अथ च—मगणरगणभगणनगणयगणाः, ततो भ्लौ भगणलघू ततश्चान्ते गुरुर्यत्र सा सुवदना ज्ञेया॥

यथा—

प्रत्याहृत्येन्द्रियाणि त्वदितरविषयात्रासास्रनयना
त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोत्फुल्लपुलका।
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्तिं त्यक्तुकामा ननु नरकरिपो राधा मम सखी॥२६०॥

उद्दवणिका यथा—SSS, SIS, SII, III, ISS, SII, I, S, २०×४=८०॥ सुवदना निवृत्ता॥

अत्रापि प्रस्तारगत्या विंशत्यक्षरस्य दशलक्षमष्टचत्वारिंशत्सहस्राणि षट्सप्तत्युत्तराणि पञ्च शतानि १०४८५७६ भेदा भवन्ति। तेषु विस्तरभीत्या कियन्तो भेदा लक्षिताः। शेषभेदास्तु सुबुद्धिभिराकरास्त्वमत्या वा प्रस्तार्य सूचनीया इति दिक्॥

अथैकविंशत्यक्षरप्रस्तारे स्रग्धराछन्दोऽभिधीयते—

वे कण्णा गन्धहारा वलअदिअगणा हत्थहारा पलन्ता
एकल्ला सल्ल कण्णा धअगणसहिआ कङ्कणा अन्त कन्ता।
वीसा ऐकग्ग वण्णा पअहि लहु णवा बारहा होइ दीहा
पिण्डा बत्तीसअग्गा सउ फणिभणिआ सद्धरा होइ सुद्धा २६१

[द्वौ कर्णौ गन्धहारौ वलयद्विजगणौ हस्तहारौ पतन्ति
एकलः शल्यः कर्णो ध्वजगणसहितः कङ्कणोऽन्ते कान्तः।

1. 'एकगला जं पलइ लहुगुरु (एकाग्रका यत्र पतन्ति लघुगुरवः)' इति रा०.

विंशतिरेकाग्रा वर्णा पदे लघवो नव द्वादश भवन्ति दीर्घाः

पिण्डो द्वात्रिंशदग्रं शतं फणिभणिता स्रग्धरा भवति शुद्धा ॥]

भोः शिष्याः, यत्र प्रथमं द्वौ कर्णौ गुरुद्वयात्मकौ गणौ, ततो गन्धो लघुः, ततो हारो गुरुः, ततो वलयो गुरुः, ततो द्विजगणश्चतुर्लघ्वात्मको गणः, ततो हस्तः सगणः, ततो हारो गुरुः पतति, तत एकल एको लघुः, शल्यो लघुः, अनन्तरं कर्णः, ततो ध्वज आदिलघुस्त्रिकलस्तत्सहितः, ततः कङ्कणो गुरुरतिक्रान्तोऽन्ते यस्य एवमेकाधिका विंशतिवर्णाः पदे यत्र तत्र विवेकः—लघवो नव, द्वादश दीर्घा गुरवो भवन्ति । एतेन गुरुद्विगुण्येन चतुर्विंशतिः, अथ च—नव लघवः, संभूय त्रयस्त्रिंशन्मात्राः पदे तत्पिण्डो द्वात्रिंशदधिकशतमात्रको यत्र (यथा) सा शुद्धा स्रग्धरानामकं वृत्तं भवतीति फणिपतिः पिङ्गलो भणतीति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'कर्णे ताटङ्कयुक्तं वलयमपि च सुवर्णं च मञ्जीरयुग्मं पुष्पं गन्धं वहन्ती द्विजगणरुचिरा नूपुरद्वन्द्वयुक्ता । शङ्खं हारं दधाना सुललितरसनारूपवत्कुण्डलाभ्यां मुग्धा केषां न चित्तं तरलयति धराटस्रग्धरा कामिनीव ॥' कामिनीपक्षेऽर्थः स्पष्टः ॥ छन्दोमञ्जर्यां तु 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इत्युक्तमिति ॥

स्रग्धरामुदाहरति—जहा (यथा)—

ईसारोसप्पसादप्पणदिसु बहुसो सग्गगङ्गाजलेहिं
आमूलं पूरिदाए तुहिणकरकलारुप्पसिप्पीअ रुद्दो ।
जोह्लामुत्ताहलिल्लं णदसिर णिहिदं अग्गहत्थेहि दोहिं
अग्घं सिग्घं दअन्तो जअइ गिरिसुआपाअपङ्केरुहाणम् २६२

[ईर्ष्यारोषप्रसादप्रणतिषु बहुशो स्वर्गगङ्गाजलै-
रामूलं पूरितया तुहिनकरकलारूप्यशुक्त्या रुद्रः ।
ज्योत्स्नामुक्ताफलाढ्यं नतशिरसि निहितमग्रहस्ताभ्यां द्वाभ्या-
मर्घ्यं शीघ्रं ददज्जयति गिरिसुतापादपङ्केरुहयोः ॥]

कर्पूरमञ्जरीसाटकस्य नान्दीपाठकस्य वचनम्—ईर्ष्यारोषप्रसादप्रणतिषु स्वर्गगङ्गाजलैरामूलं बहुशो मुहुः पूरितया तुहिनकरकलारूप्यशुक्त्या गिरिसुतापादपङ्केरुहयोर्गिरीन्द्रनन्दिनीचरणारविन्दयोर्नतशिरसि निहितं ज्योत्स्नामुक्ताफलयुक्तं द्वाभ्यामग्रहस्ताभ्यां शीघ्रमर्घ्यं ददद्रुद्रः शिवो जयति सर्वोत्कर्षेण वर्तत इत्यन्वयः ॥ यथा वा[णीभूषणे]—'अन्यप्रोतास्थिमालावलयितमहादुस्तरस्वर्गगङ्गा वेगव्यालोलमुण्डावलि [illegible]कण्ठोपकण्ठाः । [illegible] न शिवः [illegible]न्दुखण्डक्रीडितानि ॥' अत्रप्रस्तारो यथा—SS, SS, I, S, S, IIII, IIS, S, I, SS, IS,

१. 'मउलिनिहिदणं (मौलिनिहितम्)' इति क०.

ऽ, २१×४=८४ ॥ यथा वा ग्रन्थान्तरस्थमुदाहरणम्—'व्याकोपेन्दीवराभा कनककपलसत्पतिवासा सुहासा धर्हैरचन्द्रकान्तैर्वलयितचिकुरा चारुकर्णावतंसा । अंसव्यासक्तवंशध्वनिसुखितजगद्वल्लवीभिर्लसन्ती मूर्तिर्गोपस्य विष्णोरवतु जगति वः स्रग्धराहारिहारा ॥' स्रग्धरा निवृत्ता ॥

अथ नरेन्द्रच्छन्दः—

आइहिँ जत्थ पाअगण पअलिअ जोहल अन्त ठवीजे
काहल सद्द गन्ध एम मुणिगण कङ्कण जाहँ करीजे।
सद्दइ एक तत्थ चल णरवइ पूरहु सङ्ख सुभव्वा
चामरजुग्ग अन्त जहि पअलिअ एहु णरेन्दउ कव्वा॥२६३॥

[आदौ यत्र पादगणः प्रकटितो जोहलोऽन्ते स्थाप्यः
काहलः शब्दो गन्धो एवं मुनिगणः कङ्कणो यत्र क्रियते।
शब्द एकस्तथा चलति नरपतिः पूर्यतां शङ्खः सुभव्य-
श्चामरयुग्ममन्ते यत्र प्रकटितमेतन्नरेन्द्रं काव्यम् ॥]

भोः शिष्याः, यत्रादौ पादगणो भगणः प्रकटितो भवति, ततो जोहलो रगणः स्थाप्यते, ततः काहलो लघुः, ततः शब्दो लघुः, ततो गन्धो लघुरेव, एवं मुनिगणश्चतुर्लघुको गणः, ततः कङ्कणो गुरुर्यत्र क्रियते, ततः शब्दो लघुरेको यत्र तथ्यं सत्यम्, ततो नरपतिर्जगणश्चलति, ततः सुभव्यः शङ्खो लघुः पूर्यताम्, ततश्चामरयुग्मं गुरुद्वन्द्वमन्ते यत्र प्रकटितम् एतन्नरेन्द्राख्यं काव्य छन्द इत्यर्थः ॥ अथ च—यदा नरपतिश्चलति तदैतत्सर्वं भवति । यथा पूर्वं गणाः प्रचरन्ति, ततः काहलशब्दो भवति, तदनन्तरं गन्धस्य कर्पूरागुरुसारादेर्ज्ञानम्, तदनन्तरं कङ्कणादिभूषणं प्रसन्नेन नरेन्द्रेण महावीरेभ्यो दीयत इत्यादि तादृशध्वनिविशेषरूपेऽर्थे यथायुक्तं योजनीयं सुमतिभिरित्युपरम्यते ॥ वाणीभूषणे तु प्रस्तारान्तरेणोक्तम्—'चामररलरज्जुवरपरिगतविप्रगणाहितशोभः पाणिविराजिपुष्पयुगविरचितरङ्कणसंगतगन्धः । चारुसुवर्णकुण्डलयुगलललितशोचितलक्षतवर्णः पिङ्गलपन्नगेन इति निगदति राजति शस्तनरेन्द्रः ॥'

नरेन्द्रमुदाहरति—जहा (यथा)—

फुल्लिअ केसु चन्द तह पअलिअ मञ्जरितेज्जिअ चूआ
दक्खिणवाउ सीअ भइ पवहइ कम्प विओइणिहीआ।
केअइधूलि सव्वदिस पसरिअ पीअर सव्वउ भासे
आउ वसन्त काइ सहि करिहउ कन्त ण थक्कइ पासे॥२६४॥

१ 'जेहि' सं॰. २. 'चन्द (चन्द्र)' सं॰.

[पुष्पितं किंशुकं चम्पकं तथा प्रकटितं मञ्जरीतेजिताश्चूताः
दक्षिणवायुः शीतो भूत्वा प्रवहति कम्पति वियोगिनीहृदयम् ।
केतकीधूलिः सर्वदिक्षु प्रसरिता पीताः सर्वा भासन्ते
आगतो वसन्तः किं सखि करिष्यामि कान्तो न तिष्ठति पार्श्वे॥]

काचित्प्रोषितपतिका निजसखीमाह—हे सखि, पुष्पित किंशुकम् । चम्पकमपि तथा प्रकटित विकसितमित्यर्थः । चूता आम्रवृक्षा मञ्जर्या तेजिता जातमञ्जरीका जाता इत्यर्थः । किंच दक्षिणो वातो मलयानिलः शीतो भूत्वा प्रवहति । अतः कम्पते वियोगिनीहृदयम् । अथ च केतकीधूलिः सर्वदिक्षु प्रसृता । अतः पीतं सर्वतो भासते इत्यादिलक्षणवशतो वसन्त आगतः । अतः कारणात्सखि, किं करिष्यामि कथ वा नेष्यामि दिवसानेतान् । कान्तः पार्श्वे न तिष्ठति ॥ यथा वा[णीभूषणे]—'पङ्कजकोषपानपरमधुकरगीतमनोज्ञतडागः पञ्चमनादवादपरभृतकाननसत्परभागः । वल्लभविप्रयुक्तकुलवरतनुजीवनदानदुरन्तः किं करवाणि वक्षि मम सहचरि सनिधिमेति वसन्तः ॥' उद्दवणिका यथा—
ऽ।।, ऽ।ऽ, ।, ।, ।, ।।।।, ऽ, ।, ।ऽ।, ।, ऽऽ, २१×४=८४ ॥ नरेन्द्रो निवृत्तः ॥

अथास्मिन्नेव प्रस्तारे ग्रन्थान्तरात्सरसीछन्दो लक्ष्यते—

नजभजजा जरौ यदि तदा गदिता सरसी कवीश्वरैः ॥ २६५ ॥

यत्र नगणजगणभगणजगणजगणा भवन्ति । अथ च जरौ जगणरगणौ भवतो यदि तदा कवीश्वरैः सा सरसी गदिता । तन्नामकं छन्द इत्यर्थः ॥

यथा—

चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्मिषु
स्फुटवदनाम्बुजासु विलसद्भुजवालमृणालवल्लिषु ।
कुचयुगचक्रवाकमिथुनानुगतासु कलाकुतूहली
व्यरचयदच्युतो व्रजमृगीनयनासु निभ्रमम् ॥ २६६ ॥

यथा वा—'तुरगशताकुलस्य परितः परमेकतुरगजन्मनः प्रथितभूभृतः प्रतिपथं मथितस्य भृश महीभृता । परिचलतो बलानुजबलस्य पुरः सतत धृतश्रियश्चिरगलितश्रियो जलनिधेश्च तदाभवदन्तरं महत् ॥' इति माघे ॥ उद्दवणिका यथा—।।।, ।ऽ।, ऽ।।, ।ऽ।, ।ऽ।, ।ऽ।, ऽ।ऽ, २१×४=८४ ॥ इदमेव ग्रन्थान्तरे 'सिद्धकम्' इति नामान्तरेणोक्तम् ॥ सरसी निवृत्ता ॥ अत्रापि प्रस्तारगत्यैकविंशत्यक्षरस्य नवलक्ष सप्तनवतिसहस्राणि द्विशमधिपञ्चाशदुत्तरं च शत २०९७१५२ भेदा भवन्ति । तेषु भेदद्वय प्रदर्शितम् । शेषभेदाः सुधीभिः स्वबुद्ध्या प्रस्तार्य सूचनीया इति दिक् ॥

अथ द्वाविंशत्यक्षरप्रस्तारे हंसीछन्दः—

विज्जूमालापोंपपाए लिअ दिअगण व वहुगुणजुत्ता
अन्ते कण्णासुद्दा वण्णा भण फणिवइ कइवर गुणजुत्ता ।

१. 'आईपाए (आदिपादे)' ग०.

जे बत्तीसा मात्ता थक्के पअपअ पअलिअ गुरुलहुसोहा
एसा हंसी णामा छन्दो सअलवुहअणमणहरणमोहा ॥ २६७ ॥

[विद्युन्मालापादपाते त्रयो द्विजगणास्तथा बहुगुणयुक्ता
अन्ते कर्णशुद्धौ वर्णौ भणति फणिपतिः कविवरो गुणयुक्तः।
यत्र द्वात्रिंशन्मात्रास्तिष्ठन्ति पादे पादे प्रकटिता गुरुलघुशोभा
एषा हंसी नाम छन्दः सकलबुधजनमनोहरणमोहा ॥]

भोः शिष्याः, यत्र विद्युन्मालाया वसु(८)गुरुचरणायाः पादपाते सति त्रयो द्विजगणाश्चतुर्लध्वात्मकगणाः, तथा बहुगुणयुक्ताः पतन्तीत्यर्थः। तस्यान्ते वसुगुरुद्विजगणत्रयान्ते कर्णेन द्विगुर्वात्मकेन गणेन शुद्धौ वर्णौ यत्र यत्र च पदे पदे प्रतिपद गुरुदशकद्वैगुण्येन विंशति (२०) द्विजनयाणा (?) दिनकर(१२)लघवः संभूय द्वात्रिंशन्मात्राः प्रकटिताः। *एवं यत्र गुरुणा लघुना प्रकटितशोभा (शोभा) स(त)देतद्धंसीनामकं छन्दः* सकलबुधजनमनोहरणे मोहा मोहरूप पण्डितजनमनोविस्मायकमिद गुणयुक्तः कविवरः फणिपतिर्भणतीति जानीत ॥ वाणीभूषणेऽप्युक्तम्—'यस्यामष्टौ पूर्वं दीर्घास्तदनु कमलमुखि दिनकरसंख्या ह्रस्वा वर्णाः पीनोत्तुङ्गस्तनभरविनमितसुभगशरीरे। दीर्घोवृत्त्या लीलालोले यतिरिह विरमति कुलगिरिषष्ठैर्द्वाविंशत्या वर्णैः पूर्णा प्रभवति कुसुममृदुलतरहंसी ॥' छन्दोमञ्जर्यामपि—'मो गौ नाश्चत्वारो गो गो भवति वसुभुवनयतिरिह हंसी।' *यत्र मौ मगणद्वयम्, अथ च गौ गुरुद्वयम्, तदनन्तरं चत्वारो ना नगणचतुष्टयमित्यर्थः*। ततश्च गो गो गुरुद्वयमेव यत्र भवति। यतिस्तु प्रथम वसुष्वष्टसु ततो भुवनैश्चतुर्दशभिर्भवतीति विश्रामभेदेनोक्तम् ॥

हंसीमुदाहरति—जहा (यथा)—

णेत्ताणन्दा उग्गे चन्दा धवलचमरसमसिअकरविन्दा
उग्गे तारा तेआ हारा विअसु कमलवण परिमलकन्दा।
भासा कासा सव्वा आसा महुरपवण लहलहिअ करन्ता
हंसा सद्द फुल्लावन्धू सरअसमअ सहि हिअअ हरन्ता ॥ २६८ ॥

[नेत्रानन्द उदेति चन्द्रो धवलचमरसमशीतकरविन्दवः
उद्यान्ति तारास्तस्या हारा विकसितं कमलवनं परिमलकन्दम्।
भासन्ते काशाः सर्वाशासु मधुरपवनो मन्दमन्दसंचरणं करोति
हंसः शब्दायते पुष्पबन्धुः शरत्समयः सखि हृदयं हरति ॥]

काचित्प्रौढा नायिका शरत्समयमुपवर्णयन्ती निजसखीमाह—
लोचनानन्दकारी चन्द्र उदेति, किं च धवलचमरसमशीतक-

तथा रजन्या हारा इव उद्यन्ति। अथ च—विकसितं कमलवनम्, अत एव परिमलाः सुगन्धाः कन्दा यत्र तादृशम्। अपि च सर्वाशासु काशाः भासन्ते मधुरश्च पवनः लहलहं करोति। मन्दमन्दसंचरणे 'लहम्' इत्यनुकरणम्। किं च हंसः सद्द कूजतीत्यर्थः। अतः पुष्पबन्धुः शरत्समयः सखि, हृदयं हरति रसोद्दीपकत्वेन हृदयहारको भवतीत्यर्थः॥ यथा वा[णीभूषणे]—'श्रीकृष्णेन क्रीडन्तीनां क्वचिदपि वनभुवि मनसिजभाजां गोपालीनां चन्द्रज्योत्स्नाविशदरजनिजनितरतान्तीनाम्। घर्मश्रद्धयत्पत्रालीनामुपचितरभसविमलतनुभासां रासक्रीडायासध्वंसी मुदमुपनयति मलयगिरिवातः॥' उद्वणिका यथा—ऽऽऽऽऽऽऽऽ, ।।।।, ।।।।, ।।।।, ऽऽ, २२×४=८८॥ यथा वा ग्रन्थान्तरे—'सार्धं कान्तेनैकान्तेऽसौ विकचकमलमधु सुरभि पिबन्ती कामक्रीडाकुतस्फीतप्रमदसरसतरमलघु वसन्ती। कालिन्दीये पद्मारण्ये पवनपतनतरतरलपरागे कंसाराते पश्य स्वेच्छं सरभसगतिरिह विलसति हंसी॥' हंसी निवृत्ता॥

अथास्मिन्नेव प्रस्तारे अन्यान्तरान्मदिरानामकं छन्दोऽभिधीयते—

**सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा॥ २६९॥**

*यत्रैको गुरुरन्ते वर्तमानः सप्तभकारयुक्तः भगणसप्तकयुक्तो भवति तन्मदिराभिधानं* छन्दो भवतीति॥

*यथा—*

माधवमासि विकस्वरकेसरपुष्पलसन्मदिरामुदितै-
भृङ्गकुलैरुपगीतवने वनमालिनमालि कलानिलयम्।
कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं
त्वं भज माधविकामृदुनर्तकयामुनवातकृतोपगमा॥ २७०॥

*उद्वणिका यथा*—ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ, २२×४=८८॥ मदिरा निवृत्ता॥ अत्रापि प्रस्तारगत्या द्वाविंशत्यक्षरस्यैकचत्वारिंशल्लक्षाणि चतुर्नवतिसहस्राणि चतुरुत्तरं शतद्वयं च ४१९४३०४ भेदाः। तेषु भेदद्वयमुक्तम्। शेषभेदाः शास्त्ररीत्या प्रस्तार्य प्रतिभावद्भिरुदाहर्तव्या इति दिङ्मात्रमुपदिश्यते॥

अथ त्रयोविंशत्यक्षरप्रस्तारे सुन्दरीछन्दः—

जहिँ आइहि हत्थो करअल तत्थो पाअ लहुजुअ वेद्ध ठिआ
ठवि सेस पहिल्ली चमरहिल्ली सहजुअ पुणु वद्ध ठिआ।
पअअन्तहि हेत्थगण पभणिज्जे तेइस वण्ण पमाण किआ
पेँहु मत्तहि पाओ पइ पभणिज्जे वण्णहि सुन्दरिआ भणिआ॥२७१॥

१. 'कण्णगणा' (कर्णगणाः) रवि०। २. 'ठवि चामरभासहिलहुअगुरु मन पहिलिम नेविज्जा (स्थापय चामरं शाहलघुगुरं वर्णः सन्त्' रवि०। ३. 'सद्दा (शब्द)' रवि० ४. 'पाआइद (पदमात्रवि)' रवि०।

[यत्रादौ हस्तः करतलं तथा पादो लघुयुगं वक्रात्रयः

स्थापयित्वा शल्यं प्रथमं चमरगुरू सल्ययुगं पुनर्वक्रः स्थितः।

पदान्ते हस्तगणः प्रभण्यते त्रयोविंशतिर्वर्णाः प्रमाणीकृताः

एतन्मात्राभिः प्राप्तं····प्रभण्यते वर्णैः सुन्दरिका भणिता ॥]

भोः शिष्याः, यत्रादौ हस्तः सगणो भवति, तथा करतल सगण एव, ततः पादगणो भगणः, ततो लहूजुअ लघुद्वयमित्यर्थः। तदनन्तरं वङ्क तिआ वक्रात्रयः गुरुत्रयमित्यर्थः। ततः ठवि सल्ल शल्यं स्थापयित्वा शल्य लघुमेकम्। ततः पहिल्लि प्रथम शल्यमेव लघुमेव स्थापय सच शल्यो लघुः चमरहिहिल्लि चमरगुरू मिलितैतदग्रे गुरुर्भवतीत्यर्थः। ततः सल्लजुअं शल्ययुगं लघुद्वयमित्यर्थः। पुनर्यत्र वङ्क ठिआ वक्रो गुरुः स्थितः। ततः पदे पदे प्रतिपदमन्ते हस्तगण. सगणः प्रभण्यते। एव त्रयोविंशतिर्वर्णाः पादे यत्र प्रमाणीकृताः। तदेतन्मात्राभिर्वर्णैश्च प्राप्त सुन्दरीनामक छन्दो भणितमशेषैः कविभिः प्रभण्यते भवतु कथ्यते इत्यर्थः॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'करसहितसुवर्णद्वयवलया ताटङ्कमनोहरशङ्खधरा कुसुमनयराजच्छ्रवणविलोलकुण्डलमण्डितरत्नधरा। भुजसंमतकेयूरजसुविलासा पिङ्गलनागसमालपिता किल सुन्दरिका सा भवति तदा पद्मावतिका कविराजहिता॥'

सुन्दरीमुदाहरति—जहा (यथा)—

जिणि वेअ धरिज्जे महिअल लिज्जे पिट्ठिहि दन्तहि ठाउ धरा

[1]रिउवच्छ विआरे छलतणुधारे वन्धिअ सत्तु पआल धरा।

कुलखत्तिअ कम्पे दहमुह कट्टे कंसअकेसिविणास करा

करुणे पअले मेच्छह विअले सो देउ णराअणु तुम्ह वरा॥२७२॥

[येन वेदा धृता महीतलं नीतं पृष्ठेन दन्ताभ्यां समुद्धृतं धरा

रिपुवक्षो विदारितं छलतनुधारिणा बद्धा शत्रुः पाताले धृतः।

क्षत्रियकुल कम्पितं दशमुखानि कर्तितानि कंसकेशिविनाशः कृतः

करुणा प्रकटिता म्लेच्छा विलापिताः स ददातु नारायणस्तुभ्य वरम्॥]

कश्चित्कविर्दशावताररूपेण विष्णु स्तुवन्मङ्गलमभिनन्दति—येन विरचितमीनशरीरेण प्रलयजलधिमध्यतः. पञ्चजनासुराद्वेदाः समुद्धृताः; येन च कृतकूर्मरूपेण पिट्ठिहि पृष्ठेन महीमण्डल भूमण्डलं विधृतम्। किंच येन विधृतसूकररूपेण दन्ताभ्यां मेदिनीमण्डलमुद्धृतम्। येन च विरचितनरहरिरूपेण रिपोर्हिरण्यकशिपोर्वक्षो विदारितम्। अपच येन छलतनुधारिणा कृतवामनशरीरेण शत्रुर्वलिर्बद्धा पाताले धृत। अपिच प्राकृते पूर्वनिपातानियमात्क्षत्रियकुल येन धृतजामदग्न्यविग्रहेण तावि(कम्पि)तम्। येन च विरचितरामावतारेण

१. 'गृहीते पृष्ठे' रवि॰. २. 'दन्ते स्थापिता धरा' रवि॰.

दश मुखानि दशमुखस्य कर्तितानि। खण्डितानीत्यर्थः। येन च कृतरामकृष्णावतारेण कंसकेशिनोर्विनाशः कृतः। येन च धृतबुद्धशरीरेण करुणा दया प्रकटिता। येन च कृतकल्किरूपेण म्लेच्छा विलापिता विलीनाः कृताः। स नारायणो युष्मभ्यं वरमभिलषितफलं ददात्विति॥ यथा वा[णीभूषणे]—'शरदिन्दुसमानं व्यपगतमानं गायति दिक्षु तवैव यशः खरसामुनिदेवी विगलितनीवीकामकलाविकला बहुशः। पृथुवेपथुयुक्ता स्वगृहविमुक्ता स्वेदकलावलिमुग्धमुखी धरणीरमणेन्द्रो विकसदमन्दोदारसभासहवर्तिमुखी॥' उद्दवणिका यथा—॥ऽ, ॥ऽ, ऽ॥, ॥, ऽऽऽ, ।, ।ऽ, ऽ।, ऽ, ॥ऽ, २३×४=९२॥ सुन्दरी निवृत्ता॥

अथास्मिन्नेव प्रस्तारे ग्रन्थान्तरादद्रितनयानामकं वृत्तमुच्यते—

नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया॥ २७३॥

यत्र नगणजगणभगणजगणभगणा भवन्ति। अथ च जभौ जगणभगणौ, अथ च लघुगुरू भवतः साद्रितनया निगदिता। तन्नामकं छन्द इत्यर्थः॥

यथा—

खरतरशौर्यपावकशिखापतङ्गनिभभग्नदृप्तदनुजो
जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा।
भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह यः
क्षितिवलयेऽस्ति कंसशमनस्तवेति तमवोचदद्रितनया॥२७४॥

यथा वा—'विलुलितपुष्परेणुकपिशप्रशान्तकलिकापलाशकुसुमम्' इत्यादि भट्टिकाव्ये। उद्दवणिका यथा—॥।, ।ऽ।, ऽ॥, ।ऽ।, ऽ॥, ।ऽ।, ऽ॥, ।, ऽ, २३×४=९२॥ क्वचिदिदमेवाश्वललितमिति नामान्तरेणोक्तम्॥ अद्रितनया निवृत्ता॥

अथ मत्ताक्रीडं छन्दः—

मत्ताक्रीडं वस्वक्षाशायति मयुगनयुगमनुलघुगुरुभिः॥ २७५॥

यत्र वसुभिरष्टभिः, ततोऽक्षैः पञ्चभिः, तत आशाभिर्दशभिर्यतिर्यत्र तत्। किंच मगणद्वयं गुरुद्वयं यत्र तदनु चतुर्दशलघूनामन्ते गुरुः। एवं त्रयोविंशतिभिर्वर्णैः पदं यत्र तन्मत्ताक्रीडं नाम छन्दः॥

यथा—

मुग्धोन्मीलन्मत्ताक्रीडं मधुसमयसुरभमधुरमधुरसं
गाने पाने किंचिस्स्पन्दस्पदमगणनयनयुगलसरसिजम्।
रासोल्लासक्रीडत्कश्मजयुवतिवनयगनितभुजरमं
मान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघपदपरिचयदम्॥२७६॥

उद्दवणिका यथा—SSS, SSS, S, S, ||||||||||||, S, २३×४=९२ ॥ मत्ताक्रीडं निवृत्तम् ॥

अत्रापि प्रस्तारगत्या त्रयोविंशाक्षरस्य वृत्तस्य त्र्यशीतिलक्षाण्यष्टाशीतिसहस्राण्यष्टोत्तराणि षट्शतानि (८३८८६०८) भेदाः । तेषु कियन्तो भेदाः प्रोक्ताः। शेषभेदाः शास्त्रोक्तरीत्या प्रस्तार्य सूचनीयाः सुधीभिराकरतो वा समुदाहर्तव्या इति दिगुपदिश्यते ॥

अथ चतुर्विंशत्यक्षरप्रस्तारे दुर्मिलाछन्दोऽभिधीयते—

दुमिलाइ पआसहु वण्ण विसेसहु दीस फणीन्दह चारुगणा
भणु मत्त बतीसह जाणिअ सेसह अट्ठहि ठाम ठई सगणा ।
गण अण्ण ण किज्जइ कित्ति मुणिज्जइ लग्गइ दोस अणेअ जही
कहि तिण्णि विरामहि पाअह ता दह अट्ठ चउद्दह मत्त सही॥२७७

[दुर्मिलां प्रकाशयत वर्णान्विशेषयत दृष्टाः फणीन्द्रेण चारुगणा
भणिता मात्राभिर्द्वात्रिंशद्भिर्ज्ञायते शेषेणाष्टसु स्थानेषु स्थापयित्वा सगणान् ।
गणोऽन्यो न क्रियते कीर्तिर्ज्ञायते लगन्ति दोषा अनेके यत्र
कृत्वा त्रीन्विरामान्पादे ता दशस्वष्टसु चतुर्दशसु मात्रासु सत्यम् ॥]

भोः शिष्याः, दुमिलाछन्दसि प्रकाशयति(त),वर्णान् विसेसहु विशिष्टान् विशेषतो वा विशेषयत। तान्विशेषणविशिष्टान्कुरुतेत्यर्थः ॥ तान्विशिनष्टि—ये वर्णाः फणीन्द्रेण दर्वीकराधीश्वरेण पिङ्गलेन चारुगणत्वेन दीस दृष्टाः । ते च गणाः शेषेण द्वात्रिंशद्भिर्मात्राभिर्ज्ञायत इति भणिताः । तानाह—अष्टस्वपि स्थानेषु स्थापयित्वा सगणान् । अत्र चतुष्कलात्मकगणाष्टकस्थापनेन द्वात्रिंशन्मात्रात्मकं पदमिति भावः । अथ च त्रिवर्णात्मकगणाष्टकविन्यासेनैव वेदलोचन (२४) वर्णात्मकश्चरणो भवतीति भावः ॥ इतरगणनिषेधमाह—गणेति । अन्यो गणः सगणातिरिक्तोऽस्मिन्वृत्ते न क्रियते । अत एवेतरगणव्यावृत्त्या सगणकरणेन कवेः कीर्तिः मुणिज्जइ ज्ञायत इत्यर्थः ॥ अन्यगणकरणे दोषा अनेके लगन्ति यत्र ॥ यद्यप्यन्यगणकरणे प्रकृतप्रस्तारवर्णसंख्या नियत एव । तथापि सगणस्य चतुष्कलत्वादष्टसगणविरचनेन प्रोक्तरीतिसङ्ख्यितनयनानल (३२) कलाकत्वमेतस्य, अन्यथाधिककलगणत्वात्प्रोक्तनियमहीनतया छन्दोभङ्गभावदेतत्याशयः ॥ अथात्र यतिनियममाह—कहि इति । कृत्वा विरामत्रयं त्रिविधं पादे तत्र तावत् दिशासु प्रथमं दशमात्रासु, पुनरष्टमात्रासु, ततश्चतुर्दशमात्रासु यती सर्वं भवन्तीत्यर्थः । तत्प्रोक्तलक्षणं दुर्मिलानामकं वृत्तमिति ॥ भूषणेऽप्युक्तम्—'विनिधाय करं गुरुकममोदरमायुगुर्ल गुरु कर्णधरं सगणं च ततः गुरु पाणितलं वसुयुग्मं विनिधाय गुरुम् । इति दुर्मिलका फणिनायकभाषिता किल वर्णविरामकरा चतुरधिकविंशतिवर्णकृता कविता गुरुनायकशिक्षिता ॥'

दुर्मिलामुदाहरति—जहा (यथा)—

पहुदिज्जिअ वज्जअ सज्जिअ टोप्परु कङ्कण बाहु किरीट सिरे
　पइ कण्णहि कुण्डल जं रइमण्डल ठाविअ हार लुरत्त उरे ।
पइअङ्गुलि मुन्दरि हीरहि सुन्दरि कञ्चणविज्जुसुसज्जतणू
　तँह दूणउ सुन्दर तावअ णाअअ तं खण सुन्दरसेसधणू ॥

[प्रभुणा दापितं वाद्यं सज्जितं शिरस्त्राणं कङ्कणं बाहौ किरीटं शिरसि
　पातयित्वा कर्णयोः कुण्डलं यथा रविमण्डलं स्थापितो हारो लुठन्नुरसि ।
प्रत्यङ्गुलि मुद्रिका हीरैः सुन्दरी काञ्चनविद्युत्सुसज्जतनू
　तथा द्वावपि सुन्दरौ स्तावको नायकस्तत्क्षणं सुन्दरशेष(?)धनुषौ ॥]

*प्रभुणा नरपतिना दापित वाद्य प्रयाणार्थं दुन्दुभिनादः समाक्षस इत्यर्थः ॥ ततश्च सज्जीकृत टोप्परु शिरस्त्राणम् । 'टोपर मत्थअ' इति क्वचित्पाठः । तत्र शिरस्त्र मस्तके दत्तम् । कङ्कणो बाहौ दत्तः । शीर्षे किरीटो मुकुट दत्तम् । अपि च पातयित्वा कर्णयोः कुण्डल यथा रविमण्डल मार्तण्डमण्डलमिव भासमान स्थापितो हारो लुठन्नुरसि, प्रत्यङ्गुलि मुद्रिका हीरकैः सुन्दरी दत्ता । एव च काञ्चनविद्युद्वत् सुमज्जा तनुर्ययोः, तथा द्वावपि सुन्दरौ । कौ तावित्याह—स्तावकः कविः, नायकश्च । तत्क्षणे सुन्दरशेष(षो)धनुषौ विरेजतुरित्यर्थात् ॥ यथा वा[णीभूषणे]—'कति सन्ति न गोपकुले ललिताः स्मरतापहृताश्च विहाय च ता रतिनैलिकलारसलालसमानसमुग्धितमान[समान]रसम् । वनमालिनमालिनमस्य नमस्य चिरस्य [चिरस्य] वृथा भविता परितापवती भवती [भवती] युवतीजनससदि हासवथा ॥' उद्दवणिका यथा—॥ऽ, ॥ऽ, ॥ऽ, ॥ऽ, ॥ऽ, ॥ऽ, ॥ऽ, ॥ऽ, २४×४=९६ ॥ दुर्मिला निवृत्ता ॥*

अथ किरीटछन्दः—

ठावहु आइहि सक्कगणा तह मज्झ विसज्जहु वे वि तहापर
　णेउर सद्दजुअं तह णेउरए परिपाडइ सं(छ)क्कगणा कर ।
काहलजुग्गल अन्त करिज्जसु एपरि चौविस वण्ण पआसहु
　बत्तिस मत्त पअप्पअ लेखउ अट्ठ अआर किरीट विसेसहु॥२७९॥

[स्थापयतादौ शक्रगणं तथा शल्यं विसर्जयत द्वावपि तदुपरि
　नूपुरं शब्दयुगं तथा नूपुरमेतया परिपाट्या द्वादश शक्रगणं कुरुत ।

1. 'रज्जअटोप्पर मत्थअ (राज्यं शिरस्त्रं मस्तके)' टी०. २. 'रज्जुगुणगतान् (रज्जुगुणगतान्)' टी०. ३. 'बहु गन्द (गन्द(?)गर्भा)' टी०. ४. 'भज (भज)' टी०.

काहलयुगलमन्ते कुर्वनयैव परिपाट्या चतुर्विंशतिवर्णान्प्रकाशयत
द्वात्रिंशन्मात्राश्च पदे पदे लेखश्चाष्टौ भकाराः किरीटं विशेषयत ॥]

भोः शिष्याः, स्थापयतादौ शक्रगणमाद्यन्तस्थितगुरुकं षट्कलमित्यर्थः। तथा तस्याग्र सल्ल विसज्जहु वे वि द्वौ शल्यौ लघुद्वयं विसर्जयत। तदुपरि तदुपरि नूपुरं गुरुं विसर्जयत इत्यन्वयः। ततः शब्दयुगं लघुद्वयम्। तथा नूपुरं गुरुम्। एपरि अनया परिपाट्या पञ्च गणाः पुनः कर्तव्याः। एवं द्वादश गणाः। आदौ शक्रगणं कृत्वान्ते काहलयुगलं लघुद्वयं कुरु। अनयैव च रीत्या चतुर्विंशतिवर्णान् प्रकाशयत। द्वात्रिंशन्मात्राश्च पदे पदे कुरुतेति शेषः॥ प्रकारान्तरेण गणनियममाह—अष्टौ भगणान्गुर्वादिकान्गणान्विसर्जयत नान्यान्। एतदतिरिक्तगणदाने मात्रानियमभङ्गाच्छन्दोभङ्गत्वमिति भावः॥ ........................ ॥ वाणीभूषणे तु—'पदयुगं कुरु नूपुरसुन्दरमत्र करं वररत्नमनोहरवक्त्रयुगं कुसुमद्वयसंगतकुण्डलगन्धयुगं समुपाहर। पण्डितमण्डलिकाहृतमानसकल्पितसज्जनमौलिरसालय पिङ्गलपन्नगराजनिवेदितवृत्तकिरीटमिदं परिभावय॥'

किरीटमुदाहरति—जहा (यथा)—

बप्पहभत्ति सिरे जिणि लिज्जिअ रज्ज[1] विसज्जि चले बिणु सोदर
सुन्दरि सङ्गहि लग्गि इक्कल्लिअ मारु विराधकबन्ध तहा धर।
मारुइ मिलिअ वालि वहल्लिअ रज्जु सुगीवहि दिज्जु अकट्टअ
बन्धि समुन्द विघालिअ रावण सो तुम राहव दिज्जउ णिब्भअ।

[पितृभक्तिः शिरसि येन गृहीता राज्यं विसृज्य चलितो विना सोदरं
सुन्दरी सङ्गे लग्नैकाला मारितौ विराधकबन्धौ तथा धृत्वा।
मारुतिर्मिलितो वाली विघातितो राज्यं सुग्रीवाय दत्तमकष्टेन
बद्ध्य समुद्रं विघातितो रावणः स तुभ्यं राघवो ददातु निर्भयम्॥]

येन रामेण पितृभक्तिः शिरसि गृहीता। यश्च राज्यं विसृज्य चलितो विना सोदरम्। येन सहैकलैव सुन्दरी सीता लग्ना। ततो येन विराधः कामः कबन्धो योजनबाहुर्धृत्वा मारितः। ततो मारुतिर्हनुमान्मिलितो यस्य। वाली च येन व्यापादितः। तद्राज्यं सुग्रीवाय दत्तमकष्टेनानायामेनेत्यर्थः। बद्धा च समुद्रं विघातितो रावणो दशकण्ठो येन। स राघवो दाशरथिस्तुभ्यं निर्भयं ददात्विति॥ यथा वा[णीभूषणे]—'मल्लि रुते मलिनामि किमित्यलिना रहिता भवती यत यद्यपि सा पुनरेति शरद्रजनी तव या तनुते धवलानि जगन्त्यपि। षट्पदकोटिविघटितकुड्मलकोटिविनिर्गतसौरभसंपदि न त्वयि कोऽपि पिपासति

1. 'तज्जिअ रज्ज वणन्त चले बिण सोदरसुन्दरि सङ्गहि लग्गिअ मारु (त्यक्तं राज्यम्। वनान्ते पुनश्चलितः। सोदरसुन्दर्या सह लग्नौ। मारितो)' इति.

सादरमन्तरमुत्तरनागरससादि ॥' उद्दवणिका यथा—ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, २४×४=९६ ॥ किरीटो निवृत्तः ॥

अथास्मिन्नेव प्रस्तारे ग्रन्थान्तरात्तन्वीनामकं छन्दोऽभिधीयते—

भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी॥२८१॥

भोः शिष्याः, यत्र भूतैः पञ्चभिः, मुनिभिः सप्तभिः, इनैर्द्वादशभिर्यतिर्विश्रामो भवति। अथ च—भतना भगणतगणनगणाः, अथ च—स्भौ सगणभगणौ, अथ च—भगणनगणय-गणा यदि भवन्ति तदा तन्वीनामकं छन्दो भवतीति ॥

यथा—

माधव मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः

कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यधिगततनुदाहा ।

पद्मपलाशैर्विरचितशयने देहजसंज्वरभरपरिदूनै-

र्निश्वसती सा मुहुरतिपरुषं ध्यानलये नव नियमति तन्वी॥२८२॥

उद्दवणिका यथा—ऽ॥, ऽऽ।, ।॥, ॥ऽ, ऽ॥, ऽ॥, ।॥, ।ऽऽ, २४×४=९६ ॥ तन्वी नि-वृत्ता ॥ अत्रापि प्रस्तारे चतुर्विंशत्यक्षरस्यैका कोटिः सप्तषष्टिलक्षाणि सप्तसप्ततिसहस्राणि षोडशोत्तर शतद्वय(१६७७७२१६) भेदाः। तेषु दिङ्मात्रमुदाहृतम्। शेषभेदाः शास्त्रोक्त-रीत्या प्रस्तार्य सुधीभिरुदाहर्तव्या इत्यलमिति ॥

अथ क्रमप्राप्ते पञ्चविंशत्यक्षरप्रस्तारे ग्रन्थान्तरात्क्रौञ्चपदाछन्दो लक्ष्यते—

क्रौञ्चपदा स्याद्भो मसभाश्चेदिषुशरवसुमुनियतिरनु लयुगैः॥२८३॥[1]

भो. शिष्याः, यत्र पूर्वं भो भगणः, ततो मसभा मगणसगणभगणा भवन्ति । अथ च—इषुभिः पञ्चभिः, शरैः पञ्चभिः, वसुभिरष्टभिः, मुनिभिः सप्तभिश्चेद्यतिर्विश्रामः किंच भमसभानन्तरमनु लघुर्गुरुर्वन्तिद्वादशलघुभिः संभूय पञ्चविंशतिभिर्वर्णैर्यत्र पद तदा सा क्रौ-ञ्चपदा तन्नामकं वृत्तं भवतीति ॥

यथा—

क्रौञ्चपदालीचित्रिततीरा मदकलखगकुलकलकलरुचिरा

फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरमसकरी ।

फेनविलासप्रोज्ज्वलहासा ललिततलहरिभरपुलकितसुतनुः

पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिमकिरणजा॥२८४॥

उद्दवणिका यथा—ऽ॥, ऽऽऽ, ॥ऽ, ऽ॥, ॥॥॥॥॥॥, ऽ, २५×४=१०० ॥ क्रौञ्च-पदा नवमाक्षरन्युलम् । तत्रोद्दवणिकायां तृतीयो मगण इति वेदितव्यमिति ॥ अत्रापि

---

1. 'मसगा धेदिषुशरवसुमुनियतिमनुनगुगैः' इति छन्दोमञ्जरीपुस्तकपाठः.

प्रस्तारगत्या पञ्चविंशत्यक्षरस्य कोटित्रय, पञ्चत्रिंशल्लक्षाणि, चतुःपञ्चाशत्सहस्राणि, द्वात्रिंशदुत्तराणि चतुःशतानि च (३३५५४४३२) भेदाः। तेषु दिगुपदर्शनार्थमेकं वृत्तमुक्तम्। वृत्तान्तराणि च प्रस्तार्य सुधीभिरूह्यानीति शिवम्॥

अथ षड्विंशत्यक्षरप्रस्तारे ग्रन्थान्तरादेव भुजङ्गविजृम्भितं छन्दोऽभिधीयते—

वस्वीशाश्वच्छेदोपेतं ममतनयुगरसलगैर्भुजङ्गविजृम्भितम्॥२८५॥

भोः शिष्याः, यद्वसुभिरष्टभिः, ईशैरेकादशभिः, अश्वैः सप्तभिश्च छेदोपेतं विश्रामयुक्तम्, अथ—मगणद्वयतगणनगणनयुगलरगणसगणलघुगुरुभिः षड्विंशत्यक्षरैः पदं यत्र तद्भुजङ्गविजृम्भितं नाम वृत्तं भवतीति॥

यथा—

हेलोदञ्चद्यच्चत्पादप्रकटविकटनटनभरो रणत्करतालक-

श्चारुप्रेङ्खच्चूडाबर्हैः श्रुतितरलनवकिसलयस्रगङ्कितहारधृक्।

त्रस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुतिरच्युतः

पायान्नश्छिन्दन्कालिन्दीह्रदकृतनिजवसतिबृहद्भुजङ्गविजृम्भितम्॥

उद्वणिका यथा—SSS, SSS, SSI, III, III, III, SIS, IIS, I, S, २६×४=१०४॥ भुजङ्गविजृम्भितं निवृत्तम्॥ अत्रापि प्रस्तारगत्या रसलोचन(२६)वर्णस्य कोटिषट्कमेकसप्ततिलक्षाणि वसुसहस्राणि चतुःषष्ट्युत्तराण्यष्टौ शतानि च (६७१०८८६४) भेदाः। तेष्वेको भेदोऽभिहितः शेषभेदा विशेषबुद्धिभिराकरात्प्रस्तारनीत्या वा प्रस्तार्य स्वेच्छया नामान्यारचय्य सूचनीया इति दिङ्मात्रमुपदिश्यत इति सर्वमवदातमिति॥

एवं चैकाक्षरादिषड्विंशत्यक्षरपर्यन्तं प्रत्येकं प्रस्तारपिण्डसंख्या 'रसलोचनसप्ताश्वचन्द्रदृग्वेदवह्निभिः। आत्मना योजितैर्वामगत्या ज्ञेया मनीषिभिः॥' इति निर्दिष्टदिशा त्रयोदश कोटि(?)र्द्विचत्वारिंशल्लक्षाणि सप्तदश सहस्राणि षड्विंशत्युत्तराणि सप्त शतानि च (१३४२१७७२६) समस्तप्रस्तारस्य 'छव्वीसा सत्त सआ तह सत्तारह सहस्साइं। चाआलीसं लक्ख तेरह कोडी समग्गाइ॥' इति गाहूच्छन्दसा पूर्वोक्तपिण्डसंख्या सिंहावलोकनशालि भिरनुसधातव्येति सर्वमनवद्यम्॥

अथ प्रस्तारोत्तीर्णानि मुक्तकानि कानिचिद्वृत्तानि वर्णनियमसहितान्याह—तत्र प्रथमं त्रिभङ्गीछन्दः—

सअलपअहि पढम भण दह सुपिअ-

गण भगणा तह अन्ता गुरजुग्गा हत्थ पलन्ता

---

१. 'षड्विंशतिः, सप्त शतानि, तथा सप्तदश सहस्राणि। द्विचत्वारिंशल्लक्षाणि त्रयोदश कोट्यः समग्राणि॥' इति च्छाया. २. 'गुरुकान्ता. हस्तागणान्ता (गुरुः कान्तो हस्तगणः)' इति.

पुण वि गुरुजुअल लहुजुअल वलअ-
जुअ कर जम्पइ णाआ कइराआ सुन्दरकाआ।
पअपअ तेणहि कहि गअगमणि ससि-
वअणि बालिसमत्ता कर जुत्ता एहु णिरुत्ता
गणि भण सव पअ वसुरस एस पअ
पअ पअला तिअभङ्गी सुहअङ्गी सज्जणसङ्गी ॥ २८७ ॥

[सकलपदेषु प्रथमं भण दश सुप्रिय-
गणान्भगणस्तथान्ते गुरुयुग्मं हस्तः पतति
पुनरपि गुरुयुगलं लघुयुगलं वलय-
युगं कुरु जल्पति नागः कविराजः सुन्दरकायः।
पदे पदे एतावत्कथय गजगमने शशि-
वदने द्विचत्वारिंशन्मात्राः कुरु युक्ता एतन्निरुक्तं
गणयित्वा भण सर्वपदेषु वसुरसैकं पदे
पदे पतति त्रिभङ्गी सुखाङ्गी सज्जनसङ्गी ॥]

हे गजगमने हे शशिवदने। सकलपदेषु प्रथमं भण दश सुप्रियगणान् लघुद्वयात्मकग-णान् भण। तथान्ते भगणः, ततो गुरुयुग्मं ततो हस्तः सगणः पतति। पुनरपि गुरुयुग-लम्। अथ च लघुयुगलम्। ततो वलययुगलं गुरुयुगं कुरु। एवं यत्र चतुस्त्रिंशद्वर्णाः पदे पतन्ति। सुखान्यङ्गानि यस्य। सज्जनेषु सङ्गो यस्य तादृशः, सुन्दरकायो रमणीयशरीरः कविराजो नागः पिङ्गलस्त्रिभङ्गीछन्द इति जल्पति। हे मुग्धे, पदे पदे एतावदेव क-थय। अथ च द्विचत्वारिंशन्मात्रा युक्ताः कुरु। एतन्निरुक्तं गणयित्वा सर्वपदेषु द्विचत्वा-रिंशच्चतुर्गुणिताः—वसवोऽष्टौ रसाः षट् एक चेति वामगत्याऽष्टषष्ट्युत्तरशतं (१६८) मात्राः पअपअ चतुःपदे पअला पतन्तीत्यर्थः। पदं चतुस्त्रिंशद्वर्णचतुष्केण षट्त्रिंशदधिकं शतं (१३६) वर्णा यत्र तदेवोक्तलक्षणं त्रिभङ्गीनामकं छन्दो भवतीति समुदितोऽर्थः॥

त्रिभङ्गीमुदाहरति—जहा (यथा)—

सभइ जभइ हर वलइअविसहर
तिलइअसुन्दरचन्दं मुणिअंणन्दं सुहकन्दं

१. 'गहअ' गौ०. २. 'तरहि' तौ०. ३. 'रमजुग सअ पअ पअला', रौ०. ४. 'आणन्द तिलअन्द' तौ०

वसहगमण करतिसूल डमरुधर
 णअणहिँ दाहुअणङ्ग रिउभङ्ग गोरिअधङ्गम् ।
जअइ जअइ हरि भुजजुअधरुगिरि
 दहमुहकंसविणासा पिअवासा साअरवासा
वलिछलिमहिअलु असुरविलअकरु
 मुणिअणमाणसहंसा सुहवासा उत्तमवंसा ॥ २०८

[जयति जगति हरो वलयितविषधर-
 स्तिलकितसुन्दरचन्द्रो मुन्यानन्दः सुखकन्दो
वृषभगमनः करत्रिशूलो डमरुधरो
 नयनेन दग्धानङ्गो रिपुभङ्गो गौर्यर्धाङ्गः ।
जयति जगति हरिर्भुजयुगधृतगिरि-
 र्दशमुखकंसविनाशः पीतवासाः सागरवासो
महीतलच्छलितवलिरसुरविलयकरो
 मुनिजनमानसहंसः शुभ्रभास उत्तमवंशः ॥]

प्रथमार्धेन हरं स्तौति—जगति हरः शिवो जयति। कीदृशः। वलयिता विषधराः सर्पा येन। भुजगकङ्कण इत्यर्थः। पुनः—तिलकितः सुन्दरश्चन्द्रो येन। चन्द्रशेखर इत्यर्थः। पुनः—मुनीनामानन्दः। अत एव सुखकन्दः। पुनः—वृषभगमनः। पुनः—करे त्रिशूलं यस्य स तथा। पुनः—डमरुकधरः। पुनः—नयनेन भालस्थतार्तीयलोचनेन दग्धोऽनङ्गो येन स तथा। पुनः—रिपोर्भङ्गो यस्मात्तादृशः। पुनः—गौरी पार्वती अर्धाङ्गे यस्य स तादृशः॥ अथ चरमार्धेन हरिं स्तौति—जगति हरिर्विष्णुर्जयति च। कीदृशः। भुजयुगेन धृतो गोवर्धनो गिरिर्येन स तथा। पुनः—दशमुखकंसविनाशनः। पीतवासाः पीताम्बरधर इत्यर्थः। पुनः—सागरवासः कृतक्षीरनीरधिशयन इत्यर्थः। येन वलिश्छलितो महीतले तादृशः। येन चासुराणां विलयः कृतः। यश्च मुनिजनानां मानसे हंस इवोपास्यमानः। अत एव शुभ्रभासः श्वेतकान्तिः सात्त्विकस्वभावत्वाद्वा तादृश इति। पुनः—उत्तमो वंशो यादववंशो यस्य तादृश इति॥ उद्दवणिका यथा—॥, ॥, ॥, ॥, ॥, ॥, ॥, ॥, ॥, ॥, ऽ॥, ऽऽ, ॥ऽ, ऽ, ऽ, ।, ।, ऽ, ऽ, ३४×४=१३६ ॥ ४२×४=१६८ ॥ मात्राप्रस्तारे एकस्य कथनाद्वितीय त्रिभङ्गीवृत्तं निवृत्तम्॥

१. 'वलिछलि महि धरु (वलिं छलयित्वा मही धृता)' इति०. २. 'गण' इति०.

अथ शालूरछन्दः—

कण्णेक्क पढम दिअ सरसपअह धुअं पअहि पलइ तह ठविअ करं
सल्लूर सुभणि मणहरणि रअणिपहुवअणि कमलदलणअणि वरम् ।
बत्तीसह मत्त पउ ठव हु पअलिअ तह अ मह करअल दिअगणअं
मत्ता वणि सुललिअ छउ चउकल किअ कइवर दिणअरमु अअ पअम्

[कर्ण एकः प्रथमं द्विजाः सरसपदा ध्रुवं पदेषु पतितास्तथा स्थापयित्वा करं
शालूरं सुभणितं मनोहरणि रजनीप्रभुवदने कमलदलनयने वरम् ।
द्वात्रिंशन्मात्राः पदे स्थापय खलु प्रकटितस्तथा च मध्ये करतलं द्विजगणश्च
मात्राभिर्वर्णैश्च सुललिताः पट् चतुःकला कृता कविवरेण दिनकरभूरादौ
पतितः ॥]

हे मुग्धे, यत्रैकः कर्णो गुरुद्वयात्मको गणः प्रथमं (पतितः) द्विजाश्चतुर्लघुका गणा, सरसपदाः ध्रुवं निश्चितं पदेषु पतिताः । ततः स्थापयित्वा करं गुर्वन्तं सगणं हे मनोहरणिः हे रजनीप्रभुवदने चन्द्रानने, हे कमलदलनयने, तत् वरमतिसुन्दरं शालूरनामकं छन्दः सुतरां भणितम् । छान्दसिकैरित्यर्थः । तत्र पदे मात्रानियममाह—पउ पदे द्वात्रिंशत् (३२) मउ मात्राः हु खलु ठव स्थापय । वर्णाः प्रत्यक्षा एव । प्रकारान्तरेणोद्दवणिकामाह—पअलिअ इति । तह अ तथा च करतलं सगणं प्रकटित इति प्राकट्यमवसानं लक्षयति । तथा च सगणोऽन्ते । तन्मध्ये द्विजगणाश्चतुर्लघुकाः । तान्विशिनष्टि—मात्राभिर्वर्णैश्च सुतरां ललिता मनोरमाः । चउकल चतुष्कलाः छउ पट् किअ कृताः कविवरेण पिङ्गलेनेति । यत्र च दिणअरमु दिनकरभूः कर्णो द्विगुर्वात्मको गणः अअ आदौ पअं पतितः । एवमुक्तं भवति—चतुष्कलाः षड्गणा मध्ये, आदौ कर्णः, अन्ते सगणो यत्र तच्छालूरनामकं छन्द इति ॥ वाणीभूषणे तु—'कर्णद्विजवरगणव(भि ?)तयनगणमिह रचय ललितमतिकुसुमगणं नारीगणकलितकलितशरकुसुमसुकलकुसुमवरकृतरसनम् । नागाधिपतिगदितमिति च परिमुषितसकलकविनृपकुलमतिरुचिरं शालूरममलमिह कलय कमलमुखि मुदितविबुधजनहृदयवरम् ॥'

शालूरमुदाहरति—जहा (यथा)—

जं फुल्ल कमलवण बहइ लहु पवण भमइ भमरकुल दिसि विदिसं
झंकार पलइ वण रवइ कुहलगण विरहिअगणमुह अइविरसम् ।
आणन्दिअ जुअजण उलसु रहसमण सरसणलिणिदलकिअसअणा
पलट्टु सिसिररिउ दिवस दिघर भउ कुसुमसमअ अब अविअ वणा ॥

[यत्र फुल्लं कमलवनं वहति लघु पवनो भ्रमति भ्रमरकुलं दिक्षु विदिक्षु
झंकारः पतति वने रौति कोकिलगणो विरहिगणमुखेऽतिविरसम्।
आनन्दिता युवजना उल्लसितं रभसान्मनः सरसनलिनीदलकृतशयनः
प्रत्यावृत्तः शिशिरऋतुर्दिवसा दीर्घा भूताः कुसुमसमयोऽप्यागतो वने ॥]

कश्चिद्वसन्तलक्षणेन प्राप्तं सुरभिसमयमुपवर्णयति—यत्र फुल्लं कमलवनम्, पवनः समीरणो लघु मन्दं वहति, भ्रमरकुलं दिक्षु विदिक्षु भ्रमति। किंच वने झंकारः पतति। यतः कोकिलगणः पिकप्रकरो विरहिगणानां मुखे संमुखेऽतिविरसं यथा स्यात्तथा रौति। कूजतीत्यर्थः। यत्र च आनन्दिता युवजनाः। उल्लसितं रभसान्मनो यस्मिन्नेवंविधः। सरसनलिनीदलकृतशयनः कुसुमसमय आगतो वने शिशिरर्तुः पश्चात् प्रत्यावृत्तः। अत एव वसन्तसमयारम्भाद्दिवसा दीर्घा जाता इति ॥ यथा वा[णीभूषणे]—'गोवर्धनगिरिधरमुपचितदितिसुतपरमहृदयमदशमनकरं व्यर्थीकृतजलधरगुरुवर्ष(र्षं?)णभरगतभयनिजकुलदुरितहरम्। नन्दालयनिवसनकृतवनविलसनविहितविविधरसरभसपरं संवीतवसनधरमणकरचरणमनुसर सरसिजनयनधरम् ॥' उट्टवणिका यथा—ऽऽ,॥॥, ॥॥, ॥॥, ॥॥, ॥॥, ॥॥, ॥ऽ, २९×४=११६ ॥ शालूरो निवृत्तः ॥

अथ सवैया छन्दः—

छदह मत्तह पढमहि दिज्जह मत्त एअत्तिस पाए पाअ
सोलहपश्चदहहि जइ किज्जह अन्तर अन्तर ठाए ठाइ।
चौबीसा स मत्त भणिज्जइ पिङ्गल जम्पइ छन्दसु सार
अन्त अ लहूअ लहुअ दिज्जहु णाम सवैआ छन्द अपार॥२९१॥

[षोडश मात्राः प्रथमं दीयन्तां मात्रा एकत्रिंशत्पादे पादे
षोडशपञ्चदशाभ्यां यतिः क्रियतेऽन्तरान्तरा स्थापयित्वा।
चतुर्विंशत्युत्तरं शतं मात्रा भण्यन्ते पिङ्गलो जल्पति छन्दःसु सार-
मन्ते च लघुकं लघुकं दत्त्वा नाम सवैआ छन्दोऽपारम् ॥]

भोः शिष्याः, षडधिका दश षोडश मात्राः प्रथमं दिज्जइ दीयन्ताम्। एतेन प्रथमा विरतिः षोडशमात्रासु कर्तव्येत्याशयः। पादे पादे प्रतिपादमेकत्रिंशन्मात्राः। तेन द्वितीया विरतिः पञ्चदशमात्रासु विधातव्येति भावः। अत एव षोडशपञ्चदशाभ्यां यदि विरतिः क्रियते अन्तरान्तरा स्थापयित्वा विरतिमित्युपरिष्टात्। समुदितमात्रागणनयाह— चतुर्विंशत्युत्तरं शतं मात्रा भण्यन्ते यत्र तत्पिङ्गलच्छन्दःसु सारं सारभूतमपारं नानाकविसंप्रदायसिद्धम्, अन्ते च लघुकं लघुकं नियमेन दत्त्वा सवैआनामकं छन्दो भवतीति ॥

१. अशीत्यक्षरस्य लघुत्वमाधर्षणीयम्.

इदमेवोदाहरणम् । नानाकविवृन्दिकृतं वा प्रोक्तलक्षणं संवार्य (?) समुदाहर्तव्यमिति ॥ उ-
द्दवणिका यथा—ऽ॥ऽ॥ ॥॥ऽ॥१६+ऽ॥ऽ॥ऽऽऽ।१५=३१×४=१२४॥ सवैआ निवृत्ता॥

अथ प्राकृतसूत्रेण [वर्णवृत्त]प्रोक्तानां वृत्तानां नामान्यनुक्रामति—

सिरि काम महू मही सारु ताली पिआ ससी रमणा जाण पंचाल
मइन्दा मन्दर कमल तिण्णा धारी णगाणी संमोहा हारी हंसा
जमका सेसा तिह्ला विज्जोहा चउरंसा मन्थाणा संखणारी मिल्ला
मालई दमणअ समाणिआ सुवासा करहंचा ता सीसा विज्जु-
मालि पमाणि मल्लिका तुंगा कामला महालच्छी सारङ्गिका पाइत्ता
कमला विम्बो तोमरु रूपमाला संजुत्ता चम्पअमाला आजाण
सारवती सुसमा अमिअगइ वन्धू सुमुही णिका दोधअ सालिणी
दमणा सेणिक मालतीमाला एक्का इन्दउ तह विन्दा उवेजाये विज्जाहर
भुअङ्गा लच्छीहर तोलआ सारङ्ग मोत्तिकदामा मोदका
तरलणअणि तह सुन्दरि मोया तारअ कन्दो पङ्कावलि वसन्त-
तिलअ चक्क भमरावलि छन्दा सारङ्गिक चामर तह णिसिपाल मणहंसा
मालिणि सरभा णराउ णीला तह चंचला वम्भारूअउ जाणिआ ॥
पुहवी मालाहरा मंजीरा जाणहु कीलाचन्दा चचरि सद्दूलसट्ट-
अ जाणहु चन्दमाला धवलङ्गा सम्भू गीआ तह गण्टका सद्दरआ
णरेन्द हंसी सुन्दरिआ दुम्मीला तह मुणहु किरीटअ छंदा विअ
तिअभङ्गी सालूरा सवैआ । कइपिङ्गल भणिअ पञ्चगल सउ सव्वा-
जाणहु घरकइ मुण हव्व ॥ २९२ ॥

एतानि पञ्चाधिकशतरूपाणि सर्वाणि स्थानक कृत्वा ज्ञातव्यानीति । अन्यान्यपि प्र-
स्तारगत्या स्वबुद्ध्या सुधीभिरूह्यानि छन्दांसीत्युपरम्यते ॥

अथ ग्रन्थान्तराद्दण्डकलक्षणानि सोदाहरणान्युच्यन्ते—

यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ॥

यदि नगणयुगलानन्तरं सप्त रेफाः सप्त रगणा यदि भवन्ति । तदा चण्डवृष्टिप्रपातो नाम
दण्डको भवतीति । अत एव 'दण्डको मोरा–' इति पिङ्गलसूत्रं मध्यस्थानुपेनाप्यपाठि(?)।

---

* 'तह छअ अग्गल सअ छन्दाइअ जम्पइ पइ राआ धारिहरणामसहिअफणिन्दा ।

यथा—

प्रलयघनवटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं
सपदि समवलोक्य सव्येन हस्तेन गोवर्धनं नाम शैलं दधल्लीलया।
कमलनयन रक्ष रक्षेति गर्जत्रसन्मुग्धगोपाङ्गनानन्दितो
गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय वः २९४

उद्दवणिका यथा ।।।, ।।।, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, २७×४=१०८॥
चण्डवृष्टिप्रपातो निवृत्तः ॥

अथार्णादयः—

प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥

---

(इत्येवं षडधिक शत छन्दांसि पिङ्गल इति नाम्ना प्रसिद्धः फणीन्द्रः कविराजो जल्पति)' इति रवि०. एतच्च षडधिकत्वं सवैयावृत्तस्य पृथग्गणनेन शिखरिणी-मौक्तिकहारयोर्वर्धनेन ज्ञेयम्. तयोर्लक्षणोदाहरणे त्वेवं पृथिवी-मञ्जीराछन्दसोर्मध्ये दृश्येते—

'अथ शिखरिणी—

धआ कण्णा कण्णा सुपिअजुअल गन्धवलअं
उणो हारो णारी ठइअ चरणे अन्त चमरम्।
दहासत्तावण्णा णवइ लहुआ अट्ठइ फणी
फणीराआ जम्पे कमलमुहि एसा सिहरिणी ॥

जहा—

पर जोण्हा उण्हा गरलसरिसो चन्दणरसो
खरक्खारो हारो मलयपवणा देहदवणा।
मिणाली बाणाली जलदि व जलद्दा तणुलदा
वइट्ठा ज दिट्ठा कमलवअणा दीहणअणा ॥

अथ मौक्तिकहारः—

दिअ पिय गुरु गन्ध कण्णा लआरा ठवीआ तहा
पुण वि चमर दुण्ण सद्दा सुसज्जा करीआ तहा।
तहवि अणिअ दुण्णवद्धा वि सद्दा वि हारा दि ए
कमलवअणि मोत्तिहारा फणिन्दा भणिन्दा पिए ॥.

जहा—

अमिअवमिअचन्दविम्बेमुही प्रेमवती सा जहा
विमलकमलफुल्लओट्ठा अणेसा फुरन्ता तहा।
दसणनिततिसुद्धकुन्दाकणीआ धरीआ जहा
अहरिमलचन्पुपुरिरसरिसा करीआ तहा ॥' इति ॥

यदि नगणद्वयानन्तरमेव प्रतिचरणं विवृद्धरेफाः क्रमात् समधिकरगणास्तदा अर्ण-अर्णव-व्याल-जीमूत-लीलाकर-उद्दाम-शङ्खादयो दण्डकाः स्युरिति । एतेन नगणयुगल-वसुरेफैणार्णः । ततः परे क्रमाद्रगणवृद्ध्याज्ञेयाः । आदिशब्दादन्येऽपि रगणवृद्ध्या स्वबुद्ध्या नामसमेता दण्डका विधेया इत्युपदिश्यते ॥

तत्रार्णो यथा—

जय जय जगदीश विष्णो हरे राम दामोदर श्रीनिवासाच्युतानन्त नारायण

त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर श्रीपते माधव।

गरुडगमन कृष्ण वैकुण्ठ गोविन्द विश्वंभरोपेन्द्र चक्रायुधाधोक्षज श्रीनिधे

बलिदमन नृसिंह शौरे भवाम्भोधिघोरार्णसि त्वं निमज्जन्तमभ्युद्ध-रोपेत्य माम् ॥ २९६ ॥

उट्टवणिका यथा—III, III, SIS, SIS, SIS, SIS, SIS, SIS, SIS, SIS, ३०×४=१२० ॥ अर्णो निवृत्तः । एवमन्येऽपि क्रमाद्रेफविवृद्धचरणा दण्डकाः समुन्नेया इति ॥

अथ प्रचितको दण्डकः—

प्रचितकसमभिधो धीरधीभिः स्मृतो दण्टको नद्वयादुत्तरैः सप्तभिर्यैः॥२९७

नगणद्वयादुत्तरैः सप्तभिर्यैर्यगणैर्धीरधीभिः सप्तविंशतिवर्णात्मकचरणः प्रचितकाख्यो द-ण्डकः स्मृतः ॥

यथा—

मुरहर यदुकुलाम्भोधिचन्द्र प्रभो देवकीगर्भरत्न त्रिलोकैकनाथ

प्रचितकपट सुरारिप्रजोद्दामदन्तावलस्तोमविद्रावणे केसरीन्द्र ।

चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्धकार

प्रणतजनपरितापोमदावानलच्छेदमेघ प्रसीद प्रसीद प्रसीद ॥२९८॥

उट्टवणिका यथा—III, III, ISS, ISS, ISS, ISS, ISS, ISS, ISS, २७×४=१०८ ॥ प्रचितको निवृत्तः ॥

अथाशोकपुष्पमञ्जरीदण्डकः—

यत्र दृश्यते गुरोः परो लघुः क्रमात्स उच्यते बुधैरशोकपुष्पमञ्जरीति२९९

यत्र गुरोः परः क्रमाल्लघुर्दृश्यते रगणजगणक्रमेण रगणान्तं नवगणा उत्पन्ना यद्युग्मे-नवर्णात्मका दृश्यन्ते यत्रासावशोकपुष्पमञ्जरीति नाम दण्डको बुधैरुच्यते इति ॥

यथा—

मूर्ध्नि चारुचम्पकस्रजासलीलवेष्टनं लसल्लवङ्गचारुचन्द्रिका कचेषु
कर्णयोरशोकपुष्पमञ्जरीवतंसको गलेऽतिकान्तकेसरोपक्लृप्तदाम।
फुल्लनागकेसरादिपुष्परेणुभूषणं तनौ विचित्रमित्युपात्तवेष एष
केशवः सदा पुनातु नः सुपुष्पभूषितः स मूर्तिमानिवागतो मधुर्विहर्तु-
मत्र ॥ ३०० ॥

उद्दवणिका यथा—SIS, ISI, SIS, ISI, SIS, SIS, SIS, ISI, ISI, २८×४=११२ ॥
अशोकपुष्पमञ्जरी निवृत्ता ॥

अथ कुसुमस्तवको दण्डकः—

सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति बुधाः कुसुमस्तवकम् ३०१

यत्र खलु निश्चयेन सकलोऽपि सगण एव भवेत् । सगणनवकं भवेदतथ सप्तविंशति-
वर्णात्मकपदं तं दण्डकं बुधाः कुसुमस्तवकं प्रवदन्ति ॥

यथा—

विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशां कुचकुड्मलगो
भ्रमरप्रकरेण यथादृतमूर्तिरशोकलताविलसत्कुसुमस्तबकः ।
स नवीनतमालदलप्रतिमच्छविबिभ्रदतीव विलोचनहारिवपु-
श्चपलारुचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगतः॥३०२

उद्दवणिका यथा—IIS, IIS, IIS, IIS, IIS, IIS, IIS, IIS, IIS, २७×४=१०८॥
कुसुमस्तवको निवृत्तः ॥

मत्तमातङ्गलीलाकरः—

यत्र रेफः परं स्वेच्छया गुम्फितः स स्मृतो दण्डको मत्तमातङ्गली-
लाकरः ॥ ३०३ ॥

यत्र रेफो रगणः स्वेच्छया नव दशैकादश वा परं गुम्फितः स दण्डको मत्तमातङ्ग-
लीलाकर इति नाम्ना स्मृतः ॥

यथा—

हेमगौरे वसानोंऽशुके शक्रनीलासिते वर्ष्मणि स्पष्टदिव्यानुलेपाङ्किते
तारहारांशुवक्षोनभश्चित्रमाल्याञ्चितो भव्यभूपोज्ज्वलाङ्गः समं सीरिणा
अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेन लीलापरीहासोर्मिकौतूहलैः
कंसरङ्गाद्रिगः पातु वश्चक्रपाणिर्गतिक्रीडया मत्तमातङ्गलीलाकरः ३०४

उट्टवणिका यथा—SIS, SIS, SIS, SIS, SIS, SIS, SIS, SIS, SIS, । मत्तमातङ्गलीलाकरो निवृत्तः ॥

अथानङ्गशेखरः—

लघुर्गुरुर्निजेच्छया यदा निवेश्यते तदैष दण्डको भवत्यनङ्गशेखरः ३०५

यत्र प्रथमं लघुरनन्तरं गुरुरेवं क्रमेणाशोकपुष्पमञ्जरीविपर्ययेण स्वेच्छया जगण-रगणक्रमेण च जगणान्तं नव गणा लघ्वन्ता वसुनयनवर्णाश्चरणे यदा निवेश्यन्ते, स्वेच्छयोक्तक्रमेण दशैकादश वा प्रतिचरणं नियमेन जगणादिजगणान्तं लघ्ववसानं गणाः स्थाप्यन्ते तदैव दण्डकोऽनङ्गशेखराख्यो भवतीति ॥

यथा—

उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके विजृम्भमाणगौरदीधिती
रतिस्वहस्तनिर्मितः कलाकुतूहलेन चारुचम्पकैरनङ्गशेखरः किमु ।
इति प्रमोदकारिणीं प्रियाविनोदलक्षणां गिरं समुद्गिरन्मुरारिरद्भुतां
प्रदोषकाल संगमोल्लसन्मना मनोजकेलिकौतुकी करोतु वः कृतार्थ-
ताम् ॥ ३०६ ॥

उट्टवणिका यथा—ISI, SIS, ISI, SIS, ISI, SSI, SIS, ISI, SIS, २८×४=११२॥ अत्र चरणत्रये पादान्तगुरोर्विकल्पेन लघुत्वं ज्ञेयमित्यनङ्गशेखरो निवृत्तः । इति दण्डकाः ॥

अथार्धसमवृत्तान्युदाह्रियन्ते—तत्र चतुष्पदी पद्यम् । तद्द्विविधम् । वृत्तजातिभेदेन । तदप्यक्षरसंख्यातं वृत्तम् । मात्रासंख्याता जातिरिति द्विविधम् । तद्वृत्तं पुनस्त्रिविधम् । समार्धसमविषमभेदेनेति । तत्र समं समचतुश्चरणम् । अर्धसमं च यस्य प्रथमं तृतीयं च पदं समानमथ चतुर्थं द्वितीयं च तुल्यं भवति । भिन्नचिह्नचतुश्चरणं विषममिति । तदुक्तं छन्दोमञ्जर्याम्—

'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥
सममर्धसमं वृत्तं विषमं चेति तत्त्रिधा ।
समं समचतुष्पादं भवत्यर्धसमं पुनः ॥
आदिस्तृतीयवद्यस्य पादस्तुर्यो द्वितीयवत् ।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्तितम् ॥'

इति । तत्र मात्रावृत्तक्रमेण समभुक्त्वार्धसममुच्यते । तत्र प्रथमं पुष्पिताग्राच्छन्दः—

द्विजवरकररज्जुकर्णपूर्णौ प्रथमतृतीयपदौ यदा भवेताम् ।
द्विजपदगुरुरज्जुकर्णयुक्तौ यदि चरणावपरौ च पुष्पिताग्रा ॥ ३०७ ॥

इदमप्युदाहरणम् । छन्दोमञ्जर्यां तु प्रकारान्तरेण लक्षणमुक्तम् ॥

अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा ॥ ३०८ ॥

अयुजि विषमे प्रथमे तृतीये चरणे नयुगलरेफतो नगणयुगलरगणतः परो यकारो यगणो भवति । युजि समे तु द्वितीये चतुर्थे च चरणे नजौ नगणजगणावथ च जरगाः जगणरगणगुरवश्च यत्र भवन्ति तत्पुष्पिताग्रानामकं छन्दः ॥

यथा—

करकिसलयशोभया विभान्ती कुचफलभारविनम्रदेहयष्टिः ।
स्मितरुचिरविलासपुष्पिताग्रा व्रजयुवतिर्व्रततिर्हरेर्मुदेऽभूत् ॥ ३०९ ॥

उद्दवणिका यथा—वि० ।।।, ।।ऽ, ।ऽ।, ऽऽ, स० ।।।।, ऽ।।, ऽ, ।ऽ।, ऽऽ.

प्रसरति पुरतः सरोजमाला तदनु मदान्धमधुव्रतस्य पङ्क्तिः ।
तदनु धृतशरासनो मनोभूस्तव हरिणाक्षि विलोकनं तु पश्चात् ॥ ३१० ॥

प्रकारान्तरेणोद्दवणिका यथा—वि० ।।।, ।।।, ऽ।ऽ, ।ऽऽ, स० ।।।, ।ऽ।, ।ऽ।,ऽ।ऽ, ऽ, इति पुष्पिताग्रा निवृत्ता ॥

अथोपचित्रं छन्दः—

विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम् ॥ ३११ ॥

यत्र विषमे प्रथमे तृतीये च चरणे एवंविधे दलेऽर्धे यदि सौ सगणावथ च सलगाः सगणलगुरवो भवन्ति, किं च युजि समे द्वितीये चतुर्थे च चरणे यदि भौ भगणावथ च भात् भगणात् गुरुकौ भवतस्तदोपचित्राख्यमर्धसमं वृत्तमिति । द्विरावृत्त्या श्लोकः पूरयितव्यः ॥

यथा—

मुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनलिप्तम् ।
गगनं चपलामिलितं यथा शारदनीरधरैरुपचित्रम् ॥ ३१२ ॥

उद्दवणिका यथा—वि० ।।ऽ, ।।ऽ, ।।ऽ, ।, ऽ, स० ऽ।।, ऽ।।, ऽ।।, ऽ, ऽ, उपचित्रं निवृत्तम् ॥

अथ वेगवतीछन्दः—

विषमे प्रथमाक्षरहीनं दोधकवृत्तमेव वेगवती स्यात् ॥ ३१३ ॥

विषमे प्रथमे तृतीये च चरणे प्रथमाक्षरहीनं दोधकवृत्तमेव वेगवती स्यात् । समे तु दोधकमेवेति । अतः प्रथमे तृतीये सगणत्रयानन्तरं गुरुः, चतुर्थे द्वितीये च भगणत्रयानन्तरं गुरुद्वयमिति ॥

यथा—

स्मरवेगवती व्रजरामा केशववंशरवैरतिमुग्धा ।
रभसान्न गुरुं गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥ ३१४ ॥

उद्दवणिका यथा—वि० ।।ऽ, ।।ऽ, ।।ऽ, ऽ, स० ऽ।।, ऽ।।, ऽ।।, ऽ, ऽ, वेगवती निवृत्ता ॥

अथ हरिणप्लुता छन्दः—

अयुजि प्रथमेन विवर्जितो द्रुतविलम्बिततो हरिणप्लुता ॥ ३१५ ॥

अयुजि प्रथमे तृतीये च चरणे द्रुतविलम्बिततः प्रथमेन वर्णेन विवर्जिते सति युजि तु द्रुतविलम्बितछन्दसैव तदा हरिणप्लुता छन्दः । एतदुक्तं भवति—प्रथमे तृतीये च चरणे सगणत्रयानन्तरं लगौ, द्वितीये चतुर्थे च चरणे नगणानन्तरं भगणद्वयमथ च रगणमिति ॥

यथा—

स्फुटफेनचया हरिणप्लुता वलिमनोज्ञतटा तरणेः सुता ।

कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥ ३१६ ॥

उद्दवणिका यथा—वि० ।।ऽ, ।।ऽ, ।।ऽ, ।, ऽ, स० ।।।, ऽ।।, ऽ।।, ऽ।ऽ, हरिणप्लुता निवृत्ता ॥

अथापरवक्त्रं छन्दः—

अयुजि ननरलाः गुरुः समे यदपरवक्त्रमिदं नजौ जरौ ॥ ३१७ ॥

अयुजि विषमे प्रथमे तृतीये च चरणे ननरला नगणद्वयरगणलघवः अथ च गुरुः समे द्वितीये चतुर्थे च चरणे नजौ नगणजगणावथ च जरौ जगणरगणौ यत्र भवतस्तदिदमपरवक्त्रं नाम वृत्तम् ॥

यथा—

स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमिवैत्य माधवम् ।

मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमा ॥ ३१८ ॥

उद्दवणिका यथा— वि०, ।।।, ।।।, ऽ।ऽ, ।, ऽ, स० ।।।, ।ऽ।, ।ऽ।, ऽ।ऽ, यथा वा हर्षचरिते—

तरलयसि दृशं किमुत्सुकामविगतिवामविलासलालसे ।

अवतर कलहंसि वापिकाः पुनरपि यास्यसि पङ्कजालयम् ॥ ३१९ ॥

अपरवक्त्रं निवृत्तम् ॥

अथ सुन्दरी छन्दः—

अयुजोर्यदि सौ लगौ पुनः समयोः रभौ रलगाश्च सुन्दरी ॥ ३२० ॥

यत्र अयुजोर्विषमयोः प्रथमतृतीययोश्चरणयोर्यदि सौ सगणद्वयमथ च लगौ लघुगुरू भवतः पुनरपि तादेव, समयोर्द्वितीयचतुर्थयोश्चरणयोः रभौ रगणभगणावथ च रलगा रगणलघुगुरवो भवन्ति, तत्सुन्दरीछन्दः ॥ द्विताराया श्लोकः पूर्वोक्तः ॥

---

१. छन्दोमञ्जर्यां तु 'अयुजोः पुनः सभरा गौ यदि सुन्दरी तदा' इति पाठ उपलभ्यते.

यथा—

यदवोचदवेक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा ।
अपि कंसहरस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥ ३२१ ॥

उद्दवणिका यथा—वि० ॥ऽ, ॥ऽ, ।, ऽ, ।, ऽ, स० ॥ऽ, ऽ॥, ऽ॥, ।, ऽ, यथा वा—'अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः' इत्यादि रघुवंशे। सुन्दरी निवृत्ता ॥

एवमुक्तपरिपाट्यार्धसमवृत्तान्येकाक्षरादिषड्विंशत्यक्षरपर्यन्तप्रस्तारेषु द्वाभ्यां वृत्ताभ्यां स्वबुद्ध्या नामानि धृत्वा सुधीभिरूह्यानि । ग्रन्थविस्तरभीत्या प्रसिद्धान्येव कानिचिद्वृत्तान्यत्रोदाहृतानीति शिवम् । इत्यर्धसमवृत्तानि ॥

अथ विषमवृत्तानि—

तत्र विषमम्—

'यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥'

इति लक्षणलक्षितम् ।

तत्र प्रथममुद्गताछन्दः—

प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे ।
यद्यथ च भनभगाः स्युरथो सजसा जगौ भवतीयमुद्गता ॥ ३२२॥

भोः शिष्याः, यत्र प्रथमे चरणे सजौ सगणजगणावथ च सलौ सगणलघू भवतः, अनन्तरे द्वितीये नगणसगणजगणगुरुकाणि भवन्ति । अथ तृतीये चरणे यदि भगणनगणभगणगुरवः स्युः । अथो चतुर्थे सजसा सगणजगणसगणाः । अथ च जगौ जगणगुरू भवतस्तदोद्गतानामकं छन्दः ॥

यथा—

विललास गोपरमणीषु तरणितनया प्रभोद्गता ।
कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्मिविभ्रमम् ॥ ३२३॥

उद्दवणिका यथा—१ ॥ऽ, ।ऽ।, ॥ऽ।, २ ॥।, ॥ऽ, ।ऽ।, ऽ, ३ ऽ॥, ॥।, ऽ॥, ऽ, ४ ॥ऽ, ।ऽ।, ॥ऽ, ।ऽ।, ऽ,

अथ च—

प्रथमे सजौ यदि मलौ च नसजगुरुकाण्यनन्तरे ।
यद्यथ भनजलगाः स्युरथो सजसा जगौ प्रभवतीयमुद्गता ॥३२४॥

यत्र प्रथमे चरणे सगणजगणमगणलघवः द्वितीये नसजगुरुकाणि । अथ तृतीये चरणे यदि भनजलगा भगणनगणजगणलघुगुरवः स्युः । चतुर्थे सजसाः सगणजगणसगणाः । अथ

च जगौ जगणगुरू यत्र भवतस्तदा तृतीयचरणमात्रजातभेदा भारविमाघयोरुपलभ्यमानत्वादियं प्रकारान्तरेणोद्गता प्रभवतीति ॥

ततश्च किराते यथा—

अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् ।
क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनंजयः ॥३२५॥

उट्टवणिका यथा—१ ॥ऽ, ।ऽ।, ।ऽ।, ।, २ ।।।, ।।ऽ, ।ऽ।, ऽ, ३ ऽ।।, ।।।, ।ऽ।, ।, ऽ, ४ ।।ऽ, ।ऽ।, ।।ऽ, ।ऽ, ।, ऽ,

यथा वा माघे—

तव धर्मराज इति नाम सदसि यदपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथ वा भृशमप्रशस्तमपि मङ्गलं जनाः ॥३२६॥

उट्टवणिका समानैव । उद्गता निवृत्ता ॥

अथ सौरभकच्छन्दः—

त्रयमुद्गतासदृशमेव पदमिह तृतीयमन्यथा ।
जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम् ॥ ३२७ ॥

भोः शिष्याः, यत्र त्रयं प्रथमद्वितीयचतुर्थमिति पदत्रयमुद्गतासदृशमेव । इह सौरभके तृतीयपादमन्यथा । उद्गतापादाद्भिन्नमित्यर्थः । अन्यथात्वमेवाह—जायत इति । तृतीयपदं रनभगैः रगणनगणभगणगुरुभिर्ग्रथितं यत्रैतदीदृशं सौरभकनामकं वृत्तं भवतीति च्छान्दसीयाः कथयन्तीति ॥

यथा—

परिभूतफुल्लशतपत्रवनविसृतगन्धविभ्रमा ।
कस्य हन्त हरतीह हरे पद्मसौरभकला तवाद्भुता ॥ ३२८ ॥

उट्टवणिका यथा—१ ।।ऽ, ।ऽ।, ।।ऽ, ।, २ ।।।, ।।ऽ, ।ऽ।, ऽ, ३ ऽ।ऽ, ।।।, ऽ।।, ऽ, ४ ऽ।ऽ, ।।।, ऽ।ऽ, ।, ऽ, सौरभकं निवृत्तम् ॥

अथ ललितं छन्दः—

नयुगं सकारयुगलं च भवति चरणे तृतीयके ।
तदुदीरितमुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता ॥३२९॥

भोः शिष्याः, यत्र तृतीयके चरणे नयुगं नगणद्वयं सकारयुगलं सगणयुग्मं च भवति तदुरुमतिभिर्ललितमिति नामतमुदीरितमिति । अस्य ललितस्य यदि शेषं सकलं प्रथमद्वितीयचतुर्थपदं यथोद्गतानुरूपमित्यर्थः ॥

---

१. 'चरणे तृतीयके' इति पाठः।

यथा—

व्रजसुन्दरीसमुदयेन कलितमनसा स्म पीयते।

हिमकरगलितमिवामृतकं ललितं मुरारिमुखचन्द्रविच्युतम्॥३३०॥

उद्दवणिका यथा—१ ।।S, ।S।, ।।S, ।, २ ।।।, ।।S, ।S।, S, ३ ।।।, ।।।, ।।S, ।।S, ४ ।।S, ।S।, ।।S, ।S।, S, ललितं निवृत्तम्॥

भवत्यर्धसमं वक्त्रं विषमं च कदाचन।

तयोर्द्वयोरुपान्तेषु छन्दस्तदधुनोच्यते॥ ३३१॥

अथ वक्त्रं छन्दः—

वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्॥ ३३२॥

भोः शिष्याः, युग्भ्यां दलाभ्यां पदाभ्यां मगौ मगणगुरू स्याताम्। अथ च—अब्धेश्चतुर्थाद् वर्णात् परतो यो यगणोऽनुष्टुभ्यष्टाक्षरप्रस्तारे यत्र यत्र 'शेषेष्वनियमो मतः' इति वचनाद्याष्टमो गुर्वेव यत्र तद्वक्त्रमिति वृत्तं ख्यातमिति॥

यथा—

वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम्।

वल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः॥ ३३३॥

उद्दवणिका यथा—१ SSS, S, ।SS, S, २ SS, S, S।S, S, S, ३ S।S, S, ।SS, S, ४ SSS, S, ।SS, S,

अथ च—

युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम्॥ ३३४॥

युजोर्द्वितीयचतुर्थयोश्चरणयोर्दलाभिप्रायेण चतुर्थतो वर्णात् जेन जगणेन पथ्यावक्त्रं (वक्त्रमेव) रूपं प्रकीर्तितम्। शेषं समानम्॥

यथा—

रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे।

आसीद्गोपमृगाक्षीणां पथ्यावक्त्रमधुरस्तुतिः॥ ३३५॥

उद्दवणिका यथा—१ S।S, ।।, SSS, २ SS।, ।, ।S।, S, ३ SSS, ।।, SSS, ४ SSS, ।, ।S।, S,

अपि च—

प्रथमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।

गुरु षष्ठं तु पादानां शेषेष्वनियमो मतः॥ ३३६॥

---

१. 'मुदित' छन्दो०. २. 'विद्युत' छन्दो०.

इति । सर्वत्र वक्त्रप्रकरणे निगदितैव । लक्षणमुपलक्षित विचक्षणैश्छान्दसिकैरिति ॥

यथा—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ ३३७ ॥

उट्टवणिका यथा—SSSI, ISSS,

किं च—

प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम् ।
लोकेऽनुष्टुबिति ख्यातिस्तस्याष्टाक्षरता कृता ॥ ३३८ ॥

तथा नानागणभेदेन विषमवृत्तमेव सकलपुराणादिष्वष्टाक्षरचरण वक्त्रसंज्ञामेव लभत इति विषमवृत्तानि दिङ्मात्रत समुदाहृतानि । शेषाणि महद्धलायुधनिर्मितपिङ्गलवृत्तौ रविकरशम्भुपशुपतिविरचितवृत्तकदम्बकग्रन्थे चावदातमतिभिरूह्यानीत्यलमतिविस्तरेण ॥

अथ गद्यानि—

तत्र—

गद्यं पद्यमिति प्राहुर्वाङ्मयं द्विविधं बुधाः ।
प्रागुक्तलक्षणं पद्यं गद्यं संप्रति गद्यते ॥ ३३९ ॥
अपादः पदसंतानो गद्यं तच्च त्रिधा मतम् ।
चूर्णकोत्कलिका प्रायवृत्तगन्धिप्रभेदतः ॥ ३४० ॥

तत्र—

अकठोराक्षरं स्वल्पसमासं चूर्णकं विदु ।
तद्धि वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत् ॥ ३४१ ॥

यथा—

स हि त्रयाणामेव जगतां पतिः परमपुरुषः पुरुषोत्तमो दृप्तदानवभरेण भङ्गुराङ्गीमवनिमवलोक्य करुणार्द्रहृदयस्तस्या भारमवतारयितुं रामकृष्णस्वरूपेण यदुवंशेऽवततार । य प्रसङ्गेनापि स्मृतोऽभ्यर्चितो वा गृहीतनामा पुंसः संसारपारमवलोकयति ॥ ३४२ ॥

चूर्णकं निवृत्तम् ॥

अथोत्कलिकाप्रायम्—

भवत्युत्कलिकाप्रायं समासढ्यं दृढाक्षरम् ॥ ३४३ ॥

उत्कलिकाप्रायं कल्लोलप्रायमुच्छ्वासमानमित्यर्थः ॥

यथा—

प्रणिपातप्रवणप्रधानाशेषसुरासुरवृन्दसौन्दर्यप्रकटकिरीटकोटिनिविष्टस्पष्टमणिमयूखच्छटाच्छुरितचरणनखचक्रविक्रमोद्दामवामपादाङ्गुष्ठनखरशिखरखण्डितब्रह्माण्डविवरनिःसरत्क्षरदमृतकरप्रकरभासुरसुरवाहिनीप्रवाहपवित्रीकृतविष्टपत्रय कैटभारे क्रूरतरसंसारापारसागरनानाप्रकारावर्तविवर्तमानविग्रहं मामनुग्रहाण ॥ ३४४ ॥

यथा वा—

व्यपगतघनपटलममलजलनिधिसदृशमम्बरतलं विलोक्यते । अञ्जनचूर्णपुञ्जश्यामं शार्वरं तमस्त्रायते ॥ ३४५ ॥

उत्कलिकाप्रायं निवृत्तम् ॥

वृत्तैकदेशसंबद्धं वृत्तगन्धिः पुनः स्मृतम् ॥ ३४६ ॥

यथा—'पातालतालुतलवासिषु दानवेषु' इत्यादि । 'हर इव जितमन्मथो गुह इवाप्रतिहतशक्तिः' इत्यादि वा ।

यथा वा—

जय जय जय जनार्दन सुकृतिजनमनस्तडागविकस्वरचरणपद्म पद्मनयन पद्मापद्मिनीविनोदराजहंस भास्वरयशःपटलपूरितभवनकुहर कमलासनादिवृन्दारकवन्दनीयपादारविन्दद्वन्द्व निर्मुक्तयोगीन्द्रहृदयमन्दिराविष्कृतनिरञ्जनज्योतिःस्वरूप नीरूप विश्वरूप अनाथनाथ जगन्नाथ मामनवधिभवदुःखव्याकुलं रक्ष रक्ष ॥ ३४७ ॥

वृत्तगन्धि गद्यं निवृत्तम् ॥

इति गद्यानि ॥

इत्यादि गद्यकाव्येषु मया किंचित्प्रदर्शितम् ।
विशेषस्तत्र तत्रापि नोक्तो विस्तरशङ्कया ॥ ३४८ ॥

मन्दः कथं ज्ञास्यति सत्पदार्थमित्याकलय्याशु मया प्रदीप्तम् ।
छन्दःप्रदीपं सततो विलोक्य छन्दः समस्तं स्वयमेव वित्त ॥
अब्दे भास्करवाजिगण्डवरसक्ष्मा(१६५७)मण्डलोद्भासिते
माघे मासि सिते दले हरिदिने वारे तमिस्रापतेः ।
श्रीमद्विट्ठलनामनिर्मितवरग्रन्थप्रदीपं मुदे
लोकाना निखिलार्थभावनपरमिमं लक्ष्मीपतिर्निर्ममे ॥

विशिष्टस्नेहभरितं सत्पात्रपरिकल्पितम् ।
स्फुरद्वृत्तदशं छन्दःप्रदीपं पश्यत स्फुटम् ॥
छन्दःप्रदीपकः सोऽयमखिलार्थप्रकाशकः ।
लक्ष्मीनाथेन रचितस्तिष्ठत्वाचन्द्रतारकम् ॥

इत्यालंकारिकचक्रचूडामणिश्रीमद्रायभट्टात्मजश्रीलक्ष्मीनाथभट्टविरचिते पिङ्गलप्रदीपे वर्णवृत्ताख्यो द्वितीयः परिच्छेदः समाप्तः ।

